# युगाचार्य-विवेकानन्दः

( स्तोत्रोपदेशद्विशतीत्यादिसहितम् विवेकानन्दचरितम् )

स्वामी अपूर्वानन्दः




स्वामिविवेकानन्दजन्मशती-जयन्ती-प्रकाशनम्

१९६४

# प्रकाशकस्य निवेदनम्

स्वामिविवेकानन्दमहाराजस्य शततमं जन्मोत्सवमुपलक्ष्य स्मारक-ग्रन्थरूपेण संस्कृतभाषायां तस्य जीवनीग्रन्थस्य प्रकाशनपरिकल्पना शतवार्षिकसमित्या कृता। तदनुसारं प्रायो मासचतुष्टयात्पूर्वं संस्कृत-जीवनी-ग्रन्थस्य मुद्रणकार्यम् आरब्धमभूत्। किन्तु अनेकप्रतिबन्धवशात् प्रतिकूलावस्थावृतत्वाच्च शताब्दीवर्षसमाप्तेः पूर्वं तस्य ग्रन्थस्य प्रकाशनम् अशक्यसम्भवमभवत्। अधुना 'युगाचार्य-विवेकानन्दः' नाम्ना तं जीवनीग्रन्थं प्रकाशमानेतुं वयममन्दानन्दं विन्दामः।

विवेकानन्दस्वामिनः देवभाषायां सविशेषा श्रद्धा प्रीतिश्चास्ताम्। किञ्च तस्या भाषायाः प्रचुरप्रचारे स विशिष्य गुरुत्वमादधानः अवर्तत। स एतावदप्याबभाषे "···स्त्रीषु तथा निम्नश्रेण्या मानवेषु च संस्कृतशिक्षायाः विस्तारः सर्वप्रथममावश्यकः। ···अये निम्नवर्गीयाः लोकाः! युष्मानहं वक्तुं प्रभवामि यत् युष्माकमुन्नतेः एक एवोपायः— संस्कृतशिक्षा अस्ति, ···तथा उच्चवर्णानां शिक्षायाः स्वायत्तीकरणम्।"

संस्कृतभाषायां स्वामिनः गाढा श्रद्धा तथा तस्या भाषायाः प्रचारस्य प्रयोजनीयता च तस्यान्तरस्य गभीरतमप्रदेशस्य कियत् स्थानमधिकृतमकुरुताम् इत्यस्य उपरितनोद्धृत्या आंशिकः परिचयः सम्प्राप्यते। प्राचीनार्यऋषीणां सदुपदेशाः एवं सनातनवैदिकधर्मस्य मूलग्रन्थसमूहा अपि संस्कृतभाषायामेव रचिताः विद्यन्ते। अतः

संस्कृतभाषायाः शिक्षां समासाद्य धर्मस्य यथार्थतत्त्वानामधिगतिं विना अस्माकं शिक्षणं सम्पूर्णतां न गच्छति। आ समुद्रात् हिमाचलं यावत् अवस्थितानां समग्रहिन्दुजातीनां सामग्रिकमैक्यस्थापनमपि संस्कृतशिक्षाया एकमात्रबहुलप्रचारेणैव सम्भवति।

अयं 'युगाचार्य-विवेकानन्दः' ग्रंथलेखकरचितस्य वंगभाषा-निबद्धस्य 'युगप्रवर्तकविवेकानन्द'-नामक-जीवनीग्रन्थस्य संस्कृतानुवादो विद्यते। स्वल्पपरिसरायामस्यां जीवन्यां पुरुषप्रवरविवेकानन्दस्य सर्वांगसुन्दरं रूपं प्रकटितमस्ति। स्वामिनो जीवनस्य अनेका गुरुत्व-पूर्णाः घटनाः, तस्य विपुला क्रियाशक्तिः, स्वदेशप्रीतिः, अतुला गुरुभक्तिः, आध्यात्मिकसाधनाः, देशविदेशेषु भावप्रचारः, भारतस्य नवजागरणे भूरिशक्तिसंक्रमणम्, पाश्चात्यजगदुपरि स्वामिनो जीवनस्य वाण्याश्च अविलोपनीयः प्रभावः, श्रीरामकृष्ण-विवेकानन्दयोः दिव्यलीलायाः अपरूपाणि कथानकानि, एवमादयः सर्वेऽपि विषयाः संक्षेपेणापि हृदयग्राहिरूपेण अस्मिन् ग्रन्थे व्यावर्णिताः सन्ति। स्वामिन आविर्भाव-कारणम्, भारतस्य तथा संसारस्य तत्कालीनाध्यात्मिक-राजनीतिक-सामाजिकावस्था, प्रचीनभारतस्य धार्मिक आदर्शः, तथा तत्र पुनः प्रतिष्ठापुरस्सरं नूतनभारतस्य संघटनम्, समस्ते संसारे वेदान्तवाण्याः प्रचारद्वारा मनुष्यजातेरासन्नध्वंसमुखात् परित्राणपूर्वकं विश्वस्मिन् विश्वमानवता-विश्वभ्रातृत्वयोः तथा साम्यमैत्री-प्रतिष्ठायाः सुस्पष्ट-मिंगितम् इत्यादयो गरिमपूर्णा विषयाः महता साफल्येनास्मिन् ग्रन्थे लिपिबद्धाः कृताः। उपयुक्तानां पादटिप्पणीनां संयोजनस्य फलस्वरूप-तया विभिन्नेषु क्षेत्रेषु स्वामिनोऽवदानानि पाठकानां समक्षं सुस्पष्टं

दिवालोकवत् प्रत्यभासन्त। तत्त्वैः तथ्यैश्च पूर्णोऽयं ग्रंथः संक्षिप्तोऽपि अखिलभारतस्य संस्कृताभिज्ञानां कृते आदर्शग्रंथपदमधिष्ठातुमर्हति।

ग्रन्थेऽस्मिन् स्वामिनो जीवनघटनातिरिक्ततया तत्सम्बन्धे पञ्चदश स्तोत्राणि तथा प्रकाशकानुमत्या "वीरवाणी"-पुस्तके प्रकाशिताः श्रीविवेकानन्दरचिता "अम्बास्तोत्रं" "शिवस्तोत्रं" "The Song of the Free" "The Song of Sannyasin" (श्लोकात्मनानूदितं) कृतयः, श्लोकबद्ध-"संक्षिप्तस्वामिविवेकानन्दचरितं", "स्वामिविवेकानन्दोपदेशद्विशती" (श्लोकरूपेण), "श्लोकशतात्मकं स्वामिविवेकानन्दचरितं" एवमादयो निबन्धाः समावेशिताः सुवर्णसौरभायिताः ग्रन्थस्य महत्तां प्रयोजनीयतां च समेधयन्ति। स्वामि-सम्बन्धेषु स्तोत्रेषु दश स्तोत्राणि प्रकाशकसम्मत्या प्राचीनाया 'उद्बोधन'-पत्रिकायाः संगृहीतानि।

अस्य ग्रन्थस्य संस्कृतानुवादं काशीनिवासी पण्डितप्रवरः श्रीगोपालचन्द्रचक्रवर्ति-वेदान्तशास्त्री प्रणिनाय। पाण्डुलिपेः संशोधनम् अध्यापकवरेण्यः पण्डितवरः श्री टी० ए० भण्डारकर-साहित्याचार्यः व्यधत्त। ग्रन्थसम्पादनञ्च वाराणसीहिन्दूविश्वविद्यालये संस्कृतपालीविभागप्रधानाध्यक्षः काव्यतीर्थ-न्यायाचार्यः (प्राप्तसुवर्णपदकः) डाक्टर-श्रीसिद्धेश्वरभट्टाचार्यः एम० ए० डी० लिट्-महोदयः समकार्षीत्। एतान् सर्वान् महाभागान् प्रति निजमान्तरं धन्यवादं विज्ञापयामि। एतद्व्यतिरेकेण अन्येऽपि भूयांसो महानुभावा अस्य ग्रन्थस्य प्रकाशनकार्ये अनल्पं साह्यमाचरन्। वयं सर्वेषामेषां पुरः आन्तरिकीं कृतज्ञतां धन्यवादेन समं विनिवेदयामः।

वयं बाढं आशास्महे यत् भारतस्य सर्वेष्वपि प्रान्तेषु एवं वैदेशिकानां संस्कृतभाषामोदिनां निकटे ग्रन्थ एष समादरभाजनं भविष्यति इति। कृतेऽपि सविशेषप्रयासे पुस्तके केचित् मुद्रणप्रमादा अवस्थिताः, वयमेतस्य कृते नितरां दुःखिताः स्मः।

स्वामी सम्बुद्धानन्दः
साधारणसम्पादकः, स्वामिविवेकानन्द-शतवार्षिकीसमितिः
कलकत्ता।

# प्रस्तावना

स्वामिविवेकानन्दो द्विषष्टिवर्षेभ्यः प्राक् अस्माज्जगतः प्रस्थितः, किन्तु तस्य जीवनस्य वाण्याश्च प्रेरणा साम्प्रतमपि संजीवितास्ति, एवं अस्मिन् देशे विदेशेष्वपि तस्य जीवनं वाणी च समाद्रियमाणे विद्येते, तथा ते तावदुत्तरोत्तरं सर्वस्तराणामपि मानवानामनुप्रेरणां दत्तः। स्वामिमहाभागः केवलं एकोनचत्वारिंशद्वर्षमेव भौतिकं शरीरमादायात्रावर्तत। एतस्मिन् स्वल्पे परिमिते जीवने स यत्किमप्यकरोत् तत् याथार्थ्येनैव दैविककार्यमासीत्। तस्य गुरुः भगवान् श्रीरामकृष्णदेवः तत्सम्बन्धे यद् यद् अलौकिकं दर्शनम् अकार्षीत् तत् सर्वथा काल्पनिकं नाविद्यत। स्वामिजीवनस्य अनुसन्धानकर्तॄणां तथा विचारशीलवाचकानां पुरः सहजतयैवेदं प्रतिभासेत।

श्रीविवेकानन्दस्य वैयक्तिकम् आध्यात्मिकसाधनं, परिव्रज्या, तदीयं पवित्रचरितं, गम्भीरं पाण्डित्यं, गाढं स्वदेशप्रेम, दीनहीनान् निर्यातितान् तथा अवहेलितान् च प्रति तदीया उद्वेला सहानुभूतिः, तदीये वीर्यतेजसी, ज्ञानं, वैराग्यं तथा मानवसेवा, तत्कृतं भारतीयजातीयताया उद्बोधनं, विश्वहिते स्वात्मनियोगः तथा प्राच्ये प्रतीच्ये च चिन्ताजगति तदीयमवदानम् इत्यादयो गुणाः प्रत्येकं निजमहत्तया, मनोहारितया एवं गरिम्णा च अस्माकं मनः आकर्षन्ति। तदीयमपूर्वं जीवनं सर्वदेशेषु सर्वकालेषु चानुशीलनार्हं विद्यते।

समाजस्य उच्चावचाः समेऽपि मानवाः ततः प्रचुरशिक्षां उद्दीप्तिञ्च प्राप्तुं शक्नुवन्ति। एकाधिकरणा इयती शक्तिः, एतावतां सद्गुणानामेकत्र सन्निवेशश्च सुतरां दुरवापौ। स्वामी वस्तुतः एव एकः पुरुषतल्लज आसीत्।

स्वामी विवेकानन्दः यथा वंगदेशस्य तथैव समस्तस्य भारतस्य तथा कृत्स्नस्य जगतोऽप्यासीत्। तस्य जीवने कापि भौगोलिकी सीमारेखा नाविद्यत। चिन्तनं, भावुकता तथा कार्यस्य गाम्भीर्यं एवं व्यापकत्वं तच्चरित्रासक्तं यया विधया परिलक्ष्यन्ते तथा तदन्यत्र दुरवापम्। स एकस्य नवयुगस्य मूर्तिमान् आदर्शमानव इव वर्तते। तरुणेभ्यः प्रवीणेभ्यः पुरुषेभ्यः भारतीयेभ्यः तथा वैदेशिकेभ्यश्च प्रत्येकव्यक्तये तस्य सुस्पष्टाः शताधिकाः कल्याणवाण्यः समुपलभ्यन्ते। तादृशा लोकशिक्षकाः संसारस्येतिहासे न तावद् भूयांसो लभ्यन्ते। स आसीत् एको महान् युगप्रवर्तको महापुरुषः।

स्वामिनः प्रादुर्भावोऽभवत् अनेकशताब्दीभ्यो निपीडितानां भयत्रस्तानां विद्वेषघृणाभ्यां विच्छिन्नानां मानवानां मुक्तेः, अभयस्य तथा एकतायाः आलोकं लोकयितुम्। अयं प्रकाशः यथा भारते आवश्यकः तथैव संसारे सर्वत्र। स एनमालोकं निजमहागुरोः श्रीरामकृष्णदेवस्य जीवनात् तथा भारतवर्षस्य वेदान्तमन्दर-मथिताद् उपनिषत्क्षीरार्णवात् आनैषीत्—यत्र च मानवात्मनः शाश्वते महिमाध्वनि ध्वान्तं किमपि पिधानं नादधीत। प्रत्येकं मनुष्यः भगवतः प्रतीकः, भगवतः अंशः—'जीवः शिवः।' मानवात्मा चिरमुक्तः अस्ति। स च समस्तभयानां

तथा मोहस्य च परे पारे वर्तते। मानवात्मनः प्रतिष्ठा सर्वग्राहिण्यां आत्मीयतायां तथा प्रेम्णि कृतपदा। स्वामिनो निजजीवनं उपनिषद्-वाण्या उज्ज्वलमुदाहरणं विद्यते।

स्वतन्त्रे भारते स्वामिविवेकानन्दस्य वाणी-जीवनयोः भूयिष्ठाना-मालोचनानुशीलनानां नितान्तमावश्यकता वर्तते। स्वतन्त्रताप्राप्तेः सप्तदशवत्सरेषु अतिलंघितेष्वपि याः समस्याः अस्माकं जातीयं जीवनं पादाक्रान्तं विधाय निदधिरे, यासां समाधानं नः दुष्करम्, तासां समस्यानां मीमांसायाः अनेके संकेता अस्माभिः स्वामिनो वाणी-जीवनाभ्याम् आसादयितुं शक्यन्ते। यद्यपि स्वामिमहोदयः राजनीति-पथपान्थो नासीत्, तथापि स भारतीयजातीनां संघटनस्य एकतायाः तथा बलाधानस्य कृते सुचिन्तितान् अनेकान् निर्देशान् लिपिबद्धान् व्यधात्। समाजनायकान् तथा देशस्य कर्मठानपि स भूयांसि सावधान-वचांसि समश्रावयत्। तदनुधावनस्य अवसरोऽप्युपस्थितो विद्यते।

स्वामिविवेकानन्दं प्राचीनेतिहासाभ्यन्तरे आबद्ध्य तत्स्थापनं न तावदुचितम्। विंशशताब्द्या उत्तरार्धे या भावधाराः तथा घटनापरं-पराणां याः सूचनाः संलक्ष्यन्ते सर्वमिदं नूनं स निजालौकिकदूरदृष्ट्या निरीक्षितवानिव। तदर्थं सावधानवाणीमप्यश्रावयत् तथा मार्गमपि निरदिशत्। तस्मादस्य युगस्य मानवानां स एकोऽन्तरंगकल्याणसहचरः आस्ते। स्वजीवनसंग्रामे, भाविकल्पनादीनामन्तराले यदीममलोक-सामान्यं पुरुषप्रवरं अनुगच्छामः तदास्माकं लाभादृते हानिर्न भविष्यति। स्वामिनं प्रति 'युगाचार्य' इति कथनमौपचारिक-मालंकारिकं वा नास्ति, इदं प्रत्यक्षरं तात्त्विकमेव।

प्रस्तुतो ग्रन्थः स्वामिविवेकानन्दस्य शतवार्षिकोत्सवावसरे रचितोऽभवत्। यदि पाठक-पाठिकाः एतस्याध्ययनेन स्वामिनि श्रद्धालवो भवन्ति, तद्विषये समधिकं ज्ञातुं प्रेरणां प्राप्स्यन्ति चेत् तदा निजप्रयासं सफलं मंस्यामहे। इदमादर्शपुरुषचरितं विशेषतः सुरभाषानिबद्धं सुवर्णसौरभं मन्येत विज्ञवाचकैः इति मन्महे।

स्वामी अपूर्वानन्दः

# युगाचार्य-विवेकानन्दः

सिद्धान्तमौपनिषदं शुद्धान्तं परमेष्ठिनः।
शोणाधरं महः किञ्चिद् वीणाधरमुपास्महे ॥

१

विशालस्यैकस्य वटवृक्षस्य तले स्थिता यदा तस्य विपुलपरिधेरभिमुखमवाचो भूत्वा वयं विस्मयदृशा पश्यामस्तदानीं किं चिन्तयितुं शक्नुमो यदेकस्मिन् सर्षपसमानलघुतरबीजे इयान् विशालो भूरुहो गुप्त आसीत्? तथैव १८६३ ईसवीयजनवरीमासस्य १२ तारिकायां (१२६९ वंगाब्द-पौषस्य २९ दिने) कृष्णपक्षस्य सप्तम्यां तिथौ कलिकत्तास्थसिमलाविभागस्थितस्य विश्वनाथदत्तस्य भुवनेश्वरीदेव्याश्च प्रथमपुत्ररूपेण यो बालकः समुदपद्यत, को जानीयात् तस्य ऊनचत्वारिंशद्वर्षदेशीयजीवने एव एतादृश्या आश्चर्यजनकप्रतिभाया महाशक्तेश्च विकासो भविष्यति? यस्य च प्रभावो देशकालसीमाबद्धो न भविष्यति,—यश्च विभिन्ने काले विभिन्नपरिवेष्टन्यां सर्वविधनरनारीणां हृदयेषु निर्भीककल्याणसाधनस्यावेदनम्, मानवात्मनः शाश्वतमहिमानं, सत्य-न्यायमैत्रीणां च ज्वलदनुप्रेरणां जागरयिष्यतीति को जानीते स्म?

कमनीयकान्तिमान् देवशिशुरसौ क्रमशः प्रियदर्शन-प्रतिभामण्डितशौर्यवीर्यपराक्रमनरशार्दूलतुल्य-सौरभमय-तरुणयूनो रूपेण यदा रूपान्तरितोऽभवत्, तदानीमपि केनापि न ज्ञातं यदयमेव नरेन्द्रनाथदत्तः कालान्तरे विश्ववरेण्यस्वामिविवेकानन्दनाम्ना विश्रुतो भविष्यति।

अष्टादशवार्षिकं नरेन्द्रनाथं प्रथमतः पश्यन्नेव श्रीरामकृष्णदेवः पर्यचिनोत्। स परिज्ञातवान् यत् कोऽयं नरेन्द्रनाथः, कथं च जन्म गृहीतवान्। सहैव च तदीययोगदृष्टिसम्मुके नरेन्द्रनाथस्य सम्पूर्णमपि जीवनचित्रं दिनप्रकाशवत् प्रकाशितमभूत्।...

एकदा दक्षिणेश्वरे श्रीरामकृष्णगृहे केशवचन्द्रसेन-गोस्वामिविजय-कृष्णादयो ब्राह्मनेतार उपविष्टा अभूवन्। युवकनरेन्द्रनाथमाष्टरमहाशय-प्रभृतयो भक्ता अपि तत्रोपस्थिता आसन्। अनेकप्रकारेण ईश्वरीयप्रसङ्गे समालोचना बभूव। केशवविजयादिषु गतेषु नरेन्द्रनाथाभिमुखं स्नेह-दृशा समीक्ष्य श्रीरामकृष्णदेवेन प्रोक्तम्—"दृष्टं मया, केशवो यस्या विशेषशक्तेरुत्कर्षेण जगद्विख्यातोऽभवत्, नरेन्द्रस्याभ्यन्तरे तादृश्यो-ऽष्टादशशक्तयः परिपूर्णमात्रया विद्यन्ते।"... तेनान्यदपि व्याहृतम्—"विलोकितं मया, केशवविजयाभ्यन्तरं दीपशिखयेव ज्ञानालोकेन प्रकाशते, किन्तु नरेन्द्रस्याभ्यन्तरे समुदितो ज्ञानरविर्मायामोहलेशमपि निराकुर्वन्नास्ते।"

श्रुत्वेदं नरेन्द्रनाथस्तस्याभिमुखमेव प्रतिवादं कुर्वन्नाह—"महाशय, किमुच्यते? एतादृशवार्ताप्रतिपादनेन लोका भवन्तं विक्षिप्तं कथ-यिष्यन्ति, जगद्विख्यातः केशवसेनः, महामना विजयगोस्वामी च कुतः, कुतश्च मादृशो नगण्य एकः कालेजस्य छात्रः! भवान् एताभ्यां सह मम तुलनां कृत्वा पुनरेतादृशीं वार्तां कदापि न कथयतु।"

विहसन् श्रीठाकुरः प्रोवाच—"किं करोमि पुत्र, त्वमवधारयसि अहमेवेदं ब्रवीमि! माता (जगदम्बा) मां दर्शयति, तदैवाहं कथयामि।"

नरेन्द्रनाथस्य दक्षिणेश्वरागमनात् पूर्वं श्रीरामकृष्णदेवेनैकमलौकिकं दर्शनं कृतम्। अत एव तेन नरेन्द्रनाथस्वरूपसम्बन्धे सर्वमेव परिज्ञातम्। स होवाच—"एकदाऽहमपश्यम्—मनः समाधिपथेन ज्योतिर्मयमार्गेण

उपरि गच्छदस्ति, चन्द्रसूर्यनक्षत्रमण्डितं स्थूलं जगदतिक्रामत्—मनो भावजगति सूक्ष्मे पूर्वं प्रविवेश।··· उभयतो मार्गमनेकदेवदेवीनां भावघनविचित्रमूर्त्तयो विराजमाना अदृश्यन्त। क्रमशो मन उक्तराज्यस्य चरमसीमानमध्यरोहत्। तत्र मया दृष्टम्—एकं ज्योतिर्मयं व्यवधानं प्रसारितं भूत्वा खण्डमखण्डं च राज्यं पृथक् कुर्वदास्ते।··· किन्तु द्वितीये क्षणे परिलक्षितम् यद् दिव्यज्योतिर्घनतनवः सप्त प्रवीणा ऋषयः समाधिस्थाः समुपविष्टाः सन्ति। एतद् विज्ञातं यत् ज्ञानपुण्ययोस्त्यागप्रीत्योर्मानवानां का कथा, देवदेवीनामपि परस्तादेते सन्तिष्ठन्ते। विस्मितो भूत्वा एतेषां महत्त्वविषये परिचिन्तयन्नहमवालोकयम्—पुरतोऽवस्थिताखण्डगृहस्य भेदविरहितसस्वरसज्योतिर्मण्डलस्यैकांशो घनीभूतो भवन् दिव्यैकशिशुरूपेण परिणतोऽभवत्। देवशिशुरसौ तेषाम् ऋषीणामेकस्य समीपं गत्वा स्वीयसुललितबाहुभ्यां प्रेमपूर्वकं तस्य कण्ठदेशमालिलिङ्ग। तदनन्तरं च वीणाविनिन्दिकया निजामृतमयवाण्या सादरं शब्दापयन् तं समाधितो व्युत्थापयितुं प्रयत्नमकार्षीत्। तदीयसुकोमलप्रेमपूर्णस्पर्शात ऋषिः समाधितो व्युत्थितो भूत्वा बालकमपूर्वमिममर्धोन्मुक्तप्रसन्ननिर्निमेषनेत्राभ्यामपश्यत्। ऋषेर्मुखमण्डलस्य प्रसन्नोज्ज्वलभावमवलोक्येदं प्रतीयते स्म यदयं बालकोऽनादिकालतस्तस्य सुपरिचितो हृदयधनमिवासीत्। तदानीं देवशिशुरयमसीमानन्दं प्रकाशयन् तमवोचत्—'अहं गच्छामि, भवताऽपि मया सार्धमागन्तव्यम्।'

तदनुरोधात् ऋषिः किमपि नोक्तवान्, किन्तु स्वकीयप्रेमपूर्णनयनाभ्यां नैजामान्तरिकीं सम्मतिमसौ प्रकटयाञ्चकार। ततश्च तथैव प्रेमदृशा कियत्कालं बालकं विलोकयन्नसौ पुनः समाधौ न्यमज्जत्। ततो मया विस्मितेनावलोकितम्—तदीययोः शरीरमनसोरेकांशः समुज्ज्वलज्ज्योतिः-

स्वरूपेण परिणमन् विलोममार्गतो धराधामावतरन्नस्ति । नरेन्द्रमवलोकयतैव मया परिज्ञातं यदयमेवासौ ऋषिः ।"*

श्रीरामकृष्णदेवेनान्यदपि प्रोक्तम्—"नरेन्द्रः सहस्रदलकमलसमानः । अनेकेऽतीतसंख्या जना अत्र समायान्ति, किन्तु नरेन्द्रतुल्य एकोऽपि नागच्छत् ।"

* * *

कन्सररोगसमाक्रान्तः श्रीरामकृष्णदेवः काशीपुरोद्यानभवनेऽतिष्ठत् । जीवकल्याण-स्वरूपकार्यसमाप्तेरनन्तरमिदानीमसौ महाप्रस्थानाय प्रतिष्ठमानोऽभूत् । एतत्कठिनरोगस्याभ्यन्तरेऽपि तस्य विश्रान्तिर्नासीत् । विशेषतस्त्यागिनः शिष्यान् असौ साधनभजनत्यागतपस्यादिमाध्यमेन युगचक्रपरिचालनाय प्रस्तुतान् कर्तुं प्रावर्त्तत । नरेन्द्रनाथस्यापि मनसि तदानीं निर्विकल्पसमाधिमधिरोढुं तीव्रतराऽऽकांक्षा प्रादुर्बभूव । तेन श्रीठाकुरः साग्रहं प्रोक्तः—"मम समीहा भवति, यदहमपि शुकदेव इव पञ्चषदिनानि यावन्निरवच्छिन्ने समाधौ तिष्ठेयमिति । तदनन्तरमपि केवलं देहरक्षायै किञ्चिन्नोचैरवतीर्य पुनः समाधावेव निमज्जेयमिति ।"

नरेन्द्रनाथस्य कातरामभ्यर्थनामाकर्ण्य सहसैव भावान्तरमवस्थितः श्रीठाकुरो निर्भर्त्सयन् तमुवाच—"हन्त, हन्त, त्वमेव महानाधारः, तवैव मुखात् एतादृशी वार्ता ! मयाऽवधारितं यत् त्वमेको विशालवटवृक्ष इव भविष्यसि, तव च्छायायां च सहस्रशः स्त्रीपुरुषा आश्रयमङ्गीकरिष्यन्ति—एतन्नानुष्ठाय निजामेव मुक्तिमिच्छसि ?"...

नरेन्द्रनाथस्यैतत्परिज्ञातमभूत् यत् श्रीठाकुरस्य हृदयं कियन्म-

---

* श्रीरामकृष्णदेव एव स्वयं तद्देवशिशुरूपं गृह्णन् ज्योतिर्मण्डलस्यान्यतमस्य ऋषेः कण्ठमालिङ्गन् स्वीयलीलासहचररूपतो नरदेहेऽवतरणाय तम् अनुरुरोध ।

हृदस्ति । तदीयमन्तःकरणं पश्चात्तापपरिपूर्णमभवत् । निर्भर्त्सनमाकर्ण्य स मौनमवलम्बमानोऽश्रूणि व्यमुञ्चत् ।

किन्तु नरेन्द्रनाथस्याभ्यर्थनामिमां श्रीठाकुरः पर्यपूरयत् । एतस्याः घटनायाः कतिचिद्दिनानन्तरमेकदा नरेन्द्रनाथः काशीपुरस्योद्याने ध्यानाय समुपविवेश । तदीयं मनः क्रमशो निर्विकल्पसमाधिमध्यरोहत् । शरीरं च स्थाणुवन्निश्चलं बाह्यतो मृतवत्प्रतीयते स्म । स च देहातीत-सच्चिदानन्दसत्तारूप-स्पन्दनविहीने गभीरसमाधौ न्यमज्जत् । नरेन्द्र-नाथस्य तादृशीमवस्थामवलोक्य तस्यैको गुरुभ्राता श्रीठाकुरस्याभ्यर्ण-मुपेत्य प्रोवाच—"नरेन्द्रो मृतः ।"

श्रीरामकृष्णदेव उपर्यासीत् । निम्नस्थे प्रकोष्ठे नरेन्द्रनाथः समा-धिस्थो बभूव । स सर्वं वेद प्रावोचच्च—"साधु संवृत्तम् । त्यज, तद-वस्थायामेवासौ कञ्चित्कालं तिष्ठतु । एतदर्थमेवासौ मामाकुलित-मकरोत् ।"

बह्वतीतायां रात्रौ नरेन्द्रनाथस्य समाधिर्भग्नः । तदवस्थ एव स प्रोवाच—"मम शरीरं कुत्र ?"··· शनैः शनैः सहजां दशामधिगत्य स उपरिस्थे प्रकोष्ठे श्रीठाकुरस्य समीपं ययौ । तदीयं मनः परिपूर्णमासीत् समाधिशान्त्या । शिरो नमयित्वा स श्रीठाकुरस्य सम्मुखं तस्थौ । तमवलोक्यैव गंभीरस्वरेण श्रीठाकुरो जगाद—"किं भोः ! सम्प्रति तु माता त्वां सर्वमदर्शयत् । यत् त्वया दृष्टम्, तत्सर्वमिदानीं निरुद्धं स्थास्यति । एतर्हि त्वया मातुः कार्यमनुष्ठातव्यम् । मातुः कार्ये समनुष्ठिते त्वयेयमवस्था पुनः प्राप्स्यते ।"

नरेन्द्रनाथस्य चेतोऽक्षयशान्त्या परिपूर्णमासीत्, मौनमाश्रयन्नसौ निम्नदृष्टिरस्थात् । अत एव हि नरेन्द्रनाथः परवर्त्तिनि काले विवेका-नन्दस्वामिरूपेण समस्तेऽपि भूमण्डले योगारूढपदमारुह्य कार्यमनु-ष्ठातुमशक्नोत् । यथा भगीरथः सुरनदीं पृथ्वीतलमवातारयत्, तथैव

हि श्रीरामकृष्णो ज्योतिर्मण्डलस्य महान्तम् ऋषिं नररूपेण जगत्त्राणाय ध्यानभूमितोऽवतारयामास। सम्पूर्णोऽपि संसारः, विशेषतो भारतं स्वामिनो विवेकानन्दस्य हेतुना श्रीरामकृष्णस्य चिरायाधमर्णं स्थास्यति।... तस्मिन् दिवसे श्रीठाकुरेण कला (कुञ्चिका, 'कुञ्जी') स्वहस्ते किल स्थापिता, तस्य च समाधिमार्गो निरुद्धः, अत एवासौ विश्वप्रेमिकतां भजन् जीवदुःखकातर आर्तत्राणपरित्राणपरायणः स्वामी विवेकानन्द-नाम्ना विख्यातो बभूव।

स एव रामकृष्णस्याभूद् वाणी। तस्याभ्यन्तरत एव श्रीरामकृष्ण-देवेन स्वकीयो युगधर्मः सम्यक् संस्थापितः, समस्तमानवजातिहित-साधनाय प्रचारितश्च।

श्रीविवेकानन्दस्वामिनो विषये श्रीठाकुरस्य व्याहरणमक्षरशः सत्यं प्रमाणितम्। स्वामिमहोदयः क आसीत्, विश्वकल्याणाय तेन किमनुष्ठितम्, सर्वेषामपि तेषामालोकनालोचनादिसमयः समायातोऽस्ति। तेन प्रतिपादितमिदं—"यदि कश्चिदन्योऽपि विवेकानन्दो भवेत् तदानीमसाववधारयेत् यद् विवेकानन्देन किमनुष्ठितम्।"

तेनान्यदपि प्रतिपादितम्—"यन्मया प्रदत्तमस्ति तत्सार्धैकसहस्र-संवत्सरस्याशनमस्ति।" चिन्ताजगति विश्ववासिनां कृते सार्धैकसहस्र-वर्षस्य भोजनं तेन प्रदत्तम्। साम्य-मैत्री-स्वाधीनता-विश्वभ्रातृत्व-विश्व-मानवतादीनां, विशेषतश्चाध्यात्मिकक्षेत्रस्य कृते स्वामिना ये किल भावाः प्रदत्ताः, ते हि जगतः कल्याणाय विश्वशान्त्यै च विभिन्नधाराभ्यन्तरतः कार्यकारितां प्रपद्यमाना भवन्ति। स्वामिनोऽमोघा भावधारैव सांसारिक-समस्तचिन्ताशीलान् मनुतनुजनुषः समुद्दीप्तान् प्रकुरुते। स हि भावरूपेण सदैव जागर्ति सहस्रशो हृदयेषु चानुप्रेरणां प्रयच्छति।

* * *

स्वामिनः पिता विश्वनाथदत्तः कलिकत्तास्थस्य हाईकोर्टनामक-

प्रधानन्यायालयस्यैको महान् एटार्नीः आसीत्। तस्य बुद्धिरतितीक्ष्णा मेधा च प्रबला बभूव। विद्यायां बुद्धौ ज्ञानगौरवे च न तस्य तुलां कोऽपि बिभर्त्ति स्म। स चैको महान् उदारमनाः संसारे समुदपद्यत।... बाईबिले, फारसीभाषाकवेः हाफिजस्य च आयतेषु तस्य निरतिशयं प्रेमाविद्यत। तेन बहूनि धनान्यर्जितानि। धनानां व्ययोऽप्युदारहस्तेनाक्रियत। दानं परोपकारोऽपि पर्याप्तं यथेष्टञ्चाविद्येताम्। पाकनिर्माणकर्मणि स हि दक्षोऽभवत्। लोकेभ्यो भोजनदानं तस्मै बहु रोचते स्म। दयाऽपि इयती समभूद् यद् बहून् निर्धनान् दूरसम्पर्कवतः कुटुम्बिनश्च महताऽऽदरेण पर्यपालयत्। तेषां मादकपदार्थसेवनार्थं द्रव्यदानेऽपि न संकुचितो बभूव। प्राप्तवयस्को भूत्वा यदा नरेन्द्रनाथस्तान् निष्कर्मशीलान् पालयितुं परिपोषयितुं चापत्तिमकरोत्तदा विश्वनाथदत्तेन प्रोक्तम्—"जीवनं कियद्दुःखमयमितीदानीं किं त्वं ज्ञास्यसि ? यदाऽवधारयिष्यसि, तदा तेभ्यो दुःखेभ्यः क्षणिकमुक्तिमधिगन्तुं ये मादकं वस्तु निषेवन्ते, तानपि त्वं सकरुणया दृशा द्रक्ष्यसि।"

विश्वनाथदत्तः संगीतानुरागवान् कविताप्रियश्च समभूत्। तदीयविराड्व्यक्तित्वान्तराले हृदयमेकं स्नेहप्रवणं बभूव। तस्य स्नेहात् करुणायाश्च कोऽपि वञ्चितो नाऽभवत्। प्रयोजनातिरिक्तानपि शकटीघोटकादीन्, कर्मकरान्, कर्मचारिणश्चारक्षत्। तेनानेके निर्धना मानवास्तस्य गेहे प्रतिपालिता बभूवुः।

मातुर्भुवनेश्वरीदेव्या अपि चरित्रमनुपममासीत्। असौ निष्ठावती, धर्मप्राणा हिन्दुनारीणामादर्शभूता औदार्यादिगुणविभूषिता महिलासु रत्नसमाना, अत एव तु रत्नगर्भाऽभूत्। हिन्दुसमाजे स्त्रियः शक्तिमूलम्। तासां व्यक्तित्वचरित्रप्रभावो विशेषरूपतः सन्तानेष्वापतति।*

---

* स्वामिना विवेकानन्देन परवर्त्तिनि काले प्रोक्तम्—"स्वीयज्ञानविकासायाऽहं स्वमातुरधमर्णोऽस्मि।" अन्यदप्यभिहितम्—"येन स्वमातुः पूजा

भुवनेश्वरी विशिष्य बुद्धिमती कर्मकुशला भक्तिमती च बभूव । शरीर-मनसोः सौन्दर्यहेतुनाऽसौ सर्वजनप्रियत्वमगच्छत् । किन्तु पत्युर्धर्म-भावेन सह तस्याः सर्वांशतो नासीन्मेलनम् । देवदेवीषु भुवनेश्वरी देवी पूर्णं विशश्वास । पूजां प्रार्थनां च नित्यमन्वतिष्ठत् । रामायण-महाभारतादिग्रन्थास्तस्याः कण्ठस्था अभूवन् । सा पूर्णरूपेण हिन्दुरमणी । तादृशी तेजस्विनी सर्वगुणसम्पन्ना च महिला विरलैव बभूव ।

अविच्छिन्नरूपेण चतस्रो बालिकाः समुदपद्यन्त । तासु द्वे अकाले कालकवलिते जाते । कोऽपि बालको न बभूव । अत एव विश्वनाथदत्तो भुवनेश्वरी देवी च विशेषदुःखमनुभवतः स्म । एतादृशो महान् अभाव-बोधस्तयोश्चेतसी निरन्तरं पर्यपीडयत् । भुवनेश्वरी देवी स्वेष्टदेवसमीपे निजहृदयवेदनामेकान्ते विनिवेदयन्ती बभूव । तया समाकर्णितं यदाशुतोषशङ्करप्रसादेन तस्याः मनस्कामना परिपूर्णा भवितुमर्हति । अतोऽसौ शिवाराधनतत्परा बभूव । काश्या वीरेश्वरः शिवो जाग्रद्देवः । अतः किल तत्रत्यां स्वसम्बन्धिनीं कामपि महिलां द्वारीकृत्य एकपुत्र-प्राप्तेः मनस्कामनां कृत्वा प्रतिदिनं वीरेश्वरपूजनप्रबन्धमसावकरोत् ।

इतो भुवनेश्वरी देवी चापि शिवस्य पूजाध्यानजपादिषु दैनन्दिनं तन्मयी अभवत् । कातरप्रार्थनया तस्या हृदयमाप्यायितम् । सर्वदैव सर्वेषु कर्मसु च तदीयं मनः प्रार्थनारतमभूत् । एवं प्रकारेण वर्षं व्यत्यगात् ।

एकस्यां रात्रौ भुवनेश्वरीदेव्याऽपूर्वः स्वप्न एको ददृशे । दृष्टं तया यत् देवादिदेवो महादेवो योगनिद्राया व्युत्थितः शिशुरूपेण तस्या अङ्कमाजगाम ।··· दिव्यानन्देन शरीरं तदीयं पुलकितं जातम् ।

---

याथातथ्येन नानुष्ठिता, स कदापि महान् भवितुं नार्हः ।" पित्रोर्भक्तिः संसारेऽत्रार्यसभ्यतायाः सर्वाभ्यर्हिताऽवदानस्वरूपा विद्यते । उपनिषदुपदेशोऽपि—"मातृदेवो भव, पितृदेवो भव ।"

सहसैव निद्रा तस्या भग्नाऽभूत् । तदानीमेव हिमगिरितुल्यो ज्योतिर्मयो देवोऽन्तर्दधे । तया च भक्तिपरिपूर्णचेतसा चन्द्रमौलीश्वरमुद्दिश्य प्रणामो विहितः—"शिव शिव ! हे करुणामय कृपानिधे !"

* * *

तस्मिन् दिने पौषी संक्रान्तिः, शिवस्य दिनं सोमवारः, मकरस्य सप्तमी तिथिरासीत् । कलिकत्तानगरी महोत्सवपरिपूर्णा बभूव । मकरवाहिन्याः पुण्यस्नानाय सदलबलाः स्त्रियः पुमांसश्च समागमन् । सूर्योदयस्य किञ्चित्क्षणानन्तरं भुवनेश्वर्या अङ्कमालोकयन् एको भुवन-मङ्गलो देवशिशुराविरभवत् । दत्तपरिवारे महानानन्दकोलाहलो बभूव । मङ्गलशंखो ध्मातः । हुलुध्वनिभिः साकं गृहमहिलाभिर्नवजात-शिशोः स्वगतं व्याजह्रे ।

देवसमानपुत्रमवलोक्य भुवनेश्वरीदेव्याऽवधारितं यत् देवस्वप्नः सफलोऽभवत्, स्वयं वीरेश्वर एव शिशुरूपेण समायातोऽस्ति ।···

जनन्या बालकनाम 'वीरेश्वर' इति निर्धारितम् । आह्वानस्य नाम 'बिले' । अन्नप्राशनकाले च 'नरेन्द्रनाथ' इति नामधेयं कृतम् ।

* * *

प्रातःकालादेव दिनप्रकाशस्य सूचना जायते । बालकस्याभ्यन्तरे तदीयभाविनः स्वरूपस्य सम्भावना निहिता तिष्ठति । बालको यथा यथाऽवर्धत, तथा तथा तस्य जीवनवैशिष्ट्यं प्राकट्यमवाप । शिशो-रभ्यन्तरे या ब्रह्माण्डपरिचालनशक्तिरासीत् सा विभिन्नेषु छन्दःसु विविधरूपेषु च स्वीयं स्वरूपं प्रकाशयाञ्चकार । लघीयसो बालकस्यो-पद्रवेण गृहजना निरन्तरमुद्विग्नमनसो बभूवुः । स हि महान् हठी आसीत् । यन्मनसि निराचिनोत्, न कथमपि तत् पर्यत्यजत् । निर्भर्त्सनं, प्रहारः, भयप्रदर्शनं चेति सर्वं तत्समीपे व्यर्थतामगच्छत् । पुत्रमशान्त-

मङ्कीकृत्य माता न्यगादीत्—"अनेकशः शिरः संघृष्य मया महादेवनिकटे पुत्रो याचितः, किन्तु तेनैको भूतः प्रहितः।"

बहुशो विमृश्य बालकं शान्तयितुं तयोपाय एक आविष्कृतः। 'शिव'-मन्त्रजपानुष्ठानपूर्वकं तस्य शिरसि जलसिञ्चनेन बालको नितरां शान्तिमापद्यते स्म। कदापि च भयं प्रदर्शयन्ती तं भुवनेश्वरी देवी प्रोवाच—"पश्य बिले, यदि त्वं मौखर्य्यं न त्यक्ष्यसि, तर्हि शिवस्त्वां कैलासं गन्तुं नादेक्ष्यति।" बालकोऽपि भयचकितः सन् मातुर्मुखमवलोकयन् मौनमाश्रयत्।

परवर्त्तिनि काले शैशवोपद्रववृत्तान्तं पाश्चात्त्यशिष्येभ्यो निवेदयन्ती भुवनेश्वरी देवी सगर्वं प्रोवाच—"किं वदेयम्, एतस्य पर्यवेक्षणरक्षणाय द्वे भृत्ये सहैवाभ्राम्यताम्।" सा पुनरप्यगादीत्—"बाल्यकालादेव नरेन्द्रस्याभ्यन्तरे एको महान् दोषः। क्रोधे जाते तस्य हिताहितावबोधो नाभवत्, गृहस्य वस्तूनि अत्रोटयदस्फोटयच्च।"...

बिले किञ्चिदवर्धत तृतीयं चतुर्थं वा वर्षं प्राविशत्। पितृभ्यां साकं घोटकशकट्यां भ्रमणाय निर्गतः। पित्रा पृष्टः—"बिले, त्वं प्राप्तवयस्को भूत्वा कः सम्पत्स्यसे, कथय।"

बिले शिर उन्नमयन्नुदतरत्—"अहं तोत्रवेत्रवान् सारथिर्भविष्यामि।" रजतवेष्टितोष्णीषधारी रथचालको नरेन्द्रस्य सन्निधाने विस्मयजनक एको व्यक्तिविशेषोऽभूत्। वेगशालिनोस्तेजस्विनोर्द्वयोरश्वयोः संयमनपूर्वकपरिचालनं किं साधारणी वार्ता ?

बाल्यादेव निर्धनान्, दुःखिनः, साधून्, संन्यासिनश्च प्रति नरेन्द्रस्य सविशेषमाकर्षणमभूत्। निर्धनं निरीक्ष्य किञ्चिद् वस्त्वन्तरं नासाद्यासौ स्वधारितं धौतवस्त्रमेव निष्कास्य तस्मै प्रायच्छत्। तेनैव च तस्य

सुतरां परितृप्तिरजायत ।* समये समये कौपीनं परिधाय संन्यासी भवितुं समीहते स्म ।

मातुर्मुखाद् रामायणकथामाकर्ण्य नरेन्द्रनाथस्य सीतारामौ प्रति महती भक्तिरुदपद्यत । विपणितः सीतारामप्रतिमां क्रीत्वा समानीय सौधोपरि स्थिते लघुप्रकोष्ठे स एकान्ते समर्चामन्वतिष्ठत् ।

गेहेऽनेके पालिताः पक्षिणः, छागाः, मयूराः, कपोताः, वैलायितिकाः श्वेता मूषिकाः, एका दुग्धदात्री गौश्चासन् । एको वानरः, द्वौ शीघ्रगावश्वौ चाप्यविद्यन्त । सर्वैः सह नरेन्द्रस्य नितरां स्नेहसम्बन्धोऽतिष्ठत् । अश्वसेवकः सारथिश्च तस्यान्तरङ्गमित्रभूतौ, बहुविधसुखदुःखवार्तालापस्ताभ्यां साकं तस्याभूत् । एकदा घोटकसेवकेन प्रोक्तम्—"विवाहविधानमपि बहुविपत्तिकार्यम् । विवाहस्य द्वितीयदिनत एव मम गृहेऽशान्तेर्दुःखस्य च राज्यमिव प्रसृतम् ।" सहानुभूत्या नरेन्द्रस्य स्वान्तं परिपूर्णमभवत् । सत्यमेव विवाह एव सर्वदुःखहेतुः । रामचन्द्रेण यादृशं दुःखं कष्टं च सोढं, तत्सर्वं विवाहकारणादेव । बालकस्य मानसं नितरां विवाहविरुद्धमभवत् । ययोः सीतारामयोः स समर्चनमनुतिष्ठति तावपि कृतविवाहावास्ताम् । तर्हि कथं तयोः पूजनं स कर्तुं शक्नुयात् ? अव्यक्तया वेदनया तदीयं मनः समाक्रान्तम् । निर्णयानुष्ठाने सामर्थ्यविरहादसौ मातुरभ्यर्णमुपागच्छत् । मातुर्वक्षसि मुखं गोपयित्वा रुदता नरेन्द्रनाथेन स्वीयमानसवेदना प्रकाशिता । सान्त्वनां ददती भुवनेश्वरी देवी प्रोवाच—"एतेन किमभूत्, बिले, तर्हि त्वं शिवपूजामनुतिष्ठ ।"...

---

* अमेरिकातः पत्र एकस्मिन् स्वामिना लिखितम्—"न, अहं तत्त्वजिज्ञासुर्नास्मि, दार्शनिकोऽपि नास्मि । न, न, अहं साधुरपि नास्मि । अहम् अकिञ्चनोऽस्मि । अकिञ्चनाय स्पृहयामि ।" स हि समस्तानपि सांसारिकान् समुद्दिश्य अश्रूण्यमुञ्चत् । अकिञ्चनकल्याणसाधनं तदीयजीवनस्य सर्वाभ्यर्हितं व्रतमासीत् ।

सन्ध्याकालीने स्वल्पेऽन्धकारे नरेन्द्रः, सौधपृष्ठस्थप्रकोष्ठेऽगच्छत्। युगलसीतारामप्रतिकृत्यभिमुखं कञ्चित्कालं यावदसौ निर्निमेषमपश्यत्। ततश्च हस्तद्वयेन सीतारामसूर्त्तिमुत्थाप्यासौ बहिर्मार्गे प्राक्षिपत्।··· द्वितीये दिने तत्र शिवमूर्त्तिः प्रतिष्ठापिता। तन्मूर्त्तेरभिमुखमुपविश्यासौ बहुकालं यावत् चक्षुषी निमील्य ध्यानमकरोत्। एकदा सङ्गिभिः साकं क्रीडामिषेणासौ शरीरे भस्म धारयन् ध्याने समुपविवेश। किञ्चित्कालानन्तरमेको बालकः 'सर्पः सर्पः' इति चीच्चकार। सर्वे सहचरा द्वारमुद्घाट्य पलायिताः, किन्तु नरेन्द्रनाथो ध्यानमग्नोऽतिष्ठत्। सर्प-कोलाहलस्तेन किञ्चिदपि नाकर्णितः। कोलाहलमाकर्ण्य गृहजना धावन्तः समुपतस्थिरे। सर्पमवलोक्य सर्वे भयमकुर्वन्। इदानीं क उपायः? बिले कथं रक्षणीयः? सर्पापसारणचेष्टायां कृतायां सम्भवतोऽसौ हानिं कुर्यात्, इति भीत्या सर्वे शान्तास्तस्थुः।

किञ्चित्कालानन्तरमेवासौ सर्पः फणां संकोचयन् शनैः शनैर्निर्जगाम। नरेन्द्रनाथस्तदानीमपि ध्यानमग्नोऽतिष्ठत्। स चोत्थाप्य बहिरानीतः। सर्वमाकर्ण्य तेनोक्तम्—"मया तु किमपि नावाबुध्यत।"

"नरेन्द्रो ध्यानसिद्धो महापुरुष" इति रामकृष्णदेवेन प्रतिपादितम् —"असौ कोऽस्तीति यदा ज्ञास्यति, तस्मिन्नेव दिने संसारे स न स्थास्यति, दृढसंकल्पबलेनासौ तदानीमेव योगमार्गेण शरीरं त्यक्ष्यति।"

* * *

विवेकानन्देन स्पृश्यास्पृश्यविपरीता घोषणा कृता बभूव।* बाल्यादेव तस्य जातिविभेदविचारविषये विशेषकौतूहलमासीत्।

* परवर्त्तिनि काले स्वामिना प्रतिपादितम्—"आधुनिकहिन्दुधर्मो न विचारस्य, न वा ज्ञानस्य मार्गे वर्त्तते, स तु केवलं स्पृश्यास्पृश्यमार्गे एव जागर्त्ति। 'मां न स्पृश' एतावदेव! स्पृश्यास्पृश्यता चैकप्रकारतो मानसिको रोगः। स्पृश्यास्पृश्यविवेको न हिन्दु-धर्मः। अस्माकं शास्त्रेषु नास्त्यस्योल्लेखः। स

तदानीमेव काले स प्रवीण इव बहुविधान् प्रश्नाननुष्ठाय मातरमुदवेजयत्—"भृत्यो यदि भोजनालये गच्छेत्, रोटिकां वा स्पृशेत्, तेन किं स्यात्? परकीयसंस्पृष्टान्नभोजनेन जातिः किमिव नश्येत्?" एतादृशाः शतशः प्रश्ना अभूवन्।

विश्वनाथदत्तसन्निधाने विभिन्नजातीयपुरुषा अभियुक्ताः समागच्छन्। स च विलासी ताम्रकूटसेवी चासीत्। ब्राह्मणानां, शूद्राणां, माहम्मदानामनेकजातीयानां अभियुक्तानां कृते धूम्रपानपात्रं (हुक्का) पृथक् पृथगासीत्। नरेन्द्रनाथस्यैतद्धूम्रपानपात्रविभाजनमतिशयकौतूहलपूर्णो विषयोऽभूत्। विशेषतश्च यदा तेन समाकर्णितं यद् अपरस्य जातीयस्य धूम्रपानपात्रे यद्यन्यजातीयः पुमान् धूम्रपानं कुर्यात्तदा तस्य जातिर्नश्यति, तदानीं तेन महदाश्चर्यमनुभूतम्। एकदाऽभियोगपरायणा धूम्रपानं कृत्वाऽगच्छन्, तदानीमेव नरेन्द्रनाथस्तत्र कोष्ठमागत्य प्रत्येकधूम्रपानपात्रे मुखं संस्थाप्य धूम्रमपिबत्। विश्वनाथदत्तस्तस्मिन् गृहे प्रविश्य तदवस्थं तमवलोक्य विहसन् प्रोवाच—"किं भवति बिले?" नरेन्द्रनाथो निःसंकोचमुदतरत्—"पश्यामि जातेरनङ्गीकारे किं भवति?" "अरे एतादृशी दुष्टता!" इति ब्रुवन् विहस्य च विश्वनाथदत्तो निर्गतः।···

स्वाधीनताप्रियस्य, निर्भयस्य, दृढचेतसोऽहर्निशं प्रसन्नस्य, क्रीडनकूर्दनमत्तस्य नरेन्द्रनाथस्याभ्यन्तरे बाल्यादेवैकस्या विशेषशक्तेर्विकासः पर्यदृश्यत। पञ्चवर्षावस्थायां नरेन्द्रस्य विद्यारम्भो जातः। ततश्चैकवर्षानन्तरमसौ विद्यालयं प्रहितः। नूतने स्थानेऽनेकान् नवान् सङ्गिनः प्राप्य नरेन्द्रनाथो नितरां प्रासीदत्। अल्पकालाभ्यन्तर एव तस्य मुखा-

---

चैकोऽनादिः कुसंस्कारः, येन जातीयकर्मशक्तिः प्रत्येकस्मिन् क्षेत्रे निरुद्धा तिष्ठति। वस्तुतस्तु सम्प्रति धर्मोऽस्माकं भोजनगेहे प्रविष्टोऽस्ति।" स्पृश्यास्पृश्यता किल ऐक्यबोधविरोधिनी वर्त्तते।

दुश्शीलशब्दानाकर्ण्य विश्वनाथदत्तेन पुत्रस्य विद्यालयगमनं निवार्य गृह एव शिक्षकद्वारा पाठनप्रबन्धो विहितः। अनेकेषां कुटुम्बिनां बालका अपि तस्य सङ्गिनो बभूवुः। क्रीडनकूर्दने नरेन्द्रनाथो महान्तमानन्दमन्वभवत्। राज्ञः सचिवस्य च क्रीडायां नरेन्द्रो राजा क्रियते स्म। सर्वत्रैवासौ दलपतिरभवत्। दिनस्य मध्याह्नसमये तेषां क्रीडाकोलहलः प्राचलत्। गृहजनाः सर्वे समुद्विग्ना बभूवुः। अक्षिनिमीलनीं क्रीडामाचरन्नेकदाऽसौ सहसैव पादपिच्छिलत्वात् द्वितलसौधसोपानतो लुठन् नोचैरपतत् संज्ञाहीनश्च जातः। कपालस्य विदीर्णत्वात् रुधिराणि प्रावहन्। डाक्टरा आहूताः। सर्वे जना व्याकुला बभूवुः। बहुहोरा अतीत्य बालको बोधमवाप। दक्षिणस्य चक्षुष उपरिभागे क्षतचिह्नमेकं तस्य जीवनपर्यन्तमासीत्।

परवर्त्तिनि काले घटनामिमां दक्षिणेश्वरे समाकर्ण्य परमहंसदेवः प्रोवाच—"यदि तस्मिन् दिने तस्य शक्तेर्ह्रासो नाभविष्यत्, तदाऽसौ समस्तामपि पृथिवीं दोलायमानामकरिष्यत्।"

अपूर्वया मेधया, तीक्ष्णया बुद्ध्या श्रुतिधरत्वादिसद्गुणैश्च साकं नरेन्द्रनाथो जन्म जग्राह। यदसावेकवारमशृणोदपठच्च तदाजीवनं न व्यस्मरत्। एकेन दूरसम्पर्कवता वृद्धेन पुरुषेण साकं नरेन्द्रो रात्रौ सुष्वाप। स च वृद्धो बालकस्य प्रखरमेधामवलोक्य रात्रौ मुग्धबोधव्याकरणं मुखेनैवापाठयत्। आश्चर्यमिदं यत् एकवर्षाभ्यन्तरे एव स बालको व्याकरणं तत् कण्ठस्थमकार्षीत्।···

रामभक्तोऽद्भुतकर्मा श्रीहनूमान् नरेन्द्रनाथस्य जीवनादर्शप्रतीकः। स च साहसबल-वीर्य-पवित्रता-प्रतीकस्य* महावीरस्य पूजां निद्रित-

* दास्यभावस्य जीवितप्रतीकस्य महावीरस्य सम्बन्धे देशवासिनः समुद्दिश्य स्वामी विवेकानन्दः प्रोवाच—"महावीरचरित्रमेव साम्प्रतं युष्माभिरादर्शस्वरूपेणाङ्गीकार्यम्। पश्यत, रामस्याज्ञया स जलधिमुल्लङ्घ्यागच्छत्। जीवनस्य

भारतस्य प्रतिगृहं प्रचारयितुमैच्छदवोचच्च—"…समस्तेऽपि देशे महावीरस्य हनूमतः सपर्यां प्रचारयत। दुर्बलानां हिन्दूनां पुरतो महावीर्यस्यादर्शमुपस्थापयत। शरीरे बलं हृदये च साहसं नास्ति—किम्भविष्यति जडेनैतेन पञ्जरेण? मम समीहा वर्त्तते यन्महावीरस्य गृहे गृहे पूजा भवतु।…"

—:-※-:—

---

मृत्योर्वाऽभिमुखं नासीत् तस्य दृष्टिः। स च महान् जितेन्द्रियो बुद्धिमानप्यभूत्। दास्यभावस्यैतेनादर्शेन युष्माभिः स्वस्वजीवनस्य संघटनं कर्त्तव्यमास्ते।… हनूमति यथैकतः सेवाभावस्तथैवापरतस्त्रिलोकसंत्रासी सिंहविक्रमश्च। रामस्य हिताय जीवनदाने तस्य संकोचो न बभूव। रामस्य सेवां विरहय्यान्यत्र सर्वत्रापि तस्योपेक्षा! किम्बहुना ब्रह्मत्वशिवत्वलाभेऽपि उपेक्षैवासीत्। रघुनाथस्यादेश-पालनमेव तदीयजीवनस्यैकमात्रव्रतम्। एवमेवैकनिष्ठेन भाव्यम्।…

# २

सप्तमवर्षावस्थायां यदा नरेन्द्रनाथो विद्यासागरमहाशयद्वारा कलिकत्तायां प्रतिष्ठिते "मेट्रोपोलिटनइन्ष्टिट्यूशन" नामनि विद्यालये प्रवेशितस्तदानीमसौ आङ्गलभाषाध्यायनाय प्रस्तुतो नाभवत्—"इयं विदेशीया भाषां, इमां कथं पठिष्यामि, एतदपेक्षया स्वभाषायाः शिक्षणमेव श्रेयस्करम्"— इत्येवासीत् तस्य विचारः। बालकस्य मनसि वैदेशिकीं भाषा प्रत्येतादृशः स्वाभाविको विरागः श्रद्धाऽभावश्च कथमासीदिति निर्णयो नितरां कठिनः। प्रारम्भे सातिशयेन बोधनेन कथनेनापि आङ्गलीं वाणीमध्येतुं तस्य प्रस्तुतीकरणं सम्भवं नाभूत्। एवमेव बहवो मासा व्यत्यगच्छन्। अनन्तरं च तन्मनोभावे परिवर्त्तितेऽसौ महतोत्साहेन तामपठत्। श्रूयते यत् तेन प्रारम्भे स्वमातुरेव सकाशादाङ्गली वर्णमाला शिक्षिता।...

नरेन्द्रनाथस्य दुर्दमनीयशक्तेर्विकासः केवलं विद्यालयपाठ्यपुस्तकेष्वेव सीमाबद्धो नासीत्। तस्य चञ्चलतया उपद्रवेण बहुमुखप्रतिभया च शिक्षकाः सहाध्यायिनश्च समाकुलिता अभूवन्। तस्य स्मृतिशक्तिरेतादृशी प्रबलाऽऽसीत् यया विद्यालयीयपाठानां कण्ठस्थीकरणे स्वल्प एव समयो व्यतिगच्छति स्म, तस्य कृते अवशिष्टः समयः कथं यापनीय इत्येका समस्यैवासीत्।

एकदिनस्यैषा घटना। शिक्षकमहाशयो भूगोलं पाठयन्नासीत्। शिक्षको नरेन्द्रनाथं प्रश्नमेकमपृच्छत्। स तस्योत्तारमदात्। किन्तु शिक्षकस्यैषा धारणा बभूव, यदुत्तरं समीचीनं नास्ति। स च बालकमताडयत्। नरेन्द्रनाथोऽनेकशो यथा यथा प्रावोचद्

—'मम भ्रान्तिर्नास्ति, मया सत्यमुत्तरितम्" तथा तथा ताड़न-मप्यवर्धत। स च मौनमाश्रयन् ताड़नं सहमानः शिरो नमयन् तस्थौ। किञ्चित्कालानन्तरं शिक्षकः स्वीयां भ्रान्तिमवधार्य नरेन्द्रनाथतः क्षमां याचितवान्।

बाल्यादेव नरेन्द्रनाथः किं भयमिति न जानीते स्म। भूतब्रह्म-राक्षसादीनां भयं विहस्यैवापासारयत्। एतादृशं भयं प्रदर्श्य कस्माच्चन कार्यात् तस्य निवारणं न सम्भवम्।

'इदमेतस्य वचनम्' एतावतैव कुत्रापि विषये विश्वासस्तस्य स्वभावविपरीतोऽभवत्। बाल्यकालादेव कस्यापि विषयस्य प्रत्यक्ष-प्रमाणप्राप्तिमन्तरेण विश्वासमसौ नाकरोत्।

नरेन्द्रनाथः क्रीड़ने कूर्दने च कुशलोऽभूत्। पाकक्रियायामपि स नैपुण्यमध्यगच्छत्। अस्मिन्नेव वयस्यसौ प्रतिवेशिनो बालकानादाय संगीतस्य, अभिनयस्य च दलं समस्थापयत्। मल्लयुद्धस्य व्यायामस्य च शालां निरमापयत्। अन्यान्यपि कार्यान्तराणि चाकरोत्।

तस्मिन्नेतावती शक्तिरासीद् यत् तां संरक्षितुं स्थानमिव नोपल-भ्यते स्म, प्रतिक्षणं किञ्चित् करणीयमेव। प्राचीनाः साधनसामग्रीः समादाय रथो निर्मितः। तदानीं प्रथमतः काले कलिकत्तायां गैसवर्त्तिका प्रचलिताऽभवत्। नरेन्द्रनाथः सङ्गिनः समादाय गैसनिर्माणकार्ये संलग्नो बभूव। स गुलिकादण्डक्रीडायां, धावनोच्छलनकूर्दनेषु, मुष्टिकायुद्धे दण्डकरवालचालनक्रियायां, सन्तरणादिषु च प्रथमस्थानमध्यगच्छत्। स चैको वरेण्यः शिल्पी च बभूव।

संन्यासग्रहणसमीहा तस्मिन् स्वाभाविकी समभूत्। बाल्यादेवासौ संन्यासग्रहणस्वप्नमपश्यत्। सगर्वमसौ स्वमित्राण्यवोचत् —"मम पितामहः संन्यासी आसीत्। ज्ञायते युष्माभिः? मयाऽपि

२

संन्यासिना भवितव्यम्। मम हस्ते संन्यासग्रहणस्यैका महती रेखा वर्तते। अहम् साधुमेकं स्वहस्तमदर्शयम्, तदा तेनेत्थं प्रोक्तम्।" सहचरास्तस्य संन्यासग्रहणवृत्तान्तमाकर्ण्य विस्मयमगच्छन्।

तस्याभ्यन्तरे संन्यासिनो रक्तमासीत्। तस्य पितामहो दुर्गाचरणदत्तः पञ्चविंशतिवर्षावस्थायां विपुलधनमानयशःपरित्यागपुरस्सरं शिशुपुत्रं विश्वनाथं च विहाय संन्यासी बभूव। दर्शनेऽनेकविधया नरेन्द्रनाथोऽपि स्वपितामहसदृश एवाभवत्। अतः परिवारजनानामयं विश्वासोऽभूद् यद् दुर्गाचरण एव शरीरं परित्यज्य नरेन्द्ररूपेण जन्म जग्राह ❀

सहृद्वात्सल्यं नरेन्द्रस्वभावस्यान्यतमं वैशिष्ट्यमासीत्। बन्धूनां कृते त्यागाङ्गीकारे तस्यासीन्महानानन्दः। एकदा अष्टवर्षदेशीयो नरेन्द्रनाथः स्वसहचरानादाय 'मटियाबुरुज'-स्थाने लक्ष्मणपुरस्य (लखनऊ) भूतपूर्वनवाब-वाजिदअलीशाहस्य पशुशालां निरीक्षितुमगच्छत्। चाँदपाल-घट्टात् नौकामारुह्य तत्र गमनं क्रियते। गंगाया उपरि सर्वे जना महताऽऽनन्देन कोलाहलं कुर्वन्तो जग्मुः। यतः सर्वे बालका एव। नौकारोहणाभ्यासः कस्यचिदपि नासीत्। तरी डगमगायमानाऽभवत्। परावर्त्तनकाले एकः सहचरो बालकः सहसाऽस्वस्थो भूत्वा नौकायामेव वमनमकरोत्। कैवर्त्ता माहम्मदाः प्रज्वलितक्रोधाग्नयो तान् हन्तुमुद्यता अभूवन्। ते निर्भर्त्सयन्तो जगदुः—"नौका स्वच्छीक्रियताम्, अन्यथा कमपि अत्रतत्तुमादेशं न दास्यामः।" बालकैरुक्तम्—"द्रव्यं दीयते, केनापि युष्माभिः स्वच्छीक्रियताम्।" परन्तु कैवर्त्तैस्तेषां किमपि न श्रुतम्। संघर्षानन्तरं घातप्रत्याघातावसरः समायातः।

---

❀ श्रीरामकृष्णदेवो यदा नरेन्द्रनाथं संन्यासधर्मे दीक्षितमकरोत्, तदानीं तस्यावस्था चतुर्विंशतिवर्षदेशीया आसीत्। श्रीठाकुरस्य देहपरित्यागानन्तरं वराहनगरमठे आनुष्ठानिकभावेन तेन संन्यासदीक्षा गृहीता। तस्य बाल्यकालीनस्वप्नः फलीभूतोऽभवत्।

सर्वेऽपि कैवर्त्ता एकमतयो बभूवुः। ते नौकां तटमानेतुं नैच्छन्। अस्मिन्नेव कोलाहले नरेन्द्रनाथस्तरण्या अकूर्दत्। गङ्गातटे द्वौ श्वेताङ्गौ सैनिकौ भ्राम्यन्तावपश्यत्। स धावन् तयोर्निकटेऽगच्छत्। स च तयोरेकस्य हस्तं गृहीत्वा अपरिमार्जितया आंगलभाषया सम्पूर्णामपि घटनां श्रावयित्वा सहायतां ययाचे, श्वेतांगावाहूय च नौकासन्निकटमानिनाय। श्वेतांगसैनिकाववलोक्य कैवर्त्तानां बुद्धिर्मूढतामगच्छत्। तयोर्यष्टिभ्रामणपूर्वकनिर्भर्त्सनेनैव ते नौकां तीरमानयन्। सर्वे बालका नौकातोऽवातरन्। नरेन्द्रनाथस्य दुर्जयेन साहसेन प्रत्युत्पन्नमत्या च सर्वे सहचरास्तं साधुवादं प्रयच्छन्त ऊचुः—"त्वयैवाद्य वयं संरक्षिताः।" नरेन्द्रः सहचराणां साधुवादे अवधानं नादात्। आनन्दकोलाहलं कुर्वन्नसौ सर्वानादाय स्वगृहं परावत्रृते।

तस्योद्दण्डताया दुस्साहसस्य चानेका नित्यघटनावली विद्यते स्म। अत एवासावमेरिकातो विश्वविजयी भूत्वा यदा प्रत्यागतस्तदा परिहासमुखेन शिष्यानगादीत्—"बाल्येऽहमतीवोद्दण्ड आसम्। अन्यथा किमहमेवम्प्रकारेण समस्तामपि पृथिवीं पर्यटन् आगन्तुमशक्नवम्?"

तस्याभ्यन्तरे यस्य विराट्पुरुषस्यावासः, तस्यैव सक्रियया शक्त्या प्रभावेण च बाल्यादेव स महान् तेजस्वी बभूव। सा शक्तिरनेकप्रकारतो प्राकट्यमवाप। केवलं ज्योतिर्मण्डलस्य ऋषिरेव न हि, बुद्ध-शंकर-नेपोलियन-वाल्मीकि-व्यासप्रभृतीनामात्मानो नरेन्द्रनाथस्याभ्यन्तरे समुदपद्यन्त इव। अत एव तस्याभ्यन्तरे विपुलाया अध्यात्मशक्तेर्विकाशोऽभवत्—न व्यष्टिमुक्तये, समष्टिमुक्तेः साधना-दया-उदारता-परदुःखकातरता-साम्य-मैत्री-स्वाधीनता-आत्मविश्वास-तेजोवीर्य-स्थिरता-धैर्य-दैहिकमानसिकबलप्रभृतीनामैहिकपारत्रिक-ज्ञानस्य, सर्वाभ्यर्हितप्रतिद्वन्द्वितया नेतृत्वभावस्य च कृते समभूत्। भविष्यति समये धर्म-समाज-राष्ट्रेषु यद् विप्लवकरमान्दोलनमसावसृजत्,

तस्य बाल्यजीवन एव मुकुलितत्वमदृश्यत। बाल्य एव शतशो लघु-गुरुघटनावलीनां समष्टिरूपो बभूव—भावी विवेकानन्दः।

स्कूलस्य पाठाभ्यासे तस्याधिकसमयस्यावश्यकता नासीत्। अवशिष्टसमये स्वीयवयसोऽनुसारेण विविधविषयपुस्तकान्यधीत्य स्वीयज्ञानराशिं सोऽवर्धयत्। साहित्यमितिहासं च प्रति तस्य रुचि-एधिका बभूव। परीक्षाया द्वित्रमासाभ्यन्तरत एव स परीक्षाप्रदानाय प्रस्तुतोऽभवत्। प्रतिवर्षं च ससाफल्यमुत्तीर्णो बभूव।

तस्य शरीरं नितरां बलवदासीत्। अवस्थया वर्धितयैव सह आङ्गलव्यायामे (जिमिनास्टिक), मुद्गरभ्रामणे, करवालचालने, दण्ड-बैठकव्यायामे, मल्लयुद्धे, दण्डचालने, कन्दुकक्रीडने, सन्तरणे, अश्वा-रोहादिकार्येषु च स विशेषदक्षोऽभवत्।* पाकशास्त्रे संगीते हासपरि-हासादिविषयेषु चासौ निपुणो बभूव। विश्वनाथदत्तेन स्वपुत्रजीवन-परिपूर्णविकासाय सर्वविधं साहाय्यं प्रदत्तमभूत्।

❀ ❀ ❀

नरेन्द्रनाथश्चतुर्दशवर्षावस्थायां प्रविष्टः। 'मेट्रोपॉलिटन'-विद्यालयस्य तृतीयकक्षाया असौ छात्र आसीत्। विश्वनाथदत्तः केनापि कार्येण

---

* शारीरिकोत्कर्षलाभसम्बन्धे स्वामी महोदयः प्रत्यवादीत्—"शारीरिकी दुर्बलतैवास्माकं दुर्दशाया एकं प्रधानं कारणम्। देशस्य युवकैः सर्वतः पूर्वं वीर्यशालिभिर्भवितव्यम्। धर्मस्य वार्ता तदनन्तरमास्ते। तरुणभ्रातॄणां सम्बन्धे ममायमुपदेशो यद् भवन्तः सर्वे बलशालिनो भवन्तु। युष्मदवस्थायां गीता-पाठापेक्षया कन्दुकक्रीडैव युष्मान् स्वर्गस्याधिकसमीपस्थान् विधास्यति।··· बलवता शरीरेण यदा यूयं मानवा इव शिरांस्युन्नमयन्तः सुदृढं स्थातुं शक्ष्यथ, तदैवोपनिषद आत्मनश्च महत्त्वं सुष्ठुरूपेणावधारयितुं पारयिष्यथ। अतो युवकानां चरित्रघटनायापेक्षितम्—लौहवन्मांसस्नायूनां मध्ये वज्रकठिनं मानसम्। वीर्यं, मनुष्यत्वं, क्षात्रवीर्यं, ब्रह्मतेजश्चेति सर्वमपेक्षितमास्ते।"

वायुपरिवर्त्तनार्थं च मध्यप्रदेशम् ( रायपुरम् ) अगच्छत्। कांश्चिन्मासानतीत्य स स्वीयपरिवारजनान् आजुहाव। सर्वेषां नयनभारो बालकनरेन्द्रनाथोपरि समापतत्।

रायपुरे कतिचन मासान् यावन्निवासस्य फलस्वरूपा सर्वेषामेव मनोदेहसम्बन्धिनी सविशेषसमुन्नतिरभूत्। तत्र नासीत् कोऽपि विद्यालयः। अतो विश्वनाथदत्तेन पुत्रशिक्षाभारः स्वयमेव गृहीतः। विद्यालयीयपाठ्यपुस्तकातिरिक्तं साहित्येतिहासादिविविधान् विषयानप्यसौ स्वपुत्रमशिक्षयत्। विश्वनाथदत्तपार्श्वेऽनेके विशिष्टपुरुषा आयान्ति स्म। अनेकविषयाणामालोचनाऽक्रियत। नरेन्द्रनाथोऽपि तत्र सम्मिलितः स्वीयं स्वतन्त्रं मतामतं प्रकाशयितुमवसरं लब्धवान्। एवम्प्रकारेण नरेन्द्रनाथः स्वल्पैरेवाहोभिरनेकविषयाणां गभीरं ज्ञानमर्जितवान्। केवलमेतावदेव न हि, तस्याभ्यन्तरे सुदृढमात्मविश्वासो मर्यादावोधश्च जागरणं प्रपेदाते। स च विभिन्नविषयाणां प्रसिद्धलेखकानेकग्रंथानधीत्य तद्विचारैः परिचितो बभूव। अनेकविषयालोचनविशेषशक्तिप्रथमविकासोऽस्य रायपुर एवाभवत्। विश्वनाथदत्तसुहृदोऽस्य नरेन्द्रनाथस्यासाधारण्या धीशक्तेर्बुद्धिमत्तायाश्च परिचयमवाप्य तदीयोज्ज्वलभविष्यत्सम्बन्धे मुक्तकण्ठं प्रशंसां विदधिरे। नरेन्द्रनाथः सर्वेषामेव प्रियपात्रतामगमत्।

वर्षद्वयानन्तरं विश्वनाथदत्तः सपरिवारः कलिकत्तां प्रत्याजगाम। नरेन्द्रनाथस्य शरीरमानसयोर्यथेष्टा समुन्नतिः समभूत्। वर्षद्वयात् तस्य विद्यालयाद् विरह आसीत्। अतो हि प्रवेशिका ( एन्ट्रेंस ) कक्षायां प्रवेशे बहुबाधाः समुपस्थिता बभूवुः। किन्तु ताः सर्वा बाधा अतिक्रम्य विशेषानुमत्या स प्रवेशिका-कक्षायां प्रवेशं लब्धुमशक्नोत्। वर्षत्रयस्य पाठ्यमेकस्मिन्नेव वर्षे समापनीयमासीत्। कठोरेण परिश्रमेण विशेषानुरागेण च साकं प्रस्तुतो भूत्वा परीक्षां दातुमुपविवेश। तेनैकदा प्रोक्तम्—"प्रवेशिकापरीक्षाया द्वित्रदिनान्यवशिष्टानि।

अपश्यम् यद् रेखागणितं न किमप्यधीतम्। अहं रात्रिपर्यन्तं जागरणं कृत्वा तदपठम्। २४ होरासु खण्डचतुष्टयं रेखागणितमधीत्य परीक्षामदाम्।" उत्तीर्णताऽपि साधुरीत्या समधिगता। तस्मिन् वर्षे तस्य विद्यालयस्य प्रवेशिकापरीक्षार्थिषु केवलं स एव प्रथमश्रेण्यामुत्तीर्णः।

'मैट्रोपालिटने'ऽध्ययनसमये विद्यालयस्यैकस्मिन्ननुष्ठानकाले तदाभ्यन्तरिको 'वाग्मी विवेकानन्दः' आत्मप्रकाशमकरोत्। विद्यालयीयपुरस्कारवितरणाय एकस्य वृद्धशिक्षकस्य विदायनाभिनन्दनाय चैका सभा समायोजिता। सुवक्ता सुरेन्द्रनाथवन्द्योपाध्यायः सभापतिपदमलञ्चकार। तत्सन्निधाने समुपस्थाय भाषणदाने कस्यापि साहसं न बभूव। अन्ते च तत्रत्यजनानां विशेषानुरोधेन किञ्चिद् वक्तुं नरेन्द्रनाथः समुत्थितोऽभूत्। विशुद्धायामाङ्गलभाषायामर्धघण्टां यावत्सुन्दरभाषणदानानन्तरं यदा स उपविष्टस्तदानीं चतसृभ्यो दिग्भ्योऽनेकसाधुवादानां ध्वनिरुदचरत्। सभापतिना केवलं तदीयभाषणप्रशंसैव नानुष्ठिता, वक्तुः समुज्ज्वलभविष्यत्सम्बन्धेऽपि सुस्पष्टमिङ्गितं कृतम्।

* * *

नरेन्द्रनाथः प्रेसिडेन्सीकालेजे प्रविवेश। परन्तु द्वितीयवर्षे जनरल-एसेम्ब्लिज - इन्स्टिट्यूशने—वर्तमानस्काटिशचर्चकालेजेऽध्येतुमारभत। प्रवेशेन सहैव तस्याभिमुखमेकं महज्जगतो द्वारमुद्घाटितमभूत्। तदीयचिन्ताजगति सुमहान् आन्दोलनकारी कोलाहलो जागरूकतां प्रपेदे। प्रत्येकमपि विषयमसौ विश्लेषणकरेण मनसाऽपश्यदशृणोच्च। नवनवाश्चिन्ताः समस्याश्च तस्य हृदयेऽधिकारमकार्षुः। स च महत्तोत्साहेन दर्शनशास्त्राणि साहित्यं चापठत्। 'मिल'प्रभृतिपाश्चात्त्यतार्किकाणां, 'ह्यूम'-'हरवर्टस्पेन्सरा'दिदार्शनिकानां सूक्ष्मविचारैः स परिचितो बभूव। 'शेली'कवितानां 'हेगेल'दर्शनस्य च तदीयमनोराज्ये सविशेषं प्रभावो वितस्तार। स च भारतीयकविरचना-

दृष्टिकोणेन, तात्कालिकसमाजसुधारकविचारैरपि सुपरिचितो भवन् ब्राह्मनेतॄणां सन्निधानेऽपि गन्तुमारब्धवान्।

तदीये मनसि प्रश्नोऽयमपि जागरूको बभूव यदेतस्य दृश्यमान-संसारस्य सुनियन्त्रितपरिकल्पनायाः पृष्ठतः किमेतादृशी काचिद् विराट्शक्तिरस्ति, यस्या इङ्गितेन जडजगदिदं परिचाल्यते? सर्वतोऽभ्यर्हितं मनुष्यजीवनस्य किमुद्देश्यमिति जिज्ञासाऽपि तदीयं मानस-मध्यकरोत्। संसारे एतावन्ति दुःखानि वैषम्याणि च कथम्? धन-शालिनां सौधसमीपे निष्किञ्चनानां पर्णकुटीराणि, एकं च राष्ट्रं धनैश्वर्यबलसमुन्नतम्, द्वितीयं च जातीयदुःखदुर्दशादिभिः पददलितं सत् मृतप्रायमिव कथम्? एतादृशी चिन्तापरम्परा तदीयमानसोत्कण्ठा-भावमुदपादयत्। वैयक्तिक-सामाजिक-राष्ट्रियवैषम्याणि तस्य हृदयं विद्रोहजनकमकार्षुः।

अवस्थयैव साकं तस्य ज्ञानस्पृहापि ववृधे। वर्ड्सवर्थकाव्यानि तदीयमनसि गभीरं प्रभावमुदपादयन्। 'डेकार्टे'-महोदयस्य अहंवादः, ह्यूमवेनयो'र्नास्तिक्यवादः, 'डारविन'स्योत्कर्षवादः, 'स्पेन्सर'स्य चाज्ञेय-वादश्च, नरेन्द्रनाथहृदये विप्लवमुपास्थापयन्। किमधिकम्, प्राचीनस्य 'आरिस्टाटल'स्य (अरस्तू) मतमपि तेन नोपेक्षितम्। पुनरीदृशं दिनमप्यायातं, यदा तेन रुद्धकण्ठेन व्याहृतम्—"यत् किञ्चिन्मयाऽधीतं तत् सर्वं विस्मृतं भवतु।" परन्तु भावोऽयं सामयिकः। तदीया सहजाता ज्ञानस्पृहाऽऽसीत्। तस्य च जन्मगताः संस्कारा धर्मविश्वासश्च, संसारिक्यः समस्याविषमताश्च तदीयं हृदयमुन्मथ्य तुमुलं संघर्षमुद-पादयन्। एतेषां सर्वेषां समाधानान्वेषणाय सोऽत्यन्तमशान्तो बभूव।

पाश्चात्यदर्शनैर्विशेषरूपतः प्रभावितोऽप्यसौ प्राच्यप्रतीच्यदर्शन-तुलनात्मकाध्ययनानन्तरं प्रोवाच—"हिन्दुदर्शनानि इतिहासयुगस्य पूर्वत एव यस्य परमसत्यस्योपलब्ध्या स्थिरं सिद्धान्तं प्रत्यपादयन्,

तस्यात्यन्तक्षीणम् आभासमात्रं पाश्चात्त्यानि दर्शनानि प्रापुः—पाश्चात्त्य-दार्शनिकैः पूर्णसत्योपलब्धिर्न कृता ।"

*        *        *

प्रतिभामण्डितः सदाऽऽनन्दमयो युवको नरेन्द्रनाथोऽल्पीयोभिरेवाह्नोभिः कालेजस्य विद्यार्थिनामध्यापकानां च विशेषप्रियपात्रतामगच्छत् । तस्यातुलनीया प्रतिभा, पाण्डित्यं, निर्मलस्वतन्त्रविचारधारा, तर्कशक्तिः, भावप्रकाशनरीतिः सुमधुरसंगीतं * चेति सर्वानेव मुग्धान् विदधिरे । यत्रासावगच्छत् तत्रैव तस्य व्यक्तित्वं प्रचकाश, यत्रैव स्वकरं न्यक्षिपत्, तदेवाभिनन्दनीयं सुन्दरं चाभवत् । रसिक आमोदप्रियः प्राणशक्तेर्विपुलप्रस्रवणो नरेन्द्रनाथो दलनेता बभूव । स यत्र कुत्रापि येन केनापि सार्धमसिलत्, सर्वेषामप्यन्तःकरणे आनन्दलहरीमुदपादयत् । कालेजस्य सर्वेऽप्यन्तेवासिनस्तस्य मित्राण्यभूवन् । सर्वानप्यसौ प्राणप्रियानवागच्छत् । सर्वेऽपि सर्वस्मिन्नपि विषये तमेव निर्बिभ्रति । पवित्रतैतस्य चरित्रस्य श्रेष्ठो गुणः । ततोऽसावणुमात्रमपि न विच्युतोऽभवत् । वेशभूषायामसौ नितरां साधारणो बभूव । शरीरेण मनसा वचसा च पवित्रतैव तदीयजीवनादर्शः । स यत् किमप्यकरोत् पर्याप्तमात्रयैव । अत एव मित्राणि

---

* विश्वनाथदत्तो गृहेऽभ्यर्हितान् गुरून् रक्षित्वा नरेन्द्रनाथमुच्चाङ्गसङ्गीतान्यशिक्षयत् । तस्य सुमधुरकण्ठध्वनिः सर्वानप्यानन्दितहृदयानकार्षीत् । श्रीरामकृष्णदेवस्तस्य सङ्गीतं शृण्वन् नितरां प्रीतिमापन्नो बभूव । तदायं गानमाकर्णयतस्तस्य मानसमतीन्द्रियराज्यमुपढौकमानं समाधिस्थमभूत् । तेन ( स्वीयं शरीरं दर्शयित्वा ) उक्तम्—"अस्याभ्यन्तरे यस्तिष्ठति, स नरेन्द्रस्य गानमाकर्णयन् फूत्करोति ।" अर्थात् तस्य कुलकुण्डलिनी शक्तिर्जागर्त्ति प्रत्यपद्यत । नरेन्द्रनाथः संगीते यथा दक्षः, तथैव तबला-मृदङ्ग-तंत्रीवादनेऽपि सिद्धहस्त आसीत् । नृत्यमप्यसौ साधुरीत्या जानाति स्म ।

प्रायशस्तं पवित्रतावादिनं * जगदुः। अखण्डब्रह्मचर्यपालनस्य नियमितध्यानधारणाप्रार्थनादीनां फलस्वरूपतस्तस्य शरीरे मनस्येतादृशमेकमाध्यात्मिकं तेजो विचकास, यस्याभिमुखं सर्वेऽपि जना नतमस्तका अबोभूयन्त।

पित्रोः शिक्षणमादर्शजीवनं च नरेन्द्रनाथस्य चेतसि प्रभूतप्रभावं व्यस्तारयत्। पितुर्विद्या, बुद्धिः, सहृदयता, दया, उदारता, स्वतन्त्रविचारः, परदुःखकतरता, महानुभावता च नरेन्द्रनाथं मुग्धमकुर्वन्। तस्य जननी शिक्षिता महीयसी महिला आसीत्। धर्मप्रवणता, वदान्यता च तस्याश्चरित्रस्य विशेषता बभूव। परवर्त्तिनि काले नरेन्द्रनाथः प्राह—"मम माता मदीयजीवनकर्मणोरविरामप्रेरणाप्रस्रवणस्वरूपा बभूव।"

विश्वनाथदत्तस्य शिक्षाशैली अनुपमा आसीत्। स कदापि पुत्रस्य शासनं ताडनं वा नाकार्षीत्। प्रत्येककार्यस्याभ्यन्तरेऽसौ पुत्रस्य आत्ममर्यादाबोधमकारयत्। नरेन्द्रनाथेनैकदा क्रोधेन मात्रा सार्धं कलहं कुर्वता तां प्रति कुटुवाक्यनि प्रोक्तानि। यदा विश्वनाथदत्तोऽशृणोत्, तदा पुत्रं न किमपि प्रोवाच। केवलं यस्मिन् प्रकोष्ठे पुत्रो निवसति, तस्य द्वारोपरि गुरुभिरक्षरैरसौ लिलेख—"बाबूनरेन्द्रः स्वोयां मातरमद्य एतादृशं वाक्यमकथयत्।" मित्राण्यागत्य तल्लेखमपश्यन्। आत्मग्लान्या लज्जया च नरेन्द्रस्य मस्तकमानतमभूत्।

द्वितीयदिनस्यैका घटनाऽस्ति। पुत्रं प्रति पितुः कर्त्तव्यस्य सम्बन्धे बाबूविश्वनाथो विशेषतः सावधानो बभूव, तथापि नरेन्द्रनाथस्तेन

---

* अमेरिकातस्तेन लिखितमसीत्—"यदा ममावस्था विंशतिवर्षदेशीया अभूत्, तदा ममाभ्यन्तरे समज्ञताया भावस्यात्यन्तमभावो बभूव। सर्वस्मिन् अपि विषये ममैव पक्षपातिताऽऽस्ते स्म। कलिकत्ताया यत्रोपमार्गं अभिनयगृहं, तेन पथा मया कदापि न गम्यते स्म।"

सन्तुष्टो नाऽभूत्। पितुरौदर्येण, दीनदुःखिभ्यो दानेन, बन्धुप्रीतिहेतोर्यथासमयं सर्वेषां भोजनपानादिदानेन, स्वजनबन्धूनां पालनपोषणेन च आयस्यापेक्षया समधिको व्ययोऽबोभूयत। आगामिनो दिनस्य कृते कोऽपि सञ्चयो नातिष्ठत्। पत्नीपुत्रयोर्भविष्यद्भावना न तस्यासीत्। वयसि प्रवर्धमाने नरेन्द्रनाथः परिवारभविष्यद्विषये शोचन् चिन्तितोऽभूत्। एकस्मिन् दिने तेन पिता प्रोक्तः—"मदर्थं किं कृतम्?" पिता मुखं पुत्रस्य निरीक्ष्य प्रोवाच—"गत्वा दर्पणे निजामाकृतिं पश्य, तेनैव त्वं ज्ञास्यसि यन् मया त्वदर्थं किं कृतम्।"

शिरो नम्रं कुर्वन् नरेन्द्रनाथो गतः। तेन पितुरिङ्गितमवगतम्। "तेन स्वल्पं न प्रदत्तम्, उदारहस्ताभ्यां मम जीवनमापूरितम्··· ।"

—:-*-:—

हेस्टीसाहबस्तदानीं 'जनरल-असेम्बिलज'स्याध्यक्ष आसीत्। पवित्रजीवनोदारस्वभावपाण्डित्यानां बहुमुख्याः प्रतिभायाश्च हेतुना स छात्राणां सविशेषश्रद्धापात्रतामगच्छत्। साहित्याध्यापकस्यास्वास्थ्यात् स छात्रान् साहित्यमध्यापयितुमाजगाम। 'वर्डसवर्थ'स्य 'दी एक्स्कर्शन'-नामककवितामपाठयत्। प्राकृतिकसौन्दर्यदर्शनेन पूर्णरूपेण नैजमात्मानं विस्मृत्य कवेर्मनोऽतीन्द्रियराज्यमासाद्य कथमिव समाहितं जायते, इत्यस्य व्याख्यां कुर्वन् साहबः प्रोवाच—"तादृशावस्थाधिगमो नितरां दुर्लभः। मनसः पवित्रतायाः, कस्मिंश्चन वस्तुन्येकाग्रतायाश्च फलस्वरूपा एतादृशी दशा प्राप्तुं शक्यते। मया दक्षिणेश्वरे एकमात्रपरमहंसदेवस्य तादृगवस्थासद्भावो दृष्टः। तदीया साऽवस्था यदि युष्माभिरेकदिनमपि द्रक्ष्यते तदा समाधिः किं वस्त्वित्यवधारयितुं शक्ष्यते।"

हेस्टीसाहबस्य मुखात् सर्वतः पूर्वं नरेन्द्रनाथेन श्रीरामकृष्णदेववृत्तान्तः श्रुतः, किन्तु तस्य का प्रतिक्रिया बभूवेति न ज्ञातमभूत्।

नरेन्द्रनाथो हेस्टीसाहबतो दर्शनशास्त्राण्यपठत्। छात्रस्य प्रतिभया मुग्धो भूत्वैकदिने साहबः प्रोवाच—"नरेन्द्रनाथदत्तो वस्तुत एकः प्रतिभावान् छात्रो वर्त्तते। मया अनेकानि स्थानानि दृष्टानि, परमेतादृशः छात्रः क्वापि नावलोकितः। किमन्यत्, जर्मनविश्वविद्यालयेऽपि दार्शनिकेषु छात्रेषु एतादृशो नासीत्। युवकोऽयं संसारे नूनमेव ख्यातिं प्राप्स्यति।"...

अन्तर्द्वन्द्वघातप्रतिघातैः प्रपीडितो नरेन्द्रनाथः सत्यधर्मलाभाय ब्राह्मसमाजे समधिकगमागममकार्षीत्। केशवचन्द्रः समाचारपत्रेषु भाषणेषु च श्रीरामकृष्णस्याध्यात्मिकजीवनवाणीसम्बन्धे आलोचनामकार्षीत्। एतेन कलिकत्तास्था जनसाधारणाः श्रीरामकृष्णविषयेऽनेकान् वृत्तान्तान् अवागच्छन्। ब्राह्मनेतृभिः साकं घनिष्ठभावतो मिलित्वा समाजप्रार्थनादिषु योगं दत्त्वा नरेन्द्रनाथो नितरामानन्द। रविवासरस्योपासनाकाले मधुरं ब्राह्मसंगीतं गायन् असौ सर्वानानन्दयच्च। अल्पीयसैव समयेन स ब्राह्मनेतृणां विशेषप्रियपात्रतामगच्छत् तथा च समाजस्य सभ्यो भूत्वा निराकारसगुणब्राह्मण उपासनायां व्रती बभूव। बाल्यादेव तस्य ध्यानानुष्ठानेऽभ्यास आसीत्। अतो मनःसंयमने समधिकप्रयत्नस्य न बभूवावश्यकत्वं तस्य। एवंभावेन ब्रह्मध्याने निमग्नः स सातिशयशान्ति प्रापत्।

सन्देहवादस्तदीयमनसि ईश्वरास्तित्वविषये कियन्तमपि सन्देहं कथं नाऽऽविर्भावयेत्, किन्तु जगदिदं क्षणिकं, जीवनं स्वप्नोपमं, संसारिकी सुखदुःखानुभूतिः अतीव तुच्छेतिविषये निश्चितत्वाधिगमाय सिद्धांतेनानेन तस्य महती सहायता कृता। मरीचिकावत् अलीकान्यस्थायीनि वस्तून्यभिलक्ष्य धावनं निरर्थकमेव—इति चिन्ता तस्य सम्पूर्णामपि सत्तामुन्मथितामकार्षीत्। तदीयं हृदयं विद्रोहशीलमभूत्। स च भूमान्वेषणाय व्याकुलो बभूव। ब्राह्मसमाजे गत्वा ब्राह्मनेतृणां धर्मोपदेशमश्रृणोत्, प्रार्थनादौ योगदानं चाकरोत्। हृदयस्यातृप्तवासनया सह कलिकत्तास्थविभिन्नधर्मप्राणव्यक्तीनां सान्निध्यमसावगच्छत्। चिरशान्तिः कुत्रेति तदीय एकमात्रं प्रश्न आसीत्।

ब्राह्मसमाजस्य पद्धतिबद्धयोपासनया न तदीयं मनस्तृप्तिमासादयत्। तद्दृष्ट्या तत्र सर्वमपि प्रदर्शनार्थमेवाभवत्। स च गम्भीरे भावे निमज्जनमैच्छत्। क्रमशस्तेनेदमवधारितं यद् ब्राह्मसमाज एकं समाजसंस्कारकं प्रतिष्ठानमात्रमास्ते। केशवचन्द्रं प्रति तस्य श्रद्धा आसीत्।

व्याख्यानादिश्रवणेन स तद्गुणमुग्धो बभूव। परमसौ यद् वस्तु समीहितवान् यस्यामवस्थायां स्थातुमैच्छत्—

"यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते"—*

एतस्या अवस्थाया अधिगतिं विना नैव तदीये मनसि शांतिरासादयितुं शक्यते स्म। ब्राह्मसमाजे न तेन तादृशी शान्तिरधिगता। अध्ययनं प्राचलत्, परन्तु हृदयमव्यक्तवेदनया सम्भृतं बभूव। कठोरं ब्रह्मचारिव्रतमङ्गीकृत्यासौ भूमौ शेते स्म। आहारे वेशभूषायां च संयतो भूत्वा ध्यानेन समस्तामपि निशां निनाय। हार्दिक आवेगस्तमशांतमकरोत्। स कुत्र गच्छेत्, कश्च सच्चिदानन्दब्रह्मसमुपलब्धये मार्गमादेक्ष्यति ?

महर्षिर्देवेन्द्रनाथठाकुर एकः शक्तिशाली पुरुषो महान् धार्मिको नेता आचार्यश्चाभूत्, उपासनाध्यानभजनसौविध्यहेतवे महर्षिस्तदानीं काले कलिकत्तायाः सन्निधौ गंगाया उपरि नौकायामेकस्यामतिष्ठत्।

एकदा नरेन्द्रनाथ उन्मादग्रस्त इव नौकायां प्रविश्य महर्षिं पृष्टवान्—"महाशय, किं भवता ईश्वरो दृष्टः ?"

सम्भवतो महर्षिः प्रश्नमेतं समाधातुं प्रस्तुतो नासीत्। तेन क्षणं विलोक्य युवकः प्रोक्तः—"त्वदीये नयने योगितुल्ये।" महत्या आशया सहासौ महर्षेरभ्यर्णमगच्छत्। किन्तु किमपि नासाद्य निराशो भूत्वा निववृते। तस्याशान्तिरान्तरिकी नितरां ववृधे। कुत्र प्राप्स्यते स तत्त्वदर्शी पुरुषो यः किल शान्तिमार्गं दर्शयिष्यति ? प्राचीनानाम् आर्यमहर्षीणां प्रश्नस्तमान्दोलितमकरोत्। इममेव प्रश्नं शौनकः अङ्गिरसं पप्रच्छ—"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति ?" ऋषिरेतस्य प्रश्नस्योत्तरं वेद। अतस्तेनोक्तं—"द्वे विद्ये वेदितव्ये इति ह

* गीता ६।२२

स्म यद् ब्रह्मविदो वदन्ति—परा चैवापरा च।··· अथ परा यया तदक्षरमधिगम्यते।"* किन्तु कस्तं पराया विद्याया मार्गमादेक्ष्यति ?

* * *

एतस्मिन्नन्तर्द्वन्द्वकाले तदाभ्यन्तरिको देवस्तदर्थं मार्गस्येङ्गितमकार्षीत्। अनन्तरं तेन प्रोक्तम्—"यौवने पदमर्पयतो मम तदनन्तरं प्रत्येकं रात्रौ शयानस्यैव मदीयनयनसम्मुखं कल्पनाद्वयं जागरणं गतमभूत्। एकस्यां कल्पनायां परिदृश्यते स्म यन्मया बहुविधजनधनसम्पत्सम्मानादिकं समुपलब्धम्। संसारे ये महान्तो जनाः समाख्यायन्ते, अहं तेषां शीर्षस्थानमिव समारूढोऽस्मि। एतत् प्रतीयते स्म यत् तादृशसम्पन्नताशक्तिः सत्यमेव मयि वर्तते। द्वितीये क्षणेऽहमपश्यम् यदहं सांसारिकं सर्वस्वं परित्यजन्निव केवलमीश्वरेच्छां निर्विभ्रत् कौपीनं धारयित्वा यदृच्छा-लब्धभोजनसन्तुष्टो वृक्षतले रात्रिं यापयन् जीवनं व्यतिगमयामि। एवं विज्ञायते, यदहं यथेच्छं तेन प्रकारेण ऋषिमुनिवत् जीवनयापने समर्थोऽस्मि। एतादृशद्विविधकल्पनायां समुदीयमानायामन्तिमा कल्पनैव मदीयहृदयेऽधिकारमकरोत्। मया विचारितं, परमानन्दलाभस्यायमेव मार्गः। एतेनैव मार्गेणाहं गमिष्यामि। तद्भूमानन्दविषये चिन्तयतो मम मानसमीश्वरचिन्तायां निमग्नमभूदहं च शयनमकार्षम्। आश्चर्यविषयोऽयं यद् बहूनि दिनानि यावत् प्रतिदिनमेवमेव सम्पद्यते स्म।"†

---

* मुण्डकोपनिषद्, १।१।४-५

† तेनान्यस्याप्येकस्य विषयस्य समुपलब्धिः कृता, यो न साधारणो विषयः। निद्रायाः प्रागधोमुखं शयानोऽसौ नेत्रे निमीलयन्नेव भ्रूमध्यस्थितमेकं ज्योतिःपिण्डं ददर्श। तज्ज्योतिश्च क्रमेण विविधं रंगरूपं गृह्णत् तस्य समस्तमपि शरीरमाच्छन्नमकरोत्। स हि तदखण्डज्योतिःसमुद्रे स्नात्वा शेते स्म। बहोः कालादनन्तरं मित्रैः सह वार्तां कुर्वन् असौ ज्ञातवान् यत् शयनात् पूर्वं तेषु कस्यापि तादृशं दर्शनं नाजायत।

औपनिषदा ऋषयस्तस्य हृदये समुपविष्टा इव तमशिक्षयन्—"न कर्मणा न प्रजया धनेन, त्यागेनैके अमृतत्वमानशुः।" अयममृतत्वलाभमार्गो हस्तेङ्गितेनेव तमाजुहाव।

तस्य समयस्य किञ्चिदनन्तरं पूर्वं वा अपूर्वमेकं दर्शनं तदीयमनोराज्ये युगान्तरमुपास्थापयत्। तदानीमसौ सुदीर्घकालं ध्यानमकरोत्, सच्चिदानन्दस्य ब्रह्मणो ध्यानं तस्य प्रियमभूत्, तेनासौ महान्तमानन्दमलभत। एकदा गम्भीरध्यानस्यानन्तरं तस्याव्यक्तस्यानन्दस्यावेशे तदानीमपि विमुग्धो भवन् ध्यानासने समुपविष्ट आसीत्। सहसैव तेनावलोकितम्—दिव्येन ज्योतिषा गृहं परिपूर्णमभवत्। एकस्यापरिचितस्य संन्यासिनो मूर्त्तिराविर्भूयाग्रतस्तिष्ठति। तस्यांगे गैरिकं वसनं, हस्ते कमण्डलुर्मुखमण्डले च स्वर्गीया सुषमा व्यराजत। स्थिरः प्रशान्तोऽन्तर्मुख आनन्दमयोऽसौ संन्यासी दृष्ट्यैकया किञ्चित्कथयितुमिव नरेन्द्रनाथमपश्यत्। संन्यासिनं तं स्वाभिमुखमग्रेसरन्तमवलोक्य भयेनासौ त्वरितमेव आसनं परित्यज्य पलायमानो गृहान्निर्गतः। परन्तु द्वितीये क्षण एव तेनेत्थमनुभूतं, सत्यमेव भयस्य न किमपि कारणम्। मया भ्रान्तिः कृता। साहसे समागते पुनरसौ गृहं प्रविष्टः। परन्तु स च संन्यासी तावददृश्यतां गतोऽभवत्। बहुकालं यावत् प्रतीक्षायां कृतायामपि स संन्यासी न दृष्टिगोचरो बभूव। पलायनहेतुना पश्चात्तापं कुर्वतो नरेन्द्रनाथस्य हृदयमाकुलीभूतम्। एतद्घटनाप्रसंगेनानन्तरं स प्राह—"संन्यासिनस्तु मया बहवो दृष्टाः, किन्तु तादृशी मुखस्याद्भुतकान्तिः कुत्रापि नावलोकिता। तन्मुखं चिरं मम मानसेऽङ्कितं बभूव। सम्भवति मम भ्रम एव सः। परन्तु मयैतत्प्रतीयते यत् तस्मिन् दिने बुद्धदेवस्य दर्शनमासाद्य धन्योऽहं संवृत्तः।*

---

* बुद्धदेवस्य जीवनप्रभावो नरेन्द्रनाथस्योपरि विपुलभावेन पपात। स च भगवतो बुद्धस्य हार्दिकया उदारताया महाप्राणतायाश्चातिप्रशंसामकरोत्।

नरेन्द्रनाथस्य मनोराज्ये प्रचण्डो झञ्झावातः प्राचरत्। महर्षि-वार्तया तस्य मनो न शान्तिं जगाम। सहैव भारतीया अनेकाः समस्यास्तस्य चिन्ताविषयीभूता अभूवन्। जातिगताधिकारस्य वैषम्यस्य चासौ पक्षपाती नासीत्। हिन्दुधर्मस्य संकीर्णतामपसार्य जातीयजीवनस्योज्जीवनमनुष्ठातुं तस्यैका परिकल्पना बभूव। ब्राह्म-समाजस्य प्रभावोऽपि तस्य चिन्तासमुद्रे महान्तमावर्त्तमुदपादयत्। स्वामिनो विवेकानन्दस्य स्वरूपेणासौ समाजनियमस्य यान् संस्कारा-नकार्षीत्, ते प्रथमजीवन एव तस्य हृदयेऽधिकारं कुर्वन्तस्तदीय-जीवनस्याङ्गभूता बभूवुः।

विभिन्नचिन्तानां घातप्रतिघातैरान्तरिकैर्द्वन्द्वैश्च तदीयं जीवनं जर्जरितमभूत्। इतश्च एफ० ए० परीक्षां दातुं स प्रस्तुतोऽभवत्।

---

तेनादर्शसंन्यासिना स्वीयमुक्तये न किमप्यनुष्ठितम्। तेन पत्नीं पुत्रं राजसिंहासनं चेत्यादि सर्वं परित्यज्य मानवमात्रविमुक्तेः प्रशस्तपथाविष्काराय कठोर-साधनाऽनुष्ठिता। तं महान्तमात्मानं प्रति स्वामिनो हृदयेऽगाधश्रद्धा बभूव। बुद्धदेवसम्बन्धे तेन प्रतिपादितम्—"बुद्धहृदयाभिमुखं दृष्टिं निक्षिप। किम्बहुना एकस्यातिक्षुद्रीयसः छागशिशोः प्राणरक्षायै स स्वीयं जीवनं दातुं प्रस्तुत आसीत्। बहुजनहिताय, बहुजनसुखाय—जीवनदानवार्ता, किमन्यत् कथयामि पश्य, कीदृशी तस्य विशालप्राणता कीदृशी चासीमकरुणा।···सर्वेभ्यो विशेष-तयाऽज्ञानिभ्यो दरिद्रेभ्यश्चापूर्वा समवेदनैव तथागतस्य सर्वाभ्यर्हितं महत्त्वम्। वेदान्तनीतिं कार्यरूपेण परिणमयितुमेव बुद्धदेवस्याविर्भावः। तेन सम्पूर्णा अपि विशेषसुविधाश्चूर्णीकृताः। आभिजात्यस्य सौविध्यवादस्य च ध्वंसमनुष्ठाय साम्यवादः प्रचारितः।···भगवान् बुद्धदेवः सर्वश्रेष्ठो मानवोऽपूर्वश्च संघस्रष्टा। संसारे यत्र यत्र कश्चिदपि नीतिरश्मिः परिदृश्यते स चैतस्य महामानवस्य ज्ञान-विकीर्णो वर्त्तते।"

तदानीमेवैकेनाभावनीयोपायेन श्रीरामकृष्णदेवेन साकं तस्य सम्मेलनं बभूव।

नरेन्द्रनाथेन केशवचन्द्रस्य भाषणे उपासनादौ च श्रीरामकृष्णस्य नाम समाकर्णितमासीत्। केशवपरिचालितपत्रिकादिषु च तस्य वाणी उपदेशाश्च पठिता अभूवन्। तस्मिन्नेव काले स तन्मेलनहेतवे कथमिव प्रस्तुतो जात इति नास्माभिर्ज्ञायते। श्रीरामकृष्णस्य नरेन्द्रनाथस्य च मेलनं प्राच्यप्रतीच्ययोः, प्राचीननवीनयोः, समुद्रसरितोः, स्वर्गमर्त्ययोः, विश्वभारतयोश्च मेलनमिवासीदित्यग्रे वयं द्रक्ष्यामः।...

नरेन्द्रनाथस्यावस्था तदानीमष्टादशवर्षदेशीया आसीत्। तेन प्राच्यप्रतीच्यदर्शनानां तुलनात्मकमालोचनं समनुष्ठितम्। संशयवादो नास्तिकवादश्च सम्यक् पर्यचीयेताम्। जागतिका अनेकाः समस्यास्तस्य चिन्ताविषयीभूता बभूवुः। यद्यप्यसौ ऐश्वर्यस्य क्रोडे लालितपालितः, दर्शनश्रवणलेखनपठनगानवादनभाषणदानेष्वद्वितीय आसीत्, तथापि निर्धनदुःखिनां कृते तदीयं हृदयमरोदीत्। दयामयस्य भगवतो राज्ये एतावद् दुःखं कथम्? एतस्य प्रश्नस्य समाधानं तेन किमपि न प्राप्तम्। संसारे एतादृग् वैषम्यं, धनिकदरिद्रयोरेतादृशं पर्वतवत् पार्थक्यं केन निर्मितम्? सर्वे किल भगवतः सन्तानाः, किन्तु ब्राह्मणचाण्डालयोरेतादृगदुर्लङ्घ्यान्तरालस्य सृष्टिः कथमभूत्? अन्याश्चापि शतशश्चिन्तास्तदीयं तरुणमानसं व्याकुलीचक्रुः। इतश्च शिशिरधौतकुसुमवत् तस्य जीवनं पवित्रम्। कमलदलतुल्ये तदीये नयने। गम्भीरे ध्याने निमग्नोऽसौ वह्वी रात्रीर्व्यत्यगमयत्। रात्रिपर्यन्तं ध्यानानुष्ठानेन तदीयं सुन्दरं नयनयुगलं रक्ताभमभवत्।

यो वै भूमा तत्सुखं, नाल्पे सुखमस्ति।
भूमैव सुखं, भूमा त्वेव विजिज्ञासितव्यः* ॥

---

* छान्दोग्योपनिषद् ७।२३।१

आर्यमहर्षेरियं वाणी तदीयतरुणप्राणोपरि नैजमधिकारमकरोत्। भूमानन्दान्वेषणाय तस्य प्राणा व्याकुलत्वं प्रापुः। केवलमात्मचिन्ता, आत्मनो मुक्तिर्वा न,—विश्वेषां मानवानां समस्तदुःखविमुक्तेरुपायोद्-भावनहेतवे तेन सम्पूर्णा निजशक्तिर्नियोजिता। स चासीत् ज्ञानी, गुणी, आत्मविश्वासी युक्तिवादी च।

एवं हि नरेन्द्रनाथस्य मेलनमेकेन निरक्षरेण दरिद्रपूजकब्राह्मणेन साकमभवत्। स दक्षिणेश्वरे भवतारिण्याः कालिकायाः पूजामकरोत्। भगवन्तमन्तरेण न तेन जीवने किमपि समीहितं, नापि च किमपि परिज्ञातम्। नासौ व्याख्यानमदात्, न वा प्रचारमकरोत्। न तेन कश्चिद् ग्रन्थो लिखितः, न वा हिमालयस्य कन्दरायां तपः कर्त्तुं प्रतस्थे। दक्षिणेश्वरस्य कालीमन्दिर एव प्रायशः त्रिंशद्वर्षाणि यावन्न्य-वसत्। केशवचन्द्रसेन - विजयकृष्णगोस्वामि - शिवनाथशास्त्रिप्रभृतयो ब्राह्मनेतारोऽस्य रहस्यमयपुरुषस्य चरणसरसीरुहसमीपे समागत्य बहुहोरा यावत् उपाविशन्। तस्य मुखादीश्वरप्रसङ्गं मन्त्रमुग्धा इवाशृण्वन्। तदीयभावसमाधिमवलोक्य विस्मिता अभूवन्। शास्त्रीयग्रन्थान् नाधीत्यापि स ईदृशीं सुन्दरतत्त्वकथां, यां तेऽपि न जानन्ति, कथम-कथयत्? दर्शने त्वसौ विक्षिप्तवत्प्रतीयते स्म, परिधानवस्त्रमपि न साधुरीत्या पर्य्यधत्त। परन्तु यदा मातुः स्तुतिगानमगायत्, तदानीं श्रोतॄणां हृदयानि रुरुदुः। हृदयानि शरविद्धानीव बभूवुः।

कालीमातैव तदभिमुखमीश्वरः। सैव तदर्थं ब्रह्म। लघुशिशुरिवासौ सदैव 'मातः मातः' इत्याह्वयत्। मातुर्गानमगायत्। मात्रा सह वार्तामपि अकरोत्। तस्य समीपे काली माता केवलपाषाणमूर्त्तिस्वरूपा नासीत्। माता तस्य हस्तेनाखादत्, बहूनुपदेशान् अददात्। तामेव कालीमातरं गृह्णन् चिन्तयंश्चासौ सदैव विमुग्धतामगच्छत्।

* * *

शिमलानामधेयस्य नगरविभागस्य सुरेन्द्रनाथमित्रमहोदयो

दक्षिणेश्वरे श्रीरामकृष्णमवलोक्य परिमुग्धतामगच्छत्। तस्य ईश्वर-परायणता भक्तिविश्वासः, भगवत्प्रेम, कामकाञ्चनपरित्यागः, वारं वारं भावसमाधिश्चेति सर्वमतिशयममानवीयमलौकिकं चासीत्। स किल तं देवमानवमतिघनिष्ठभावेनाधिगन्तुं—स्वीयं गृहं नगरभागं च धन्यं विधातुमीश्वरप्रणयिनं तं श्रीरामकृष्णमामन्त्र्य उत्सवानन्दमायोजितवान्, नगरभागस्य मानवाः परिचिताः सुहृदश्च तेन निमन्त्रिताः। आध्यात्मिकः समारोहः, भजनं कीर्तनम्, ईश्वरीयप्रसङ्गश्चेत्युत्सवशब्दार्थः। देवदेवीनां महिम्नो गानमाकर्णयतः श्रीरामकृष्णस्य मन एकमतीन्द्रियलोकमुपाढौकत। स च सच्चिदानन्देन परमेण ब्रह्मणा सह मिलित्वा समाधिस्थो बभूव। बाह्यज्ञानमलुप्यत्, केवलमात्मज्ञानमात्मचैतन्यमवाशिष्यत्। अस्यामवस्थायामेवासौ ईश्वरीयप्रसङ्गमकरोत्, यमाकर्ण्य जनाः परममुग्धा बभूवुः, सर्वेषामन्तःकरणेषु दिव्यो भावो जागर्तिं लेभे, सर्वे च दिव्यानन्दमास्वादयन्।

१८८१ ईसवीयो नवम्बरमासः। सुरेन्द्रनाथस्य भवने कतिभिश्चनानुरागिभिर्भक्तैः सह श्रीरामकृष्णदेवस्य शुभागमनमभवत्। एकस्य सुगायकस्याभावः प्रतीतोऽभूत्। सुरेन्द्रनाथः प्रतिवेशिनो विश्वनाथदत्तस्य पुत्रं नरेन्द्रनाथं भजन-गानार्थमाह्वयत्। गायकमवलोक्यैव श्रीरामकृष्णदेवश्चकितो बभूव। अयमसौ ब्रह्मलोकस्य ऋषिः। स युवकं पर्यचिनोत्, गृहस्य, पित्रोर्वा परिचयेन न, तदीयमलौकिकं दर्शनमेव तत्परिचयं प्रायच्छत् स विह्वलतां गतः। स तु तमेव समीक्षमाणस्तस्थौ।...

नरेन्द्रनाथः प्रसन्नेन मनसाऽगायत्। तस्य गानमाकर्ण्य श्रीरामकृष्णदेवो 'भावस्थो' बभूव। भजनादौ समाप्तिं गते श्रीठाकुरः सुरेन्द्रनाथं रामदत्तं च प्रति युवकस्य परिचयं पृष्टवान्। एकस्मिन् दिने तेन सह दक्षिणेश्वरे आगमनाय तावनुरुरोध। एतेनापि सन्तोषाभावात् स नरेन्द्रनाथं पार्श्वमाहूय स्नेहपरिपूर्णया दृशा स्वीयमान्तरिकनिधिमसौ, व्यलोकयत्। स तु नरेन्द्रनाथं निरतिशयघनिष्ठभावेन प्राप्तुमियेष

अतो विनीतस्वरेण तेन स्वयमेव नरेन्द्रनाथ एकदा दक्षिणेश्वरे आगमनाय निमन्त्रितः। शिष्टताया अनुरोधेन नरेन्द्रनाथेनापि स्वीकृतिः संप्रदत्ता।

श्रीरामकृष्णो दक्षिणेश्वरं प्रत्याजगाम, नरेन्द्रनाथोऽपि स्वगृहं प्रातिष्ठत। परीक्षा निकटवर्त्तिनो, सः अध्ययने निमग्नो दक्षिणेश्वरे गमनं विसस्मार। किन्तु श्रीरामकृष्णस्य दिनानि व्यतिगन्तुं नैच्छन्। प्रतिदिनमेवासौ तदागमनं प्रतीक्षमाणस्तस्थौ। नरेन्द्रनाथं द्रष्टुमिदानीमसौ अतिव्याकुलोऽभवत्। परन्तु नास्ति कश्चिदुपायः। अतो हृदयस्य गम्भीरमावेशं कथञ्चिन्निरुध्य तदीयमेलनप्रतीक्षायामतिव्याकुलतामनुबभूव। तेन समयान्तरे प्रोक्तम्—"नरेन्द्रं द्रष्टुं काले-काले मनस्येतादृशी वेदनाऽभवत् यदङ्गप्रोंक्षणीमिव कश्चिद् वलेन हृदयं निष्पीडयति। 'अरे! त्वमागच्छ, तव दर्शनमन्तरेण नाहं स्थातुं शक्नोमि'—एवं शब्दायमानोऽहमुच्चैररोदिषम्।"...

नरेन्द्रस्य परीक्षा समाप्तिमगात्। ततश्चासौ एकस्या अग्निपरीक्षायाः साम्मुख्यमानीतः। पित्रा एकस्य धनिकस्य कन्यया साकं तस्योद्वाहो निर्णीतः। कन्या चासीत् श्यामाङ्गी। अतोऽनेकैर्देयवस्तुभिः सार्धं दशसहस्ररूप्यकाण्यपि प्राप्तव्यान्यभूवन्। प्रस्तावमिममाकर्ण्य नरेन्द्रनाथो विद्रोही बभूव। स विवाहं कथमपि कर्त्तुं नैच्छत्। तस्य जीवने उच्चाकाङ्क्षा आसीत्। अभ्यन्तरे तेन महतः कर्त्तव्यस्य आह्वानमाकर्णितम्। विवाहमनुष्ठाय लौकिको महान् मानवो भवितुं, सर्वसाधारणवत् जीवनं यापयितुं च नासौ प्रस्तुतोऽभवत्, तस्यैकमात्रमिदमेवोत्तरम्—'कथञ्चिदपि नाहं विवाहं करिष्यामि।' नरेन्द्रनाथस्य वैराग्यप्रवणमानसे तीव्रा प्रतिक्रिया समुदपद्यत। स च ध्याने भजने च समधिकं व्यापृतः। ब्राह्मसमाजे च तस्य गमनागमनं नितरामवर्धत।

श्रीरामकृष्णस्यान्तरङ्गभक्तो रामचन्द्रदत्तो नरेन्द्रनाथस्य दूरसम्पर्कवान् सम्बन्धी अभूत्। स च नरेन्द्रनाथस्य गृह एव प्रतिपालितोऽभवत्।

पठनानन्तरमसौ डाक्टरो जातः। दक्षिणेश्वरस्य "प्रेमोन्मत्तं श्रीठाकुरं" प्रत्यसौ विशेषरूपेण अनुरक्तो बभूव। नरेन्द्रोऽपि रामचन्द्राय समधिकं प्रीणाति स्म, तं च 'रामभ्रातः!' इत्युक्त्वा समाह्वयत्। स्वकीयं हार्दं तं न्यवेदयत्। एकदा विवाहप्रसङ्गेन स्वमानसिकीमशान्तिवार्तां सुस्पष्टं तस्मै कथितवान्। तदीयां वार्त्तामाकर्ण्य रामचन्द्रदत्तः स्नेहमयेन स्वरेण तमुवाच—"भ्रातः, यदि यथार्थतो धर्मलाभस्तव जीवनस्योद्देशस्तदानीं ब्राह्मसमाजादिस्थानेषु व्यर्थमटनं परित्यज्य दक्षिणेश्वरे परमहंसदेवसन्निधानं व्रज।"

तस्य सम्मतिं नरेन्द्रनाथः स्वीचकार। पार्श्ववर्त्ती सुरेन्द्रनाथस्तमेकदा स्वीयशकट्या दक्षिणेश्वरे गन्तुमाजुहाव। द्वित्रैर्मित्रैः सह नरेन्द्रः सुरेन्द्रनाथस्य शकट्या दक्षिणेश्वरमाजगाम।



१८८१ ईसवीयो दिसम्बरमासः। गङ्गाभिमुखद्वारेण सहचरैः सार्धं नरेन्द्रनाथः श्रीरामकृष्णगृहं प्रविष्टः। दृष्ट्वैवानन्दितः श्रीठाकुरोऽभिमुखकुट्टिमविस्तारिते कटे नरेन्द्रमुपवेशनायादिदेश। अनन्तरं च गानं श्रावयितुमनुरुद्धो नरेन्द्रनाथोऽब्रवीद् यदसौ द्वे चत्वारि वा वंगीयगानानि गातुं जानाति। तेष्वेकं गातुमादिष्टः।

(१) मन चलो निज निकेतने।

संसार विदेशे विदेशीर वेशे, भ्रमो कैनो अकारणे।
विषय पञ्चक आर भूतगण सब तोर पर, केउ नय आपन।
परप्रेमे कैनो होये अचेतन, भुलेछो आपन जने।
साधुसंग नामे आछे पान्थधाम,
श्रांत होले तथाय करिओ विश्राम।
पथ-भ्रान्त होले सुधाइयो पथ, से पांथ-निवासिगणे॥
जदि दैखो पथे भयेरि आकार, प्राणपणे दियो दोहाई राजार
से पथे राजार प्रबल प्रताप, शमन डरे जाँर शासने॥

अर्थात्

हे मनः! व्रज निज निकेतनम्।

संसार-विदेशे विदेशीयवेशे भ्रमसि कथमकारणम्।
विषयपंचकं भूतगणः, कोऽपि नास्ति तव निजमयनम्।
परप्रेम्णि कथमसि अचेतनम्, विरहयसि निजजनम्।
साधुसंगनामास्ति पान्थधाम, श्रान्तः कुरु तत्र विश्रामम्।

पथिभ्रांतः पृच्छतु पंथानम् गत्वा पांथनिवासिगणम् ।
यदि पश्यसि भयस्य कारणम्, प्राणपणैः स्मर करुणागारम् ।
तत्र पथि तस्य प्रबलप्रतापः, शमनोऽपि समयं स्मरति
यस्य शासनम् ।

गानमिदमसौ मनसा प्राणैश्च समाधिस्थ इव भूत्वा जगौ । सुमधुरस्वरझङ्कारेण समस्तमपि गृहं गुञ्जितमभूत् । श्रीरामकृष्णदेवो नैजमात्मनं निरोद्धुं नाशक्नोत् । 'अहा ! अहा !' इत्युच्चारयन् सहसा समाधिस्थोऽभूत् । तदनन्तरं तदनुरोधात् द्वितीयं गानमगायत्—

( २ ) जावे कि हे दिन आमार बिफले चलिये,
आछि नाथ दिवानिशि, तव आशापथ निरखिये ।
तुमि त्रिभुवननाथ, आमि भिखारी अनाथ ।
कैमने बलिबो तोमाय एशो हे मम हृदये ।
हृदयकुटीरद्वार खुले राखि अनिबार ।
कृपा कोरे एकबार एशे कि जुड़ावे हिये ॥

अर्थात्

गमिष्यति किं मम दिनं विफलम्,
करोमि नाथ दिवानिशं, त आशापथ-विलोकनम् ।
त्वमसि त्रिभुवननाथः, भिक्षुकोऽस्म्यहमनाथः ।
किमिव कथयामि त्वाम्, एहि मम हृदयम् ।
हृदय-कुटीर-द्वारम् अपिहितं मेऽनिवारम् ।
कुरु कृपामेकवारम्, एत्य शमय हृदयमशान्तम् ॥

तदनन्तरमेका अचिन्तनीया घटना घटिता । नरेन्द्रस्य सर्वे विचारा वैपरीत्यं गताः । सहसैव श्रीठाकुरो नरेन्द्रस्य करं गृहीत्वा उत्तरस्यां दिशि स्थूलवस्त्रपरिवेष्टित उपप्रकोष्ठे तं समानीयाश्रूणि विमुञ्चन्नुवाच—"एतावद्दिवसानन्तरमागतोऽसि ? अहं त्वां प्रतीक्ष-

माणो व्याकुलस्तिष्ठामि। अत्र किञ्चिद् अवधानं देयमासीत्।" ..
द्वितीये क्षणे करौ बद्ध्वा रुदन्नसौ प्रोवाच—"अहं जानामि प्रभो, त्वं स एव पुरातन ऋषिः, नररूपे नारायणोऽसि, जीवानां दुर्गति-निवारणाय पुनः शरीरं धारयित्वा समागतोऽसि।"

श्रीठाकुरस्यैतेनापूर्वाचरणेन तस्य मनसि या प्रतिक्रिया समुद-पद्यत, तां बहुदिनानन्तरं नरेन्द्रनाथोऽब्रवीत्—"अहं तु तादृशव्यव-हारेण सहसा निर्वाक् स्तम्भितश्चाभूवम्। मनसि व्यचारयम्—कं द्रष्टुमागतोऽस्मि। अयं तु नितरामुन्मादी। अन्यथा अहं विश्वनाथदत्त-पुत्रः, मामेतादृशीं वार्तां कथयति ? यदस्तु, अहमवागतिष्ठम्। असा-वद्भुत उन्मादी यन्मनस्यायातमकथयत्। द्वितीयक्षणे मम तत्रैव स्थितिमादिश्य स गृहे प्राविशत्, नवनीतं, सितां, किञ्चिन्मधुरं च समानीय स्वकीयेन हस्तेन मां भोजयितुं तत्परो बभूव। मयोक्तम्—"मह्यं दीयतामहं सहचरेभ्यः प्रदाय भक्षयिष्यामि।" परन्तु तेन ममै-कमपि न श्रुतम्, उक्तं च—"अनन्तरं तेऽत्स्यन्ति।" इति व्याहृत्य मां सर्वं तत् स्वहस्तेनैवाभोजयत्। ततश्च शांतो बभूव। अनन्तरं च मम हस्तं गृहीत्वा जगाद—"कथय, त्वरितमेवैकस्मिन् दिनं त्वमत्रै-काकी समागमिष्यसि ?" तस्यैकांतमनुरोधमस्वीकर्त्तुमशक्नुवन् 'समा-गमिष्यामि' इत्यवोचम्। ततस्तेन साकं गृहमागत्य सहचरैः सहोपा-विशम्।" ..

परन्तु गृहे समायात एव श्रीठाकुरः अन्यो मानव इवाभवत्। कुत्रापि कथने ईषदपि असंगतता नासीत्। अनेकधा वर्णित ईश्वरीयः प्रसंगः। तस्य भावसमाधिरभूत्। नरेन्द्रनाथस्तं रहस्यमयपुरुषं विस्मय-मुग्धचेतसाऽपश्यत्। मुग्धः सन् तदीयां वार्तामालोचयत्। अयं यत् किमपि वक्ति, तत् पुस्तकरटितं वचनं न प्रतीयते।

भगवान् द्रष्टुं शक्यते न वा, इति प्रसंगे श्रीठाकुर आशासमन्वितं वचनं श्रावयन् उवाच—"ओम्, स द्रष्टुं शक्यते। यथा त्वां पश्यामि

त्वया साकं वार्ता करोमि, तथैवेश्वरोऽपि द्रष्टुं शक्यते, तेन सह वार्ताऽपि भवितुमर्हति। परन्तु एवं कः समीहते?... जनाः पत्नी-पुत्रार्थमश्रूणि प्रवाहयन्ति, विषयसम्पत्तिद्रव्यादिभ्यो रुदन्ति, परन्तु भगवान् न प्राप्त इति हेतोः को रोदिति?.... स यदि नाधिगत इति-कारणाद् रुदन् तं कश्चिद् आह्वयति, तदासौ नूनं दर्शनं ददाति।"...

श्रीरामकृष्णदेवस्य वचनं नरेन्द्रनाथस्य हृदये निविविशे। स मौनमाश्रयन् व्यचारयत्—"...उन्मादे सत्यपीश्वरकृते त्यागमेतादृशं संसारे विरल एव मानवः कर्त्तुमपारयत्। उन्मादोऽप्ययं महान् पवित्र-स्त्यागी च। अयमीश्वरं दृष्टवानस्ति। मानवहृदयस्य श्रद्धामर्चां च समधिगन्तुमर्हति।"

श्रीरामकृष्णसम्बन्धे बहुविधां वार्तामालोचयन् नरेन्द्रनाथस्त-स्मिन् दिने कलिकत्तां प्रत्यागच्छत्। किन्तु श्रीरामकृष्णस्य वार्तालापेन व्यवहारेणाद्भुतेन च तस्य मनसि तुमुलो झञ्झावातः समुत्पादितः। यथा यथा स व्यचारयत्, तथा तथा तस्य अर्धोन्मादिमानवस्य जीवनं गूढतापरिपूर्णं प्रतीतमभवत्। तस्य वचनं नूनमुन्मत्तप्रलाप इति न तिरस्कर्तुं युज्यते। ततः प्रभृति नरेन्द्रनाथस्य बलिष्ठं मनो गम्भीरं ध्यानं च श्रीठाकुरजीवनरहस्योद्घाटने नियोजितमभूत्।

  

गृहमागत्यासावध्ययने मनो निवेशयितुं प्रयतितवान्, परन्तु श्रीरामकृष्णं न विस्मर्त्तुमशक्नोत्। तस्य प्रत्येकं वचनं व्यवहारश्च नरेन्द्रनाथस्य मनसि महान्तं विस्मयमुदपादयत्। तदीयं निखिलमेव दुर्बोधं रहस्यपूर्णमभूत्। यावद् व्यचारयत्, तावदेव चित्तं विभ्रान्त-मबोभूयत—किमपि समाधानं नालभ्यत। श्रीरामकृष्णसत्संगमुहूर्तः स्वप्नसमानः प्रतीतोऽभूत्। रात्रिन्दिवं प्रतिक्षणं च श्रीरामकृष्णचिन्त-नानि तमस्थिरमकार्षुः। एकमनिर्वचनीयमाकर्षणं तदीयं सुदृढमपि

मानसमभ्यभवत्। बहुविधचिन्ताविक्षिप्तो नरेन्द्रनाथः प्रायश एक-मासानन्तरमेकदा दक्षिणेश्वरमेकाकी प्रतस्थे। श्रीरामकृष्णस्तदागमन-सुसमाचारमवागच्छदिव। अतः सोऽप्येकाकी स्वीयप्रकोष्ठे लघीय-सोमेकां चतुष्कीं समुपविश्य प्रतीक्षते स्म।

नरेन्द्रमवलोक्यैव आनन्देनाधीरो भूत्वा—'त्वमागतः!' इत्युक्त्वा तस्य हस्तं गृहीत्वा स्वकीयां चतुष्कीमध्यास्य स्नेहदृशा निर्निमेषमसौ नरेन्द्रमपश्यत्। सहसैव श्रीठाकुरस्याभ्यन्तरेऽद्भुतं भावान्तरम-भवत्। भावाविष्ट इवासौ अस्फुटस्वरेण मनसीव किञ्चिदस्पष्टमुच्चा-रयन् नरेन्द्रस्याभिमुखं सरन्नागन्तुं प्रवृत्तः। तदग्रिमघटनां नरेन्द्रनाथः स्वयं जगाद—"मया विचारितं विक्षिप्तोऽयं पूर्वदिनवत् सम्भवतः किञ्चिद् विक्षिप्तत्वमाचरिष्यति। एतादृश्यां चिन्तायां समुत्पन्नाया-मेवासौ सहसा मत्सन्निधानमागत्य दक्षिणेन चरणेन मामस्पृशत्। स्पर्शेनैतेन तत्क्षणमेव ममैकाऽपूर्वाऽनुभूतिरभूत्। नयने अनिमीलिते आस्ताम्। दृष्टं—भित्तिभिः सह सर्वाणि वस्तूनि वेगेन भ्राम्यन्ति कुत्रापि लीनतां प्रपद्यन्ते, समस्तैर्ब्रह्माण्डैः सह च मम "अहं"-भावो-ऽपि अकस्मादेकत्र सर्वग्रासिनि महाशून्ये एकाकारतां लब्धुं धावन् जंगम्यते। भयेनाहमभिभूतोऽभवम्। 'अहं'-भावनाश एव हि मृत्यु-रिति चिन्तितम्। स च मृत्युः सम्मुखे, अतिसमीपे च। आत्मानं स्थिरीकर्त्तुं सामर्थ्यविरहादहं चीदकरवम्- 'अये, त्वया मम किं कृतम्। मम तु मातापितरौ स्तः।'

"विचित्रविक्षिप्तोऽसौ श्रुत्वेमां वार्तामुच्चैर्जहास। हस्तेन मम वक्षः स्पृशन्नसावुवाच—'तदेदानीं तिष्ठतु। एकवारं न हिं, तदा पुनर्भ-विष्यति।*' आश्चर्यमिदं यत् तस्य स्पर्शेन तादृशवार्ताकथनेनैव ममापूर्व

* नरेन्द्रनाथो यस्यै ब्रह्मज्ञानोपलब्धये एतादृशो व्याकुल आसीत्, तदेव ब्रह्मज्ञानं तस्मिन् दिने श्रीरामकृष्णदेवो नरेन्द्रनाथाय प्रदातुमियेष। परन्तु अनंतरं तेन विचारितं यत् समयोऽसौ नायातः। तच्च निर्विकल्पं ब्रह्मज्ञानं बहुभ्यो वर्षेभ्यः

तत्प्रत्यक्षदर्शनं विलुप्तमभूत्। अहं प्रकृतिस्थोऽभवम्। गृहस्याभ्यन्तर-बाह्यस्थानि वस्तूनि यथापूर्वमवस्थितानि दृष्टानि।…"

चक्षुषोर्निमेषमात्रेणैव तादृशमुपातिष्ठत्। नरेन्द्रनाथ आश्चर्यचकितो बभूव। तस्य मानसे युगान्तरमुपतस्थौ। किमियं सम्मोहिनी विद्या? इन्द्रजालं वा किंवाऽन्यत् किमपि। किन्तु नरेन्द्रनाथस्य मनस्तत्स्वीकर्तुं नैच्छत्। तदीयं मानसमेतावद् दुर्बलं नास्ति। स च प्रबलेच्छाशक्ति-सम्पन्नो वर्तते। क्षणेनैव तं प्रभाववशगं कर्तुं कथं सम्भवम्। स तु तमर्धविक्षिप्तं कथयति। कुत्राप्येकस्मिन् सिद्धान्ते गन्तव्यमेव। मनसि विक्षोभः समुत्पन्नः। महाकवेर्वार्ता स्मृतिपथमागता—"स्वर्गे भुवि च तादृशान्यनेकतत्त्वानि सन्ति, येषां रहस्यभेदनं मानवबुद्धिविरचित-दर्शनशास्त्राणि न कर्तुं शक्नुवन्ति।"

परन्तु तेन दृढसंकल्पोऽयं कृतः—यदहमेतस्य हस्तयोः क्रीडनिका न भविष्यामि। साधुरीत्या सावधानेन भवितव्यम्। आत्मानं प्रकृतिस्थं स्थापयिष्यामि, संरक्षितं च करिष्यामि। तेन श्रीरामकृष्णविरुद्धा युद्ध-घोषणेव कृता। पुनस्तेन चिन्तितम्—यः पुरुषः क्षणेन मादृश-सुदृढेच्छा-शक्तिसम्पन्नं मानसं कर्दमपिण्डमिव त्रोटयितुं स्फोटयितुं च पारयति, स साधारणमानवो नास्ति! स चासाधारणशक्तिसम्पन्न एव! तस्य आत्मविश्वासे चित्तदृढत्वे च एकः प्रचण्ड आघातो जातः।

एतस्या घटनाया अनन्तरं श्रीठाकुरः पूर्णतया भिन्नो व्यक्तिविशेषो जातः। एवंप्रकारेण नरेन्द्रं भोजयितुं सम्मानयितुं प्रवृत्तः। विविध-भावेनासौ स्नेहं प्रादर्शयत्। एतेन तृप्तिं नाध्यगच्छत्। इतः सन्ध्या संवृत्ता। नरेन्द्रेण कलिकत्तायां प्रत्यागन्तव्यमास्ते। अतोऽसौ

---

समनन्तरं काशीपुरोद्याने नरेन्द्रनाथाय तेन प्रदत्तम्। कालोऽप्येको महान् वस्तुविशेषः। कालस्योपेक्षा नैव कर्तुं शक्यते। एतस्य शुभमुहूर्तस्य प्रतीक्षा-व्यतिरिक्तः कश्चिदन्य उपायो नास्ति।

श्रीठाकुरस्याज्ञां ग्रहीतुमगच्छन्। श्रीठाकुरेण आग्रहः कृतः, उक्तं च—"वद, शीघ्रमागमिष्यसि ?" अतोऽसौ स्वीकृतिं दत्वा कलिकत्तामागतः।

परन्तु स नैजं मनस्तद्घटनाप्रभावान्मुक्तं कर्तुं नाशक्नोत्। स च दृढसंकल्पो भूत्वा तद्रहस्यपरिज्ञानाय कटिबद्धो बभूव। इतश्च श्रीरामकृष्णचिन्ता तदीयसमस्तसत्तायामधिकारं कृतवती। तस्याद्भुतपुरुषप्रवरस्य वार्ता यथा यथाऽसौ व्यचारयत्, तथा तथा तत्सर्वं दिनस्वप्नसदृशं प्रतीयमानमभूत्। किमपि ज्ञातुं नाशक्नोत्। एवं चिन्ताकुलचित्तः प्रायश एकसप्ताहानन्तरं पुनरसौ दक्षिणेश्वरमगच्छत्। श्रीठाकुरेणापि तस्य सबहुमानं स्वागतं कृतम्। तस्मिन् दिवसे श्रीठाकुरस्तमादाय यदुमल्लिकस्य समीपस्थोद्याने भ्रमणायागच्छत्। कांश्चन क्षणान् इतस्ततो भ्रमणं विधाय द्वावपि प्रकोष्ठे समागत्योपविष्टौ। दर्शं दर्शमेव श्रीठाकुरो भावान्तरं प्राप्तः समाधिस्थो बभूव।

नरेन्द्रः सर्वं सधैर्यं व्यलोकयत्। श्रीठाकुर एकवारं नेत्रे समुन्मील्यापश्यत् पूर्ववत् सहसा तमस्पृशच्च। विशेषसावधानोऽपि नरेन्द्रनाथस्तेन शक्तिपूर्णस्पर्शेन पूर्णतयाऽभिभूतो बभूव। अनेकप्रयत्नानुष्ठानेऽपि स आत्मानं सम्यक् रक्षितुं नाशक्नोत्। तदीयं बाह्यज्ञानं व्यलुम्पत्। स च कियत्कालं यावत् तदवस्थायामासीत्, अथवा तदीयो बोधः कथं प्रत्यावर्त्तितः, एतस्य किञ्चिदपि परिज्ञानं तस्य नासीत्। परन्तु बाह्यावबोधे समुत्पन्ने सोऽपश्यत्—श्रीरामकृष्णो मधुरस्मितेन सह तस्योरसि सस्नेहं हस्तं भ्रामयति। स च चिन्तां महतीं प्रपन्नो नितरामसहायमात्मानमबुध्यत।

तस्य दिवसस्य घटनासम्बन्धे श्रीरामकृष्णदेवः परवर्त्तिनि काले जगाद—"बाह्यज्ञाने विलुप्ते तदानीमहं नरेन्द्रमनेकवृत्तान्तमपृच्छम्—कोऽसौ, कुतः समागतः, कथमुत्पन्नः, संसारे च कियन्ति दिनानि स्थास्यति इत्यादि। तेनापि तदवस्थायामेव निजान्तरतमप्रदेशप्रविष्टेन

तें प्रश्नाः सत्यं सत्यं समाहिताः।...तस्य सम्बन्धे मया यत् किमपि दृष्टं विचारितं च तत्सर्वं तस्य तात्कालिकेनोत्तरेण सत्यं प्रमाणितमभूत्। अयं सर्वो गुप्तो वृत्तान्तः। तथा वार्तया मया परिज्ञातम्—"नरेन्द्रो यदा ज्ञास्यति यदयं कोऽस्ति, तदानीमसौ लोकेऽत्र न स्थास्यति, दृढसंकल्प-साहाय्येन योगबलं द्वारीकृत्य च स्वशरीरं तदैव स परित्यक्ष्यति। नरेन्द्रो ध्यानसिद्धो महापुरुष आस्ते।"

प्राक् श्रीरामकृष्णदेवेन दृष्टं यत् ज्योतिर्मण्डलस्यैक ऋषिरेव नरेन्द्र-रूपेण जन्म जग्राह। इदानीं तस्य दर्शनस्य सत्यतायाः प्रमाणमधिगत्य निश्चिन्त इवासौ बभूव। परन्तु इतो नरेन्द्रस्याभिमाने प्रचण्ड आघातो-ऽभवत्। दैवशक्तेरभिमुखमसौ नितरामसहायः शिशुरेवास्ति। अयमुन्मत्त इति कथनमुचितं नास्ति—अयमलौकिकशक्ति-सम्पन्नो देवमानवः। साधनां द्वारीकृत्य तेन या किलामानवीया शक्तिः समु-पार्जिता, तस्याः सम्मुखे मनुष्यस्य व्यक्तिता शक्तिश्च कियती तुच्छा वर्त्तते? तस्य चिन्ताराज्ये भयंकर एको विप्लव उपातिष्ठत्। किन्तु कस्यापि वस्तुनस्तथ्यपरीक्षणमन्तरेणैव ग्रहणं तस्य स्वभावविरुद्धमासीत्। अतोऽसौ जलाभ्यन्तरप्रवेशीव चिन्तासागरे न्यमज्जत्, श्रीरामकृष्ण एव तस्य परीक्षायाश्चिन्तायाश्च विषयो जातः। तद्ग्रहणात् पूर्वं यथाशक्ति उत्तमरूपेण 'निकषोपले' तं परीक्षितुमियेष—विश्लेषकदृशा सम्यगवधारयितुमैच्छत्। श्रीरामकृष्णदेवस्यानुपमस्त्यागः, तपः, प्रेम, पवित्रता, सारल्यम्, ईश्वरपरायणत्वं, भागवतजीवनं चेति सर्वं नरेन्द्रस्य चिन्ताविषयीबभूव। तेनावधारितं यत् श्रीरामकृष्णो विशेषशक्तिशाली महापुरुषो वर्त्तते। धर्मस्येतिहासे येषां देवमानवानामुल्लेखो लभ्यते, तैः सह सोऽप्येकासने उपवेष्टुमर्हति।...

श्रीरामकृष्णस्य सन्निधाने तेन स्वीयं गमनागमनं न निरुद्धम्, प्रत्युत तदीयस्वेच्छाविरुद्धमिव तस्य गमागमौ प्रावर्धेताम्। स च श्रीरामकृष्णस्य नानाप्रकारेण परीक्षणं, तदीयकार्यजातस्य सूक्ष्मरूपेण

विश्लेषणमकार्षीत्। शक्तिशाली चुम्बको लघुलौहखण्डमिव श्रीराम-कृष्णोऽपि नरेन्द्रं स्वाभिमुखमाकर्षत्।...

श्रीरामकृष्ण इदमज्ञासीद् यदसौ किमर्थं देहधारणमकरोत्, नरेन्द्रेण च सह तस्य कीदृशः सम्बन्धः! अतोऽस्माभिर्दृश्यते—नरेन्द्रस्य दक्षिणेश्वरागमनात् बहुकालात् पूर्वत एव तेन स्वीयमनोबलेन स्वकीया वार्तावाहकाः समाचकर्षिरे। दक्षिणेश्वरसौधपृष्ठोपरि दण्डायमानः स कातरस्वरेण समाजुहाव—"अरे, यूयं के, कुत्र स्थ, आगच्छथ।" तस्य तदाह्वानध्वनिः केवलं वायुमण्डलमान्दोलयन् न विलुप्तो बभूव। तदीयसार्थकाह्वानफलस्वरूपेणैव नरेन्द्रनाथप्रभृतयो जनास्तदीयवार्त्ता-वाहकाः क्रमशो दक्षिणेश्वरे समवेता अभूवन्। स हि तेषामज्ञान एव स्वकीयानां भविष्यतां संन्यासिपार्षदानामाध्यात्मिकजीवनमतिनिपुण-हस्तेन परिपूर्णमाधुर्यमयं संघटितमनुष्ठातुमचेष्टत।

श्रीरामकृष्णपार्षदेषु नरेन्द्रनाथस्यैकं विशिष्टं स्थानम्। स च युगधर्मप्रचाराय सर्वश्रेष्ठयन्त्ररूपतो निर्वाचितोऽभूत्। श्रीरामकृष्णः प्रोवाच—"नरेन्द्रो लोकशिक्षां दास्यति।" धर्मग्लानिविनाशमहाकार्य-भारो नरेन्द्रनाथं निर्विभर्त्ति स्म। अत एव विरुद्ध-विजातीयानिष्टकर-प्रभावतो नरेन्द्रं संरक्षितुं श्रीरामकृष्णमनसि तं प्रत्यसाधारणसाकर्षण-मद्भुतं प्रेम, सावधानदृष्टिश्च समभूवन्। कानिचिद्दिनानि यावन्नरेन्द्र-नाथस्य दक्षिणेश्वरागमनविरहादसौ तमवलोकयितुं नितरां व्याकुलत्व-मन्वभवत्। तद्व्यतिरिक्तं च स्वीयभावप्रचाराय नरेन्द्रजीवनस्य सर्वाङ्गसुन्दरमहाशक्तिशालियन्त्रस्वरूपेण प्रस्तुतीकरणाय विशेषशिक्षा-दीक्षादीनां, तत्राध्यात्मिकशक्तिसञ्चारस्य चावश्यकत्वमभूत्।...

किंतु तदीयं प्रेम शारीरिकं न, ईश्वरीयमासीत्। यस्य प्रेम्ण आकर्षणेन राजपुत्रः पत्नीतनूजान् राजसिंहासनं च परित्यज्य चीरधारी सन् वनं गच्छति, श्रीरामकृष्णोऽपि तदेवालौकिकं प्रेम द्वारीकृत्य नरेन्द्रनाथमाचकर्ष, तस्य जीवनं मोहविरहितं विधातुं दार-वित्त-

लोकैषणाः पूर्णतया विरहय्य परमतत्त्वधारणप्रचाराय तमुपयुक्तमाधारं निर्मातुं सदा सचेष्ट आसीत्। किं नरेन्द्रः पाषाणमयः? नैवम्, स खलु रामकृष्णस्याहैतुकप्रेमगाम्भीर्यं सदाऽवाधारयत्। स स्वहृदये तदन्वभवत्। किंतु प्रारम्भेऽसौ तस्य निग्रहे नागन्तुमैच्छत्। श्रीरामकृष्णः कथं तस्मिन् स्निह्यति इति स न तावदवागच्छत्। एतदतिरिक्तं, श्रीरामकृष्णस्य पूर्णरूपेण परीक्षां विना तं पूर्णतया न ग्रहीष्यति—नरेन्द्रनाथस्यैतादृश एव मनोभावः। अनन्तरं च स श्रीरामकृष्णं स्वजीवनस्यैकमात्रादर्शरूपेणागृह्णात्, मानवदेहेऽवतीर्णं श्रीभगवतः श्रेष्ठविकासस्वरूपं च तममन्यत। परमेतदेकदिनेन दिनद्वयेन वा न बभूव। सुदीर्घं पञ्चवर्षाणि तेन पदे पदे श्रीरामकृष्णस्य परीक्षणमनुष्ठितम्। तस्य प्रत्येकं कार्यं, प्रत्येकं व्यवहारः, प्रत्येकमलौकिकं दर्शनं च पूर्णरूपेण तेन विचारितम्। यथा सुवर्णं मार्जनघर्षणादिना समुज्ज्वलं भवति, तथैव श्रीरामकृष्णजीवनमपि परीक्षणैरेभिरधिकं समुज्ज्वलमभवत्।

तस्मिन् दिवसे विभ्रान्तचेतसा नरेन्द्रनाथेन दक्षिणेश्वरात् स्वगृहमागतम्। बी० ए० कक्षायामपठत्। अध्ययने मनो निवेशितम्। ब्राह्मसमाजे गतागतं कृतम्। समाजस्य रविवारस्योपासनाकाले तस्य मधुरं प्रार्थनासंगीतं सर्वानपि मुग्धानकरोत्। विभिन्नस्थानीयधर्मालोचनासु स सम्मिलितोऽभवत्। सङ्गीतचर्चा न परित्यक्ता। मित्राणां सम्मेलने गन्तव्यमेवाभवत्! समाजसंस्कारविधवाविवाह-खाद्याखाद्यविचार-जातिविवेकादिविषयेषु स ओजस्वि भाषणमदात्।*

श्रीठाकुरस्य जीवनं तदभिमुखं प्रहेलिकावत् प्रतीयते स्म। सत्योपलब्धिस्तस्य जीवनोद्देशः। एतदर्थमसौ जीवने पणमकरोत्। सत्यद्रष्टुः पुरुषस्यातिरिक्तो न कोऽप्यन्यो मानवस्तस्मिन् मार्गेऽग्रेसारयितुं साहाय्यं दातुं च समर्थः—एतदप्यसाववेदीत्। परन्तु श्रीरामकृष्ण-

* श्रीरामकृष्णदेवोऽवदत्—"नरेन्द्रो नग्नः करवाल इव।"

सम्बन्धे स तदानीं यावदपि कमपि निश्चितसिद्धान्तं न प्राप। तस्यालौकिकी शक्तिस्तदीयविस्मयहेतुतामभजत्।...

तीव्रा मेधा, उर्वरं मस्तिष्कं, सबलो देहः, बलिष्ठं मानसं, पृथ्वीपर्यटनसमर्थौ द्वौ पादौ, सर्वमेतत् स्वसहायकं गृहीत्वा स सत्यस्यान्वेषणे चलितुं शक्नोति। एतादृशे संकल्पे सुदृढो भूत्वा पुरुषकारमधिकं मन्यमानः कठोरकौमार्यव्रते, कृच्छ्रसाधने च व्रती बभूव। गेहे स्वाधीन-जीवनयापने, ध्याने, भजने चासौविध्येन हेतुना पार्श्वस्थे मातामहीगृहे एकस्मिन् प्रकोष्ठे एकाकी न्यवसत्। प्रकोष्ठं तदतिविविक्तं लघुतरं चासीत्। तत्र किंचिद् वस्त्वपि नाभूत्। कुट्टिमे शेते स्म। चतुर्दिक्षु पुस्तकानि विकीर्णान्यभूवन्। केवलं 'चाय'पदार्थसाधनानि बभूवुः। मध्ये मध्ये 'चाय'मपिवत्। रात्रिन्दिवमपठत्, ध्याने धारणायां च न्यमज्जत्। परन्तु समाधानं न किमपि प्राप्नोत्। यावद्ध्यानमग्नस्तावन्मनसः समस्तामपि चिन्तां निःसार्य विमलमानन्दमनिर्वचनीयां प्रशान्ति चानुबभूव। किन्तु ध्याने भग्ने चिन्ताशतसर्पिणीदष्ट इव समुद्विग्नोऽभवत्। तदीयो मानसिकः संग्रामो निद्रावस्थायामपि प्राचलत्।

यस्मिन् दिने तेन श्रीरामकृष्णमुखादाकर्णितं यदीश्वरो द्रष्टुं शक्यते, तेन साकं वार्ताऽपि कर्त्तुं पार्यते, तस्माद् दिनादेव वृत्तान्तोऽसौ तस्य मानसमारूढः। तेनेत्थमप्यवधारितं यद् वृत्तान्तोऽसौ अर्थहीनः प्रलापमात्रं नास्ति। श्रीरामकृष्णेन स्वयमीश्वरं दृष्ट्वैव तादृशमुक्तम्। तथापि तस्य विद्रोहशीलं मनस्तस्य शिष्यतायै प्रस्तुतं नाभूत्।

नरेन्द्रनाथो ब्राह्मसमाजे नियमितरूपेण यातायातमकरोत्। ईसाईधर्मप्रचारकाणां व्याख्यानमप्यशृणोत्। स मूर्त्तिपूजायाः प्रबलो विरोधी। रामकृष्ण आसीत् कालीमातुरुपासकः। तत्सन्निधाने काली

मातैव ब्रह्मस्वरूपा।* नरेन्द्रनाथो दक्षिणेश्वरं गतोऽपि कालीमन्दिरं नागच्छत् न वा कालीमूर्त्तेः प्रणाममकरोत्।

अन्यच्च नरेन्द्रे दक्षिणेश्वरमागते श्रीरामकृष्ण आनन्देनाधीरोऽभवत्। बहुधा तमवलोक्यैव श्रीठाकुरस्य मनो भावराज्यमाविशत्। सहजावस्थायामागत्य महताऽऽनन्देन बहूनामाध्यात्मिकानुभूतीनामलौकिकदर्शनानां च वार्तामकथयत्। स्नेहपूर्णेन स्वरेण नरेन्द्रं गानं श्रावयितुमनुरुरोध। इतश्च गानं शृण्वन् स समाधिस्थोऽभवत्। "यत् किमप्यस्ति, तत्त्वमेव"—इति गानं श्रीरामकृष्णस्याधिकं प्रियमासीत्। तदाकर्ण्य नासावतृप्यत्। नरेन्द्रं भोजयित्वा विविधप्रकारेण स्नेहं दर्शयित्वाऽपि न सन्तोषमवाप। नरेन्द्रे दक्षिणेश्वरमागते तत्रानन्दोत्सवोऽस्रोभूयत। सोऽपारमानन्दमन्वभवत्। परन्तु श्रीरामकृष्णस्यालौकिकदर्शनादिषु नरेन्द्र ईषदपि नैव विशश्वास। एकेनैव वाक्येन सर्वं निराकुर्वन्नसौ प्रोवाच—"भवान् ईश्वरस्य रूपादिकं यत् किमपि पश्यति, तत्सर्वं भवतो मस्तिष्कस्य कल्पनामात्रम्।"

नरेन्द्रस्य वार्तामाकर्ण्य श्रीरामकृष्णः कदा कदापि विचचाल। स व्यचारयत्—"किं मम दर्शनादिकं सर्वं भ्रममात्रम्? किं तत्सर्वं मानसिककल्पनाविजृम्भितम्?" एतस्या दुर्भावनाया अन्तोऽपि नासीत्। एकदा व्याकुलेन सता मन्दिरं गत्वा तेन श्रीभवतारिणी पृष्टा—"मातः, एतावद्दिनपर्यन्तं यत् त्वया दर्शितं किं तत्सर्वं भ्रमस्य

---

* 'सर्वं खल्विदं ब्रह्म' एतस्य सीमितव्याख्यां ये कुर्वन्ति, 'सर्वं ब्रह्ममयं जगत्' इति तत्त्वं गृहीत्वापि प्रतीके मूर्त्तौ च ब्रह्मणोऽस्तित्वं न स्वीकुर्वन्ति, तेषां भ्रांतधारणा संकीर्णभावश्च तदानीं नरेन्द्रस्य चिन्ताविषयो न बभूव। 'यः साकारः स एव निराकारः', 'यः सगुणः स एव निर्गुणः' 'काली एव ब्रह्म'—इयं मर्मवाणी तस्मिन् कालेऽपि नरेन्द्रस्यान्तरं नास्पृशत्। श्रीरामकृष्णजीवनप्रभावेणानंतरं केशवादीनामिव तस्यापि मते परिवर्तनमभूत्।

विजृम्भणम् ? नरेन्द्रस्तु एतादृशमेव वक्ति" । माता त्वरितं व्याजहार–"तस्य वार्तां त्वं कथं शृणोषि, किञ्चिद्दिनानन्तरं स ( नरेन्द्रः ) सर्वं स्वीकरिष्यति ।" देवीमुखवार्तामाकर्ण्य स शान्तो बभूव ।...

इतश्च कस्मिंश्चित् सप्ताहे नरेन्द्रनाथे दक्षिणेश्वरमनागते श्रीठाकुरो व्याकुलत्वमन्वभूत् कमपि मनुष्यं द्वारीकृत्य स तमाह्वयत् । एतेनापि न समागते तस्मिन् स्वयमेव मधुरमादाय नरेन्द्रसमीपमुपातिष्ठत् । कदाचिच्च तं स्वेन साकं दक्षिणेश्वरमानयत् । बाह्यदृष्ट्या नरेन्द्रनाथ-श्रीरामकृष्णयोर्मेलनं नाविद्यत । नरेन्द्रनाथः श्रीरामकृष्णस्य कामपि वार्तां न स्वीचकार । परिहासेन तां निराकरोत् । परन्तु श्रीरामकृष्ण-चित्तं नरेन्द्रमयमभूत् । निरन्तरमेवासौ नरेन्द्रं प्राशंसत् ।

तेषु दिवसेषु कलिकत्ताविश्वविद्यालयीया अनेके युवानो दक्षिणेश्वरे गतागतमारभन्त । सर्वे भक्तिमन्तो वैराग्यवन्तो मुमुक्षवश्च समभूवन् । ईश्वरदर्शनार्थं सर्वे व्याकुला आसन् । श्रीरामकृष्णः सर्वेभ्यो युवकेभ्यः स्पृहयति स्म । तेषां धार्मिकजीवननिर्माणाय स सर्वदैवाचेष्टत । तैः सहेश्वरसम्बन्धिनीं वार्तां कुर्वाणस्त्याग-वैराग्य-साधन-भजनोपदेशं तेभ्यो ददौ । तदीयपवित्रसंग-शक्तिसंक्रमणफलस्वरूपेण तेषामाध्यात्मिकजीवने बहुविधमलौकिकदर्शनमनेका दिव्यानुभूतयश्च बभूवुः । कीर्तनं कुर्वन् कोऽपि भावस्थोऽभवत्, कश्चिदश्रूणि व्यमुञ्चत्, अपरः पुलकितस्पन्दितश्चा-बोभूयत । सर्वेषां धर्मजीवनसंघटनाय सावधानाऽभूत् तस्य दृष्टिः । केवलं दक्षिणेश्वर एव न, गृहेऽपि कः कीदृशं ध्यानं विधत्ते, ईश्वर-दर्शनादि भवति न वा—सर्वेषामपि स प्रवृत्तिमरक्षत्, यथाप्रयोजनं तदीयसाधनमार्गप्रत्यूहानपाकरोच्च ।...

—:-*-:—

५

नरेन्द्रनाथेन सह श्रीठाकुरस्य सम्बन्धः समधिको गम्भीरः स्वतन्त्र इव चासीत्। नरेन्द्रे समागते तदीयः प्रेमसिन्धुरुद्वेलितोऽजायत। नरेन्द्रनाथस्यानुपस्थितौ स तस्य वार्तया प्रशंसया चात्मतृप्तिमलभत। एकदा युवकभक्तान् श्रावयन् स प्रावोचत्—"एते बालका अवरा न सन्ति, साधैकपरीक्षामुत्तीर्णाः (अर्थात् एफ्० ए० परीक्षायै प्रस्तुता भवन्ति), शिष्टाः, शान्ता धर्मप्राणाश्च। परन्तु नरेन्द्रसमान एकोऽपि नास्ति दृष्टः। यथा गाने, वाद्ये, कथने, श्रवणे, लेखने पठने, तथैव धर्मविषयेऽपि। स च रात्रिं यावद् ध्यायति। ध्यानेन समनुष्ठितेनैव निशा व्यतिगच्छति, बोधो न तिष्ठति। मम नरेन्द्रस्याभ्यन्तरे ईषदपि कृत्रिमता न विद्यते। परीक्ष्य पश्यत, उत्कृष्टतामाविष्करोति। अन्यान् बालकान् पश्यामि, महतायासेन कथमपि द्वित्राः परीक्षा उत्तरन्ति। आम्, एतावदेव। एतदनुष्ठाननैव तेषां समस्ताऽपि शक्तिः समाप्तिमेति। परन्तु नरेन्द्रस्तादृशो नास्ति। हसन् क्रीडन् कार्यं विधत्ते, परीक्षोत्तीर्णता तत्कृते न किमपि कार्यम्। स ब्राह्मसमाजे गच्छति, तत्र भजनं च गायति। परन्तु सोऽन्यब्राह्मवन्नास्ति। याथातथ्येनासौ ब्रह्मज्ञानी। ध्यानानुष्ठानकाले तेन ज्योतिर्दृश्यते। किमहं व्यर्थं नरेन्द्राय स्पृहयामि ?"

नरेन्द्रनाथोऽपि सप्ताहे द्वित्राणि दिनानि न जाने केनाज्ञाताकर्षणेन समाकृष्टो दक्षिणेश्वरमागच्छत्। नरेन्द्रनाथो ब्राह्मसमाजे नियमितमगच्छत्, केशवचन्द्रादिभिः ब्राह्मनेतृभिः सह घनिष्ठभावेनाऽमिलत् इति सर्वं श्रीरामकृष्णोऽज्ञासीत्। स तत्र न कामपि विप्रतिपत्तिमकरोत्,

प्रत्युत प्रासीदत् । न तत्र संकीर्णताया लेशोऽप्यभूत् । तस्योदारो भावो मनश्च ।...

केनापि कारणेन नरेन्द्रनाथं एकवारं बहूनि दिनानि नाजगाम । प्रतिदिनं श्रीरामकृष्णस्तदागमनप्रतीक्षामकार्षीत् । नरेन्द्रागमनं प्रतीक्षमाणस्तस्थौ । बहून् दिवसान् प्रतीक्षमाणोऽपि नरेन्द्रमनागतमवलोक्य सोऽधीरो बभूव । आन्तरिकविरहभावनानिवारणासामर्थ्यात् तस्मिन् एव दिने कलिकत्तां प्रस्थाय नरेन्द्रं निरीक्षितुं निश्चयमकार्षीत् । अनन्तरं च स्मृतिरभूत् यत् तस्मिन् दिने रविवारः । यदि गृहे नरेन्द्रो न स्यात् तदा विशाले कलिकत्तानगरे कुत्र कुत्रासावन्विष्यति । द्वितीयक्षण एव स्मृतं, यद् रविवारे सायंकालीनब्राह्मसमाजोपासनायां भजनं गातुं नूनमसौ यास्यति । तत्र गमनेन द्रक्ष्यतेऽसौ ।

सन्ध्यायां समाजस्योपासना प्रारभत । अत्रैव काले भावस्थः श्रीरामकृष्णो ब्रह्ममन्दिरं प्रविष्टः, यत्र मञ्चमधिष्ठाय आचार्य उपासनां विधत्ते, तद्दिशमुपससार । श्रीरामकृष्णस्याकस्मिकागमनेन समाजे महान् कोलाहलो जातः ।

श्रीरामकृष्णो मंचसमीपमागत्य सहसा समाधिस्थो बभूव । तत्समाधिमवलोकयितुं बहवो जना व्याकुलत्वं प्रपेदिरे । नरेन्द्रनाथः श्रीठाकुरं तदवस्थमवलोक्य तदागमनकारणमवागच्छत् । त्वरयाऽसौ समागत्य श्रीरामकृष्णपार्श्वमुपतस्थौ । समाजमन्दिरेऽतिशयः कोलाहलो बभूव । श्रीरामकृष्णं द्रष्टुमनेके मानवा अग्रे समागन्तुमचेष्टन्त । जनसमारोहं शान्तयितुम् उपायान्तरं नावलोक्य समाजगृहस्य निखिला अपि प्रकाशा निर्वापिताः । एतत्परिणामतोऽव्यवस्था नितरां प्रावर्धत ।

नरेन्द्रनाथः श्रीरामकृष्णस्य शरीररक्षकरूपेण दण्डायमानोऽभवत् । सामाजिकानामेतेनाशिष्टतापूर्णेन व्यवहारेण स नितान्तं दुःखमन्वभवत् । समाधौ भग्नेऽसौ श्रीरामकृष्णं गृहीत्वा कथंचित् समाजगृहस्य पृष्ठद्वारेण बहिर्निर्गत्य तेन सहैव दक्षिणेश्वरमाययौ । श्रीरामकृष्णो

नरेन्द्रमासाद्य आनन्दाप्लुतोऽभूत्। तं प्रति सामाजिकैर्यादृशोऽशिष्ट-व्यवहारः कृतः, तमेकवारमपि तन्मनो नास्मरत्। तेन यदिच्छितं तदधिगतम्। कुत्रचिदन्यत्र नासीत्तस्य दृष्टिः।

श्रीरामकृष्णं तथाविधमपमानितमवलोक्य नरेन्द्रनाथस्य मनसि महानाघातोऽभूत्। स च तस्मै अभियोगमर्पयन्नुवाच—"भवान् कथं तत्रागच्छत्? तैरीषदपि भवन्मर्यादा किं रक्षिता?" तेन मानसिकेन दुःखेनान्यान्यपि कठोरवचनानि प्रोक्तानि। श्रीरामकृष्णस्यैतादृश-मपमानं तस्यासहनीयमभूत्।

एतावदेव न, स्वं प्रति श्रीरामकृष्णस्यैतादृशाकर्षणकारणं नाववुध्य नरेन्द्रनाथेनैकदा प्रोक्तम्—"पुराणे प्रतिपादितमास्ते यद् राजा भरतो हरिणं चिन्तयन् मृत्योरनन्तरं हरिणो वभूव। यदि कथेयं सत्या, तदा मां प्रत्येतादृशाकर्षणपरिणामो भवताप्यालोचनीयः।"

श्रीरामकृष्णः सरलबालकवदासीत्। नरेन्द्रमुखादेतद् वचनमा-कर्ण्यातिचिन्तितोऽभूत्। पुनश्च प्रोवाच—"एतदेवास्ति, त्वया सत्यमुक्तम्। तदा किं स्यात्? अहं तु तव निरीक्षणमन्तरेण न स्थातुं शक्नोमि।"

एतेनापि मानसं शान्तिं नापद्यत। स च भयंकरपश्चात्तापेन दग्धो भवन् भवतारिण्या मन्दिरमगच्छत्। किंचित्कालानन्तरं मन्दिराद् निर्गत्य विहस्य तेनोक्तम्। अपसर मूढ! अहं तव वार्त्तां न मन्ये। माताऽवदत्—"तं त्वं साक्षान्नारायणमवगच्छसि। अत एतावत् प्रेम करोषि। यदा त्वं तदभ्यन्तरे नारायणं न द्रक्ष्यसि तदा तन्मुखमपि न विलोकयिष्यसि।"

नरेन्द्रस्य समस्तोऽप्यभियोग एकेनैव वचसा व्यर्थतां गतः। श्रीरामकृष्णो नरेन्द्रं विश्वनाथदत्तपुत्रं मत्वा न स्निह्यति। दर्शनश्रवणे, गानवादने पठनलेखने चासावनन्यसाधारण—इति गुणैरपि प्रीतिं

नाकरोत्। तं नरऋषेरंशावतारं प्रधानवार्तावहं चामन्यत, अत एव नरेन्द्रं प्रति तदीयमेतादृशं दुर्दमनीयमाकर्षणमासीत्। नरेन्द्रस्यागमने-नैवासौ नितान्तमस्थिरत्वमभजत्। नौबतगृहे सारदादेवीमसूचयत्—"अये, नरेन्द्र आयातः, समीचीनां रसवतीं कुरु।" स्थूलाः करपट्टिकाः स्फीतचणकद्विदलानि च नरेन्द्रस्य नितरां प्रीतिमावहन्। श्रीसारदादेवी चापि तदेव निर्माय श्रीठाकुरस्य प्रकोष्ठं प्रैरयत्।

* * *

एतेषु दिवसेषु दक्षिणेश्वरे अनेकेषां युवकभक्तानां समागमो बभूव। श्रीठाकुररामकृष्णदेवेन सर्वेषां धर्मजीवनानि महताऽऽदरेण संघटितानि। साकारविश्वासिनां साकारभावेन, निराकारप्रत्ययजुषां निराकारभावेन धर्मोपदेशो दत्तः। केचिच्च देव-देवीनामुपरि भक्ति-मन्तः, केऽपि चाद्वैतवादिनः। समेषामेव कृते श्रीरामकृष्णसमीपे स्थानमासीत्। स च सर्वभावमयः। अतो विविधभावावलम्बि-पथिकान् भूमानन्दस्य मार्गे, अनन्तस्याभिमुखं च परिचालयितुम-शक्नोत्। प्रत्येकं युवको भक्तस्तं प्रति पितुरपेक्षयाऽधिकां प्रीतिं भक्तिं च विदधाति। बाबूरामस्तु स्वल्पैरेवाहोभिर्दक्षिणेश्वरे गतागतम-कार्षीत्। श्रीरामकृष्णस्याहैतुकेन प्रेम्णा तस्य हृदयं द्रवीभूतमभूत्। तेन श्रीरामकृष्णगभीरप्रेमप्रसंगे स्वकीया जननी प्रोक्ता—अहो, असौ यादृशं स्नेहं विधत्ते तस्य तुलना नास्ति। त्वमपि न तथा मयि स्निह्यसि। पुत्रस्य मुखादेतादृशीं वार्तामाकर्ण्य बाबूरामजननी नितरां खेदमावहत्। तया प्रोक्तम्—"अस्तु! अहमस्मि माता—नाहं स्नेहं करोमि ?"

बाबूरामः सगर्वमुवाच—"न, त्वमपि मयि तथा न स्निह्यसि।" बाबूरामस्य जननी मौनमाश्रितवती। तस्या आश्चर्यमभवत् यन्मम पुत्रे कोऽपि मत्तोऽपि, अधिकं प्रेम कर्तुमर्हति ? यथार्थतः श्रीठाकुरस्य

प्रेम तथैवानन्तमसीम निविडं गम्भीरं चाभूत्। श्रीरामकृष्णः पक्षिणां मातेव स्वीयान् भक्तान् परमस्नेहपूरितवक्षःस्थलेनाच्छादयत्, शारीरिकेण ऊष्मणा समवर्धयत्,...यथावसरं च युवकान् तान् आत्मज्ञानमार्गमध्यारोहयच्च। श्रीरामकृष्णस्य दिव्याकर्षणेन यूनां गृहस्य मातापित्रोश्चाकर्षणं न्यूनतामगच्छत्। कलनादिन्या गंगाया-स्तटे विद्यमानं तदेव दक्षिणेश्वरस्थानं तेषां प्रियमभूत्। ते समधिकं दक्षिणेश्वरमागच्छन्। रात्रावपि तत्रैवातिष्ठन्।

किन्तु श्रीरामकृष्णनयनयोर्नासीन्निद्रा। संसारकल्याणचिन्तायां ध्यानमग्नावस्थायां च तस्य निशा व्यत्यगच्छन्। उषःकाले मत्तो भवन् सुमधुरकण्ठेन कदाचिन्मातुर्नामान्यगायत्, कदापि करतल-ध्वनिना परमपावनहरिनामनि तल्लीनतामगच्छत्। धौतवस्त्रस्य सम्यक् धारणमपि कठिनमभूत्। निद्रितयुवकभक्तानां समीपं गत्वा प्रोवाच—"अये! यूयमुत्तिष्ठत, उपविश्य ध्यानं कुरुत, मातुर्नामानि जपत, किमत्र शयनाय समागताः ?"

श्रीरामकृष्णस्य कण्ठस्वरे कर्णगोचरीभूते सति सर्वे चकिता भवन्त उदतिष्ठन्, केचिद् ध्याने समुपाविशन्, केचन जपानन्व-तिष्ठन्। ध्यानप्रकारं चापि श्रीरामकृष्णः सर्वेभ्यः समबोधयत्। केषां-चनाभ्यन्तरेषु शक्तिसञ्चारमकरोत्। शिष्या गभीरे ध्याने विनिमग्ना बभूवुः।

पूर्वाकाशे लालिमाच्छादनतः प्रागेव मन्दिरे देवताजागरणप्रयुक्तो घण्टाध्वनिरघोष्यत। दीपाः प्राज्वलन्। नौबतवाद्यमवाद्यत। मन्दिरे मंगलनीराजनमारभ्यत, घण्टादुन्दुभयो विनेदुः। सर्वे ध्वनयो गंगायाः कलध्वनिना सहामिलन्। श्रीरामकृष्णस्य गृहेऽपि मधुरप्रार्थना-संगीतानि कीर्तनानि च समभूवन्। स च भावावेशे कदाचिदनृत्यत्, समाधौ चातिष्ठत्। सर्वं दिनमेव भक्ताः समागमन्। तस्योद्दीपनमयं

धर्मोपदेशमाकर्ण्य समेषां मनांसि कस्याञ्चिल्लोकातीतसत्तायां व्यलीयन्त ।

श्रीरामकृष्णो भक्तानां भावमवधार्य, यत्र यस्य वेदनाऽस्ति, तामपाकरोत्। तारकनाथः प्रथममेव दक्षिणेश्वरमागतः । श्रीठाकुरमालोक्यैव तेन ज्ञातं यन्माता जगज्जननी समुपविष्टा वर्त्तते । प्रणाममनुष्ठातुं मस्तकमनमयत्। श्रीरामकृष्णो द्वौ हस्तौ प्रसार्य मातेव तारकनाथस्य शिरः स्ववक्षसि समाचकर्ष । स्नेहेन प्रीत्या च तं नितरामाप्यायितमकरोत्। अल्पीयस्येव वयसि मातृहीनस्य तारकस्य हृदयतो मातृताया अभावं सर्वकालाय दूरमकार्षीत्। श्रीरामकृष्णस्याभ्यन्तरे तेन विलुप्ता निजमाता पुनः प्राप्ता । वस्तुतः श्रीरामकृष्णो माता-आद्या शक्तिर्जगज्जननी आसीत्, अतस्तेन रक्षणपालनयोर्भरणपोषणयोरिहलोकपरलोककल्याणस्य च माध्यमेन तारकनाथस्य मनसि तदीयमातुः स्थानमधिगतम् ।

भक्तानां धर्मजीवनघटनाय श्रीरामकृष्णस्य प्रयत्ने नासीन्न्यूनता । तस्य योगदृष्टेः पुरतस्तदीयान्तरिकं चित्रं विचकास । तेन तेषां साधनमार्गविघ्ना अपाकृताः। आध्यात्मिकशक्तिप्रभावेण च सर्वविधाप्यपूर्णता निराकृतिं नीताः ।

श्रीरामकृष्णस्य शिक्षापद्धतिरासीदनुपमाऽभिनवा च । स शिष्याणां भावधारां पालयन् तदीयजीवनपूर्णतामसाधयत्। कस्यापि भावमीषदपि नाशयितुं नाचेष्टत । नरेन्द्रमसौ सर्वोच्चमधिकारिणमवागच्छत्। अद्वैतं ब्रह्मज्ञानमेव सर्वाभ्यर्हितं ज्ञानम्। स्वयमेवासौ जगाद—"अद्वैतानुभूतिरेव धर्मजीवनस्यान्तिमा प्रवृत्तिः ।" तदानीन्तनेषु भक्तेषु केवलं नरेन्द्रनाथ एव तदद्वैतज्ञानाधिकारी ।...

एकदा श्रीरामकृष्णो विविक्ते नरेन्द्रनाथमद्वैतज्ञानमुपदिशन्नासीत्। जीवब्रह्मैकत्वावबोधवार्तामशिक्षयत्। "सर्वं ब्रह्ममयं जगत्" इत्यनुभूत्यां तं प्रतिष्ठापयितुमियेष । नरेन्द्रः सर्वं शृण्वन्नपि न धारया-

श्चकार। सन्देहे तस्य मनो दोलायमानमभूत्। श्रीरामकृष्णोपदेश-वार्तामालोचयन् असौ उपप्रकोष्ठे हाजरामहाशयमुपडुढौके। 'सर्वं ब्रह्म' इत्यालोचनायाः प्रसंगेन नरेन्द्रनाथोऽवादीत्—"किमेतदपि कथञ्चित्सम्भवम्? जलपात्रमपीश्वरो लघुपात्रमपीश्वरः, यद् दृश्यते, तत्सर्वमीश्वरः, किम्बहुना, वयमपीश्वराः स्मः?

हाजरामहाशयः परिहसन्नुवाच—"एतत्किं सम्भवति? त्वमपि कीदृशः परप्रत्ययनेयबुद्धिरसि।" सिद्धांतेऽत्रोभावपि प्रकामं जहसतुः। श्रीरामकृष्णोऽद्वैतानुभूतिप्रतिष्ठितो नरेन्द्रायाद्वैतज्ञानमुपदिदेश। तदानीमपि तदीयं मानसं तदुच्चभूमिगतमभूत्। भावाविष्टो बहिर्निःसृत्य "युवाभ्यां किमुच्यते?" इत्युक्त्वा नरेन्द्रं संस्पृश्यासौ समाधिस्थो बभूव। तस्य मुखमण्डले स्वर्गीयो हासो व्यजृम्भत। दिव्यानन्दस्य प्रभयाऽसौ प्रज्वलितोऽभूत्। श्रीठाकुरस्य तेन शक्तिपूर्णस्पर्शेन नरेन्द्रनाथस्य मनस्यद्भुतं परिवर्त्तनमभवत्। नयनजवनिकाऽपससारेव। सर्वत्रैवासौ ब्रह्मादाक्षीत्।

तात्कालिकघटनासम्बन्धे कदाचिद् भविष्यत्काले तेन प्रतिपादितम्—" श्रीठाकुरस्य तेनापूर्वस्पर्शेन क्षणेनैव ममाभ्यन्तरेऽद्भुतं भावान्तरं समुपस्थितम्। स्तम्भितो भवन् सत्यमेवाहमद्राक्षम्—विश्वब्रह्माण्डेऽत्रेश्वरव्यतिरिक्तं न किञ्चिदन्यदास्ते।... भावोऽयं कथंचिदपि न ह्रासं गतः। अहं गृहे प्रत्यागमम्। तत्रापि स एव भावः। यत् किंचिददृश्यत सर्वं ब्रह्मैव। भोजनायोपाविशम्, अपश्यम्, स्थाली, लघुजलपात्रम्, परिवेषयिता सर्वे ब्रह्म, अहमपि तद्भिन्नो न कश्चिदन्यः। एकं द्वौ वा ग्रासौ भुक्त्वाऽहमतिष्ठम्। 'उपविष्टोऽसि रे! खादसि कथं न?' मातुरेतेन वचसा बोधमधिगतोऽहं पुनर्भोक्तुं प्रवृत्तः।"

नरेन्द्र एकस्मिन् विराडब्रह्मानुभूतिराज्ये प्रवेशमकार्षीत्। तत्र ब्रह्मव्यतिरिक्तं न किंचिदन्यत्। सर्वं चैतन्यमयमास्ते। तस्य भावस्य

स्वल्पोऽप्युपशमो न जातः। मार्गेणाव्रजत--एका शकटी वेगादायाता, स चापश्यत्, किन्तु दिनान्तरवत् तदभिमुखतोऽपसर्तुं समीहा नोदैत्। ईषदपि भयं नाभूत्—सर्वं ब्रह्मास्ति।

इमामवस्थामवलोक्य माता भयं प्राप्ता, तया विचारितं यद् बालकः केनापि बलीयसा रोगेण समाक्रान्तः। अकथयत्—"अधुनाऽयं न जीविष्यति।"

कतिचिद्दिनानन्तरं सर्वत्रैव ब्रह्मभावे किञ्चिद् ह्रासं गते नरेन्द्रेणावधारितम्, यदयमेवाद्वैतविज्ञानस्याभासः। काशीपुरस्योद्याने श्रीरामकृष्णेन नरेन्द्रोऽद्वैतब्रह्मानुभूतावुन्नमितः। घटनेयमस्माभिरग्रे प्राप्स्यते। अद्वैतज्ञानमिदं स्वायत्तीकृत्यैव विवेकानन्देन व्याहृतम्—"ब्रह्माणमारभ्य कीटपरमाणुं यावत् सर्वभूतेषु स एव प्रेममयः। हे मित्र! शरीरं, मनः, प्राणाश्च तस्यैव चरणयोरर्प्यन्ताम्। त्वदभिमुखमनेकरूपेषु विराजमानमीश्वरं विहाय त्वया कुत्रासावन्विष्यते। येन जीवेषु प्रेमानुष्ठीयते, तेनैव याथातथ्येनेश्वरः सेव्यते।" सर्वेषामभ्यन्तरे एतादृशी ब्रह्मचेतना जागरिता भवेदित्येव तदीयजीवनादृश्यमभूत्। तेन सर्वेषां ललाटेषु ब्रह्मतिलकमङ्कीकृतम्।....

* * *

नरेन्द्रे समागते तस्मिन्नेव श्रीरामकृष्णो व्यस्ततामगच्छत्। एतदप्यभवद् यन्नरेन्द्रं दूरादवलोक्यैव आनन्देनोत्फुल्लो भूत्वा "सः न०—' सः न०—" इति ब्रुवन्नसौ समाधावतिष्ठत्। श्रीरामकृष्णनरेन्द्रयोर्मध्ये गुप्तसम्बन्धोऽयं सर्वदैव रहस्यपूर्णोऽभूत्। स च ज्योतिर्मण्डलस्य ऋषिं नरेन्द्रस्याभ्यन्तरेऽध्यगच्छत्।

किन्तु शीघ्रमेवैतस्यां भूमिकायां परिवर्त्तनमदृश्यत। एतादृश एकः समयः समागतोऽभूत् यदैतत् पर्यबुध्यत यत् श्रीठाकुरो नरेन्द्रसम्बन्धे बाह्यदृशा पूर्णतयोदासीन आस्ते। नरेन्द्रनाथो दक्षिणेश्वरे समागतः। परन्तु श्रीठाकुरस्तेन साकमेकामपि वार्तां नाकरोत्। कञ्चित्कालं

प्रतीक्षमाणोऽसौ बहिरगच्छत्, पुनर्गृहमायातः। श्रीठाकुरोऽन्यैर्वार्तामकरोत्। तदभिमुखमेकवारमाननं परावृत्यापश्यदपि न। स पुनर्निरगच्छत्। कतिचित्क्षणानन्तरमसौ अभ्यन्तरमागत्योपाविशत्। श्रीठाकुरस्तं दृष्ट्वैव संस्तरणे पार्श्वं परिवर्त्य अशयिष्ट। तस्यैतदुदासीनत्वं मौनत्वं च नरेन्द्रनाथस्य कृतेऽसहनीयमभूत्। तस्य हृदयमुन्मथ्य रुदितमिव प्रवृत्तम्। परमसावधीरतावान् मानवो नासीत्। स आत्मानमरक्षीत्। शनैः शनैः श्रीठाकुरं प्रणम्य गृहं प्रत्याववृते।

अनेकानि सप्ताहानि व्यत्ययुः। नरेन्द्रनाथः प्रतिसप्ताहमागच्छत्, किन्तु श्रीरामकृष्णोदासीनतायां किमपि परिवर्त्तनं नाभूत्। बहोः कालादनन्तरं श्रीठाकुरो नरेन्द्रमपृच्छत्—"अहो, मया तु त्वां प्रत्येकाऽपि वार्त्ता न क्रियते, तथापि त्वं कथमायासि, कथय ?"

सहजस्वरेण नरेन्द्र उदतरत्—"किमहं भवद्वार्तां श्रोतुमागच्छामि ? भवत्यहं प्रीतिं विदधे, भवद्दर्शनमन्तरेण नाहं स्थातुं शक्नोमि, अत एवागच्छामि।"

इतोऽधिकं कथनीयं किमस्ति ? श्रीरामकृष्णस्यैतावदेवाभिप्रेतम्। नरेन्द्रस्तस्मिन् स्निह्यति, एतदेवावगत्य स प्रासीदत्। तेन प्रोक्तम्—"मया त्वं परीक्ष्य दृष्टोऽसि। आदरं स्नेहमप्राप्यापि त्वं पलायसे न वा, त्वादृशनैव पुरुषेणेयती उपेक्षा सोढुं शक्यते।"···

श्रीरामकृष्णो नरेन्द्रनाथश्चोभावभिन्नात्मानौ आसाताम्। श्रीठाकुरस्याध्यात्मिको शक्तिर्विद्रोहिणं नरेन्द्रं वश्यतामनयत्। क्रमेणासौ श्रीरामकृष्णं पथप्रदर्शकगुरुरूपेण स्वीचकार। एतस्मिन् स्वीकारे श्रीरामकृष्णस्य विराडाध्यात्मिकी शक्तिरविद्यत। "करिष्ये वचनं तव"—इति स्वीकृतेः प्राक् अर्जुनं वशीकर्तुं भगवता श्रीकृष्णेन महान् परिश्रमः समनुष्ठितः। अष्टादशाध्यायिनी गीता एतस्यैव परिणामभूता। विश्वरूपप्रदर्शनेनापि परिपूर्णा सफलता नाधिगता। पार्थं यन्त्रीकृत्य यथा श्रीकृष्णो निजधर्मसंस्थापनकार्यं सुसम्पादयत्, तथैव विवेका-

नन्दमपि यन्त्रमनुष्ठाय श्रीरामकृष्णोऽपि स्वीयां युगवाणीं युगादर्शं च संसारसन्निधाने समुपस्थापयाञ्चकार।...

नरेन्द्रनाथस्य मन ईश्वरमधिगन्तुं व्याकुलीबभूव। स दैनन्दिनं व्यग्रतामगच्छत्। श्रीठाकुरस्य समीपे शीघ्रं शीघ्रमागन्तुं प्रवृत्तः। रात्रावपि कदाचिद्दक्षिणेश्वरे तस्थौ। श्रीठाकुरोऽपि हस्तं गृहीत्वा नरेन्द्रमसीममार्गाभिमुखं निनाय।...

एकदा श्रीठाकुरो नरेन्द्रं पञ्चवट्या विविक्तस्थानमानीय प्रोवाच— "बहूनि दिनानि व्यतीतानि, मात्रा मह्यम् अणिमादयो विभूतयः प्रदत्ताः सन्ति। परन्तु मम तासां व्यवहारप्रयोजनं नाभवत्।... मातरं विनिवेद्य ता विभूतीस्तुभ्यं दातुं समीहे। मात्रा सूचितं यत् त्वया बहूनि विधेयानि विधातव्यानि सन्ति। यदि ताः शक्तयस्तवाभ्यन्तरे स्युस्तदा यथाप्रयोजनं ताभिस्त्वं कार्यं साधयिष्यसि। किं कथयसि?" श्रीठाकुरो वृथा वार्त्तां न कुरुते इति नरेन्द्रो व्यजानात्। तदलौकिक-शक्तीनामनेके परिचयास्तेनाधिगम्यन्त। अत एवासौ किंचिच्चिन्तितो बभूव। अनन्तरं तेन जिज्ञासितं—"किमेता विभूतय ईश्वराधिगमाय साहाय्यं प्रदास्यन्ति?"

श्रीरामकृष्णेनोक्तम्—"न, तस्मिन् विषये न कापि सहायता भविष्यति। किंतु ईश्वराधिगमानन्तरं यदा त्वया तदीयं कार्यं करिष्यते, तदानीं तास्तवोपकारिण्यो भविष्यन्ति।"

नरेन्द्रेणोक्तम्—"महाशय, तदा मदर्थं तासामावश्यकता नास्ति।... पूर्वमीश्वरस्याधिगमः।...विभूतीः प्राप्यापि यदि जीवन-लक्ष्यमेव विस्मरेयम्, तदा सर्वनाशः सम्पत्स्यते।"

नरेन्द्रस्य वचनमाकर्ण्य श्रीठाकुरो नितरां प्रासीदत्। अत्यन्त-मुच्चकोटिग आधारो नरेन्द्रः—एकेनैव वचनेन अणिमादिविभूतीनां तेन परित्यागः कृतः।

—:०-०:—

बी० ए० परीक्षा सन्निधत्ते। गृहेऽध्ययने प्रत्यूहो जायते—महान् कोलाहलो भवति। अतो नरेन्द्रनाथः स्वगृहनिकटवर्तिनो मातामही-भवनस्य द्वितीयतलस्थैकप्रकोष्ठे समागत्य न्यवसत्। समस्तां निशां जागृतः पपाठ। दिने मित्राणां सम्मर्दः, ब्राह्मसमाजे, दक्षिणेश्वरे च गमागमौ, अन्यान्यपि बहूनि कार्याण्यासन्। तस्यासाधारणः संयमः स्मृतिशक्तिश्च असाधारणी आसीत्। बी० ए० परीक्षायां केवलं मास एकोऽवशिष्यते। इतश्च इङ्गलैण्डस्येतिहास एकवारमपि नापठ्यत। सम्प्रति क उपायः? बहुधा सुविचार्य्यासौ ऐतिहासिकग्रन्थान् रात्रिन्दिवमपठत्। त्रिचतुर्दिनाभ्यन्तरमेव सम्पूर्णोऽपीतिहासः कण्ठस्थीकृतोऽभूत्।

बी० ए० परीक्षादिवसेऽत्युषस्येव स उदतिष्ठत्। भ्राम्यन्नसौ सहपाठिदाशरथिसान्यालस्य चोरबागानस्थे भवने समाययौ। तदानीं सर्वान् निद्रितानवलोक्य उच्चैः स्वरेण गानमकरोत्—

"महासिंहासने बसि शुनिछो हे विश्वपति,
तोमारइ रचित छन्दे महान् विश्वेर गीत।
मर्तेर मृत्तिका होये, खुद्र एइ कंठ लोये,
आमिओ तोमरि द्वारे होयेछि हे उपनीत।
किछु नाहि चाहि देव, केवल दर्शन मागि
तोमारे शुनाबो गीत एशेछि ताहारि लागि।

गाहे यथा रविशशि, शेइ सभामाझे बशि,
एकान्ते गाहिते चाहे एइ भकतेर चित।"*

नरेन्द्रस्य गानमाकर्ण्य सर्वे चकिताः सन्त उत्तम्थुः। परमसौ एकस्यानन्तरमेकं गानं श्रावयन् अभूत्। तदीयान्तरिकभावनदी अत्युद्वेलिता। स पुनर्जगौ—

"पृथ्वीर धुलिते देव मोदेर जनम्"—इत्यादि †।
तद्गानं समाप्य गानान्तरं प्रारभत—
"अचलघनगहनगुण गाओ ताँहारि"—इत्यादि ‡।

मधुरा स्वरलहरी देशकालभानं प्रवाहयितुं प्रावर्तत। अवकाशे मित्रेणैकेन प्रोक्तम्—"अद्य तु परीक्षा वर्त्तते। यत्र कुत्रापि स्वल्पा त्रुटिरस्ति सा पूरयितव्या। परमहं पश्यामि, तव सर्वं विपरीतमेव। आनन्देन माद्यन् बोभूयसे।"

नरेन्द्रनाथेन प्रत्युक्तम्—"आं भ्रातः, तदेव विदधे, मस्तिष्कं स्वच्छं करोमि ईषन्मस्तिष्कविश्रामोऽपि दातव्य एव ?"

नरेन्द्रनाथ आसीदात्मविश्वासी। अत एवासौ विश्वविजयी बभूव।

* * *

---

* अर्थात् "हे विश्वपते! त्वं महत् सिंहासनमारुह्य स्वच्छन्दरचित-विश्वसंगीतं शृणोषि। धरित्र्या मृत्तिका भूत्वा, इदं च लघुकण्ठमादायाहमपि तवैव द्वारमुपातिष्ठम्। हे देव, नाहं किञ्चित् समीहे, केवलं दर्शनं याचे। त्वां गानं श्रावयिष्यामि, एतदर्थमागतोऽस्मि। यत्र सूर्याचन्द्रमसौ गायतः, तत्सभामध्ये स्थित्वा अस्य भक्तस्य चित्तम् एकान्ते गातुमिच्छति।"

† "हे देव! पृथिव्या धूलौ अस्मदीयं जन्मास्ति।"

‡ "हे चित्त! तदीया अचलघनगहनगुणा गीयन्ताम्॥"

१८८४ ईसवीयस्यारम्भे बी० ए० परीक्षा समाप्तिमगमत्।* परीक्षा-प्रदानार्थं तेनामानुषिकः परिश्रमो विहितः। परीक्षाफलप्रकाशने विलम्ब आसीत्। मित्रैस्तमादाय बहुषु स्थानेष्वामोदप्रमोदायोजन-मनुष्ठितम्। सुहृदस्तं बलान्निन्युः। तस्मिन् बन्धुप्रेम एतावदधिकमासीद् यदसावस्वीकर्तुं नाशक्नत्। भजनगानहास्यपरिहासविविधालापा-लोचनादीनां माध्यमेन सर्वेभ्यो विमलमानन्दं प्रायच्छत्। तदानीमसौ विंशतिवर्षदेशीयोऽभूत्।

एकदा बराहनगरे मित्रस्यैकस्य गृहेऽसावगच्छत्। रात्रौ एकादश-वादनं यावत् संगीतस्यालापाः प्राचलन्। भोजनं समाप्य सर्वे शयनमकार्षुः। रात्रौ प्रायशो द्विवादने काले तस्य सुहृत् हेमालीनामा समागत्य सूचितवान् यत् हृदयरोगाक्रान्तस्तदीयजनको विश्वनाथदत्तो निशि दशवादने निजशरीरमत्यजत्। हृदयविदारकं संवादमिममा-कर्ण्यैव नरेन्द्रनाथो झटित्युत्थितो गृहं प्रत्यागत्य, इष्टमित्राण्याहूय, पितुः शवं गंगातटे श्मशानघट्टमानीय, यथाशास्त्रमन्तिमां क्रियां सम-नुष्ठाय सर्वैः सह प्रातःकाले गृहं प्रत्याजगाम।...

एकस्य द्वयोर्मासयोर्वाऽभ्यन्तर एव नरेन्द्रनाथस्य पारिवारिकजीवने महानेकः संकटसंकीर्णो मुहूर्त उपतस्थौ। पिता एकां वराटिकामपि न तत्याज। ऋणमपि किञ्चिदासीत्। सर्वतः प्रथमं जननी-भ्रातृ-भगिनीसहितानां सप्त-व्यक्तीनां कृते अन्नवस्त्रप्रश्नः समुपस्थितः। ऋणप्रदा महाजना अपि समयं दृष्ट्वा सम्मुखमागताः। नरेन्द्रेण स्वजीवने प्रथममेवेदं दरिद्रतादेव्या दर्शनं कृतम्। स च नग्नपादो विदीर्णं च

---

* बी० ए० कक्षाध्ययनकाल एव भविष्यद्विषयमालोच्य तस्य पिता नरेन्द्रनाथं सुप्रसिद्धस्य अटार्नी-निमाइचरणबसोरधीनत्वे अटार्नीकार्यं शिक्षितुं न्ययोजयत्, विवाहार्थं गुप्तरीत्या च कन्याया अन्वेषणमप्यकरोत्। किन्तु नरेन्द्रस्यैकैव वार्ता—"विवाहं न करिष्यामि।"

कंचुकं परिदधत् कैङ्कर्यान्वेषणाय स्थानात् स्थानं परिबभ्राम। सुहृदां वैमुख्येन तस्मै सौहार्दस्य यथार्थस्वरूपं प्रदर्शितम्।

जनन्या मलिनमाननमालोक्य तदीयं चेतो व्याकुलीबभूव। लघूनां भ्रातृभगिनीनां शीर्णानि शरीराणि निरीक्षमाणस्य तस्योद्विग्नतया विविक्तेऽश्रूणि प्रावहन्। चतुर्दिक्ष्वन्धकारः प्रससार। कुत्रापीषदप्याशायाः प्रकाशस्तेन नादृश्यत। प्रातःकाले समुत्थाय स खाद्यभण्डारगृहे कियत्तण्डुलानि इति विलोक्य स्थितेः परिज्ञानं कृत्वा स्नानमनुष्ठाय च 'निमन्त्रणमस्ति' इति व्याहरन् गृहान्निरगच्छत्। दिनं यावद् भृत्यतान्वेषणाय कार्यालयद्वाराणि परितो बम्भ्रम्यमाणोऽसौ सर्वतोऽपि नैराश्यमादाय परावर्त्तत।

तेन यथार्थतः संसारपरिचयः प्राप्तः। परिज्ञातवानसौ—अनाथदुर्बलदरिद्रदुःखिनां कृतेऽत्र किमपि स्थानं नास्ति। पृथिवीयं प्रेतनिर्मितेव प्रत्यभासत। कदाचिदसौ प्रोवाच—"एकस्मिन् दिवसे प्रखरातपेऽनावृतपादौ प्राज्वलतां, मान्युमेण्टस्य छायायां किंचिद् विश्रामायोपाविशम्। तदानीमेव तत्र द्वौ सुहृदौ समायातौ। एको गानमारभत—'बहिछे कृपाघन ब्रह्मनिश्वास पवने'—इत्यादि।* समाकर्ण्य मयैतदनुभूतं—मम शिरसि केनाप्याघात इव कृतः। मयोक्तं, तिष्ठ, शान्तो भव, बुभुक्षाज्वालया येषां परिजनैः कष्टं नानुभूयते, कृष्यमाणव्यजनपवनं सेवमानानां कृते कल्पनैतादृशी सुमधुरा भवितुमर्हति, मयापि कदाचिदेवमनुभूतम्। परन्तु कठोरसत्यस्य समीपेऽक्षरशस्तत् परिहासवत्प्रतीयते।"···सुहृदो दुःखमन्वभूवन्।··

"धनवन्तः सुहृदो गानं गातुं मां प्रायः समाह्वयन्। तेषामनुरोधं विफलीकर्त्तुमशक्यत्वादहमगच्छम्। परन्तु कोऽपि मम दुर्दशावृत्तान्तं परिज्ञातुं नैच्छत्। मयापि कस्मैचन निजक्लेशवृत्तान्तो नाख्यातः।"

---

* वायुप्रवाहे ब्रह्मणः कृपापूर्णो निश्वासः प्रवहति, इत्यादि।

नरेन्द्रनाथः प्रतिदिनमुषसि भगवन्तं प्रार्थयत; भगवन्नामान्युच्चारयन् गृहान्निरगच्छत्। एकदा मात्रा तदाकर्ण्य व्यङ्ग्यं वदन्त्या कथितम्—"शान्तो भव बालिशः! बाल्यादेव त्वं 'भगवान् भगवान्' इति चीत्करोषि, भगवता तु सर्वमनुष्ठितम्!" दुर्भाग्यस्य प्रबलाघातेन भुवनेश्वरीदेव्या ईश्वरभक्तिरपि विचचाल। नरेन्द्रस्य हृदये मातुर्वाक्यं तीक्ष्णो नाराच इव निविविशे। स्तब्धो भवन्नसावशोचत्—'किं वस्तुतो भगवानस्ति? किमसौ प्रार्थनां शृणोति? किमसौ मङ्गलमयः? यद्येवं तर्हि कथं तस्य राज्ये चैतावदमङ्गलम्?' महाप्राण-विद्यासागरस्य वार्ता तस्य स्मृतिपथमारूढा। तेन प्रतिपादितम्—"यदि भगवान् दयामयो मङ्गलमयश्च तदा लक्षशो मानवाः कथमन्नाभावेन म्रियन्ते?"

इदानीं नरेन्द्रनाथचेत ईश्वरं प्रति विद्रोहशीलमभूत्। भगवतोऽस्तितायामस्य सन्देहः समुत्पन्नः। गुप्तमनोभावो 'मनस्यन्यद्' 'वचस्यन्यद्' इति व्यवहारं नासौ कर्तुमशक्नोत्। अतोऽनेन प्राकट्येनैव भगवदस्तित्वविरुद्धः प्रचारोऽक्रियत। सपद्येव समाचारोऽयं प्रसृतो—नरेन्द्रो नास्तिको बभूव। एतस्य वृत्तान्तस्य सत्यतां परिज्ञातुं बहवो जना आलोचनां कर्तुमागच्छन्। तेन तेषां सम्मुखे ह्यूम-वेन-मिल-प्रभृतीनां पाश्चात्त्यदार्शनिकानां मतान्युद्धृत्येश्वरानस्तित्वं प्रमाणितम्। एतदेव न, दण्डप्राप्तिभयेनेश्वरे विश्वासानुष्ठानं दुर्बलतामात्रम्—इत्यपि तेनोच्चैः स्वरेण घोषितम्। प्रकाशे सगर्वमसाववोचत्—"ये दुर्भाग्यकवलिताः सन्ति, ते येन केनाप्युपायेन क्षणिकानन्दाधिगमायाधिकारवन्तो विद्यन्ते।"

नरेन्द्रनाथो बहूनि दिनानि यावद् दक्षिणेश्वरे नागच्छत्। तस्य पितृवियोग-सांसारिकदुरवस्था-प्रतिकूलकालादीनां परिज्ञानं श्रीरामकृष्णस्यासीत्। स च नरेन्द्रस्य कृतेऽतिचिन्तितोऽभवत्। परन्तु नरेन्द्रो नास्तिको जातः, तस्य नैतिकं पतनमपि जातम्—अयं संवादो यदा तस्य कर्णगोचरीबभूव, तदा तस्य संवादेऽत्र विश्वासो नाभूत्। एकदा

भवनाथनामैको युवा भक्तो रुदन्नागत्य श्रीरामकृष्णमुक्तवान्—"महाशय, नरेन्द्र एवं भविष्यति इति स्वप्नेऽपि न केनापि चिन्तितमासीत् ।"

श्रीरामकृष्णोऽस्थिरतां प्रपेदे । तेनोत्तेजितस्वरेण प्रोक्तम्—"शान्तो भव मूढ़, जगज्जनन्या प्रोक्तम्—'नरेन्द्रः कदापि तादृशो भवितुं न शक्नोति ।' मम समीपे पुनरेतादृशकथने नाहं तव मुखं द्रक्ष्यामि ।"

नरेन्द्रनाथः कियद्गम्भीरया मनोवेदनया भगवदस्तित्वविषये सन्देहं प्रकटितवान्, इत्यत्र विशेषावधानदानमावश्यकम् । स च बाल्यादेवेश्वरविश्वासी, विशेषतः श्रीरामकृष्ण-सदृशदेवमानवसम्पर्कमधिगत्य तदीयो विश्वासोऽतिदृढतां गतः । स्वीयजीवनेऽपि अनेकान्यतीन्द्रियदर्शनानि प्रापं प्रापं धन्यो बभूव । किमसौ "ईश्वरास्तित्वविषये सन्देहं प्रकटयितुमशक्ष्यत् ? वस्तुत एवं नास्ति । प्रकारान्तरेण तदीयं मनः क्षुब्धमभवत् । स व्यचारयद् यद् "ईश्वरोऽवश्यमेव वर्तते । तदधिगमोपायोऽपि नूनं विद्यते । अन्यथा जीवनस्य किं मूल्यम् ? जीवने दुःखकष्टानि यावन्त्यागच्छेयुः, परन्तु ईश्वराधिगतेः पन्था अन्विष्याविष्करणीय एव ।"*

किन्तु सांसारिकैर्दुःखकष्टैर्मुक्तेरधिगमाय नैव तेन कोऽप्युपायो निःसारितः । ग्रीष्मर्तुरस्यां विश्रान्तौ व्यत्यगच्छत् । स च सततमेव

---

* दुःखभस्मस्तूपादिव भाविन आर्तबन्धोर्विवेकानन्दस्य जनुरभूत् । श्रीरामकृष्णेन प्रोक्तम्—"नरेन्द्रो यस्मिन् दिने दुःखदारिद्र्यसंस्पर्शे समागमिष्यति, तस्मिन् दिने तस्य चरित्रदम्भः असीमकरुणायां विगलितो भविष्यति । तस्यापार आत्मविश्वासः परेषां हताशभयभीतचित्तेषु साहसं विश्वासं च प्रत्यर्पयितुं यन्त्रस्वरूपतां प्रपत्स्यते । तस्य कर्मस्वाधीनत्वं बलवदात्मजये प्रतिष्ठितं सत् परेषां कृतेऽहंकृतिमुक्तं प्रकाशं यथार्थरूपेण दर्शयिष्यति ।" श्रीरामकृष्णस्य वचनमिदमक्षरशः सत्यं प्रमाणितमभूत् सांसारिकी दुःखकष्टज्वाला तं विश्वप्रेमिकविवेकानन्दरूपेण परिणतमकार्षीत् ।

जीविकान्वेषणे बभ्राम । वर्षर्तुरागमत् । वृष्टिभिरार्द्रतां गतो दिनं यावद् बुभुक्षितः सन् क्लान्तशरीरो रात्रौ गृहं प्रत्यागच्छत् । शरीरमेतावदधिकं क्लान्तत्वमगच्छद् यदग्रे सरणमतिकठिनमभवत् । विवशो भूत्वा मार्गस्य सन्निधाने कस्यचिद् गृहस्य बहिर्वेदिकायां मृतवत् पतितोऽभूत् । शतशश्चिन्ताभिस्तदीयं मनः समाक्रान्तमबोभूयत । अचेतन इव कियत्कालं यावत् तत्र पतितोऽतिष्ठत् इति न तेनाज्ञायत । सहसैव तदभ्यन्तरम् एकेनालौकिकेन प्रकाशेन समाक्रान्तम् । समस्तमपि संशयजालं छिन्नं भिन्नमभूत् । तत्रैकस्यानिर्वचनीयानन्दस्य शान्तेश्च साम्राज्यं प्रसृतमभवत् । शरीरे ईषदपि क्लान्तिर्नासीत्, केवलमानन्दातिरेको मनसि चासीमबलं शान्तिश्च व्यराजत । यदाऽसौ गृहं प्रतिन्यवर्त्तत तदानीमरुणाभया चतस्रो दिशो रञ्जिता बभूवुः । तेन मोहमुक्तं नवजीवनमिव लब्धम् ।···

* * *

तस्मिन्समये नरेन्द्रसमानो मेधावी प्रतिभाशाली युवको बी० ए० परीक्षामुत्तीर्णः सन्नपि एतावत्या चेष्टया साधारणीं भृत्यतामपि नाधिगन्तुमशक्नोदित्यविश्वासस्य घटना विद्यते । एकोऽदृश्यहस्तः प्रतिपदं दुर्लंघ्यबाधाः प्रादुर्भावयन् नरेन्द्रस्य सर्वामप्यर्थोपार्जनचेष्टां व्यर्थयांचकार ।····एतस्यायमाशयो यत्—भगवदिच्छया बृहत्तरप्रयोजनानुष्ठानाय नरेन्द्रेण संसारत्यागिसंन्यासिना भवितव्यम् । सांसारिकस्य आनन्दविलासस्य आत्मीयपरिजनमायाममतादीनां च पन्थाः तस्य कृते न विद्यते । एतदतिरिक्तं नरेन्द्रस्याभ्यन्तरे विराण्मानवताया विकासाय सांसारिकदुःखदारिद्र्यैः सह परिचयस्य प्रयोजनीयत्वमासीत् । अतस्तदानीं बहुविधविघ्नबाधाहताशाकष्टाभ्यन्तरतः तदीयजीवनस्य गतिमार्गो बभूव । दुःखकष्टदहनेन तस्य जीवनमौज्ज्वल्यमण्डितमभूत् ।···

* * *

श्रीरामकृष्णो नरेन्द्रनाथस्य दीर्घेणादर्शनेन व्याकुलो बभूव। नैच्छन्निव तस्य दिनानि व्यतिगन्तुम्। नरेन्द्रोऽपि दारुणदुःखहेतुना दक्षिणेश्वरे न गमनस्य संकल्पमकरोत्। पितामह इव संन्यासधर्मं गृहीत्वा गुप्तरीत्या गार्हस्थ्यं परित्यक्तुं निश्चयमकार्षीत्। तेन गृहत्याग-दिनमपि स्थिरीकृतम्। परन्तु श्रीठाकुरः किंचिदपि न निवेदितः। एतस्मिन्नेव काले समाचारो लब्धो यत् श्रीठाकुरस्तस्मिन्नेव दिने कलिकत्ताया एकस्य भक्तस्य गृहे समायाति। तं साक्षात्कर्तुं स तस्य भक्तस्य गेहमुपडुढौके। नरेन्द्रनाथं विलोक्यैव श्रीठाकुरोऽन्यं कमपि वृत्तान्तं नोत्थाप्य तं दक्षिणेश्वरमागन्तुं नितरामनुरुरुन्धे। नरेन्द्र-नाथस्य शतश आपत्तयो व्यर्थीबभूवुः। श्रीठाकुरेण सह दक्षिणेश्वरे तेन गन्तव्यमभवत्। दक्षिणेश्वरमुपतिष्ठत एव श्रीठाकुरस्य भावान्तर-मभूत्। स हि नरेन्द्रसमीपमुपविश्य गानमगायत्—

"कथा बोलते डराइ, ना बोलते डराइ।
(आमार) मने सन्द हय, पाछे तोमाधने हाराइ हाराइ।"*

नरेन्द्रनाथोऽप्यात्मानं निरोद्धुं नाशक्नोत्। तस्य वक्षःस्थले-ऽप्यश्रूणां धारा प्रावहत्।...

श्रीठाकुरो रात्रौ नरेन्द्रनाथं समीपमाहूय विजने प्रावोचत्—"अहं जानामि—त्वं भगवत्याः कार्यार्थमागतोऽसि। अतो गार्हस्थ्ये बद्धो भवितुं न शक्ष्यसि। परन्तु यावदहं तिष्ठामि, तावन्मदर्थमत्रैव तिष्ठ।" श्रीठाकुरस्य नेत्रयोरश्रूणि समागतानि। नरेन्द्रनाथोऽपि शिरो नमयन् रुरोद। इदानीं तस्य गृहत्यागो निरुद्धः।...

द्वितीयदिने नरेन्द्रनाथो गृहमागच्छत्। पुनश्चिन्ताशतेन तस्य हृदयमाच्छादितमभूत्। अतिपर्यटनानन्तरम् अटार्नीकार्यालये एक-

---

* अर्थात् वृत्तान्तस्य कथने विभेमि, न कथनेऽपि भीतो भवामि, मम मनसि सन्देह उत्पद्यते यत् सम्भवतस्त्वामहं विरहेयं विरहेयम्।

मस्थायि साधारणं दास्यत्वमधिगतम्। पुस्तकानामनुवादेनापि किमपि द्रव्यमलभ्यत। परमेतेन—परिवारपोषणस्य कोऽपि स्थायी प्रबन्धो न जातः। मानसिकाशांतिवशात्कदाचिदऽसौ विक्षिप्त इव बभूव। तदानीं काले तेन विचारितम्—श्रीठाकुरस्य वचनं भगवान् शृणोति। यद्यसौ ममैतस्या अवस्थायाः कृते भगवतः समीपे प्रार्थनां विदधीत तदा कोऽप्युपायो भवितुं शक्नोति। स तु मम कमप्यनुरोधं न व्यर्थयति।

भावनयाऽनया एकदा नरेन्द्रनाथो दक्षिणेश्वरमागतः, हठं चाकरोत्—"भवता कोऽपि प्रबन्धः कर्त्तव्यो भविष्यति। यदि भवान् स्वमातरमेकवारमपि कथयेत्, तदानीं मम निखिलानि कष्टानि निराकृतानि भवेयुः।" श्रीठाकुरो मन्दस्वरेण प्रोवाच—"अरे, अहं तु मातुः सकाशादेतन्नाभ्यर्थयिष्यामि। त्वं स्वयमेव कथं नाभ्यर्थयसे? मातरं न स्वीकरोषि, अत एव तव इयन्ति कष्टानि सम्पद्यन्ते।"

श्रीरामकृष्णदेवेन किंचिन्मौनमाश्रयता पुनरुक्तम्—"अद्य मंगलवासरः। अहं ब्रवीमि अद्य रात्रौ मातुः पार्श्वं गत्वा यत् त्वं प्रार्थयिष्यसि, माता तदेव दास्यति।"

इमां वार्तां निशम्य नरेन्द्रनाथः किंचिदाश्वस्तो बभूव। एतस्य वार्ता मिथ्या भवितुं नार्हति। नरेन्द्रनाथेन मनस्येवं संकल्पः कृतो यदहं मन्दिरे गत्वा मातुः सन्निधौ पारिवारिकदुःखकष्टावसानाय प्रार्थनां विधास्यामि। निशाया एकप्रहरे व्यतीते श्रीठाकुरस्तं कालीमन्दिरे प्रैरयत्।

मन्दिरे गत्वा मातुरभिमुखं पश्यतो नरेन्द्रनाथस्य हृदयमेकामन्दानिर्वचनीयानन्देन संप्लावितमभूत्। तेनानुभूतं यत् माता चिन्मयी अनन्तप्रेमसौन्दर्यस्वरूपिणी च। स विह्वलत्वं गतः। मातुरुज्ज्वलप्रकाशेन तस्य हृदयं परिपूर्णमभवत्। भक्तिविनम्रचेतसा तेन मातुः प्रणामः कृतः। गृहगार्हस्थ्यचिन्ता तस्य मनसि नासीत्। मातुः कृपा-

कटाक्षविमलानन्देन तस्य मानसमाप्लुतमभूत्। शिरो नमयन्नसौ प्रार्थयत्—"मातः, मह्यं विवेकं वैराग्यं च देहि, ज्ञानं भक्तिं च प्रयच्छ, स्वीयं निरर्गलं दर्शनं वितर।"

एकेनालौकिकानन्देन शान्त्या च तदीयं मनः परिप्लावितं जातम्। मातुर्दिव्ययाऽनुभूत्या स आत्मानं व्यस्मरत्। भावाविष्ट इव कंचन क्षणं मन्दिरे स्थित्वा श्रीठाकुरस्याभ्यर्णमाजगाम। श्रीठाकुरस्य प्रश्नेन नरेन्द्रनाथश्चकितः संवृत्तः, शिरो नमयन्नुवाच—"न हि महाशय, मातरमवलोक्यैवाहं सर्वं विस्मृतवान्। सांसारिकदुःखनिराकरण-वृत्तान्तमहं मात्रे न निवेदितवान्।"

ततः श्रीठाकुरः प्रत्युवाच—"गच्छ गच्छ, पुनर्गच्छ। मात्रे दुःख-मोचनवार्तां श्रावय।"

स पुनर्मन्दिरं ययौ। परन्तु पुनरपि तथैव भावान्तरमुपतस्थौ। निर्निमेषं मातुरभिमुखं निरीक्षमाणो ज्ञानभक्तिहेतवेऽभ्यर्थनामकरोत्। पुनः श्रीठाकुरस्य समीपमागतः। श्रीठाकुरेण तिरस्कृतो दृढसंकल्प-मनुष्ठायासौ तृतीयवारं मन्दिरमयासीत्। इदानीं नासौ विसस्मार। दुःखकष्टानामपसारणाय प्रार्थनां करिष्यामीति निरचिनोत्। किंतु मातुः सम्मुखे प्रणामं कुर्वतस्तस्य मनसि विचारोऽयं समायातो यद् दुःखविमोचनरूपतुच्छं वस्तु मातुः कथं याचनीयम्? लज्जया तस्य मुखात् तादृशी प्रार्थना न निरगच्छत्। मातरं वारं वारं प्रणामं कुर्वन्नसौ गम्भीरस्वरेण प्रार्थयत्—"मातः, अहं नान्यत् किमपि याचे, केवलं त्वामेवेच्छामि। मह्यं ज्ञानं भक्तिं च प्रयच्छ।"

समागत एव श्रीठाकुरेण पृष्टः—"साम्प्रतं पारिवारिकदुःखकष्टकथा मात्रे निवेदिता ननु?"

'न निवेदिता' इति कथनेन पुनरसौ निर्भर्त्सितः, परन्तु नरेन्द्रेण मनस्यनुभूतं—सर्वमिदं श्रीठाकुरस्यैव क्रीडनम्। ऐन्द्रजालिकेनेव तेन तस्य मानसं वैपरीत्यं नीतम्। किन्तु जननीभगिनीदशा तस्य चिन्ता-

विषयीभूताऽभवत्। तेन श्रीठाकुरः प्रोक्तः—“सर्वमिदमस्ति भवदीयमेव कार्यम्। भवतैव मदीयं मानसं परावर्त्तितम्। इदनीं भवतैव मम भ्रातृभगिनीत्र्यवस्था सम्पादनीया भविष्यति। अन्यथा नाहं भवन्तं परित्यक्ष्यामि।”

बहुविधाग्रहानुरोधानन्तरं श्रीठाकुरः प्रोवाच–“अस्तु व्रज, मातरं कथयिष्यामि, येन तत्कृते साधारणान्नवस्त्रन्यूनता कदापि न भविष्यति।”

नरेन्द्रनाथेन ‘माता’ स्वीकृता–इति श्रीठाकुरस्यापार आनन्दोऽभवत्। तदीयमनसो दुश्चिन्ताया एको घनीभूतो घनोऽपससारेव। तद्दिनान्नरेन्द्रनाथस्य नूतनं जीवनमारब्धम्। तेन आद्याशक्तिर्जगज्जननी स्वीकृता, तस्यां च विश्वासः कृतः। सा प्रतीकतः प्रत्यक्षमागता अस्ति। प्रतीकोपासनाया मर्मवाणी तदन्तरे प्रतिध्वनिता वभूव। तद्दिवसत एव तेन भगवतो मातृभावस्यानुभवः प्रथमं कृतः, प्रतिमापि ईश्वरस्य प्रतीकस्वरूपेति तेनाङ्गीकृतम्। हिन्दवः प्रतिमाया अवलम्बनेन श्रीभगवन्तमेव समुपासते। सांसारिकाणि दुःखदारिद्र्यादीनि मनुष्येभ्यः कियद्विशालां शिक्षां प्रयच्छन्ति! नास्तिकानपि आस्तिकतां प्रापयन्ति।

नरेन्द्रस्य दुश्चिन्ताया अवसानं जातम्। महाकालीमहत्त्वं तेनावधारितम्। नासौ केवलं पाषाणप्रतिमामयी, सा तु ब्रह्माण्डभाण्डोदरी, चतुर्वर्गदात्री, भुक्तिमुक्तिप्रदायिनी, वराभयप्रदा च विद्यते। मातुर्गुणगानाय तस्य हृदयं व्याकुलमभूत्। तदानीं काले स मातृसम्बन्धि संगीतं किमपि नाज्ञासीत्। अतोऽसौ श्रीठाकुरमनुरुरोध यद् “भवान् मां मातुर्गानं शिक्षयत्विति।”

श्रीठाकुरः सानन्दकण्ठेनागायत्—

“( आमार ) मा त्वं हि तारा।
तुमि त्रिगुणधारा परात्परा॥

जानि मा ओ दीनदयामयी, तुमि दुर्गमेते दुःखहरा।
तुमि जले तुमि स्थले, तुमि आद्यामूले गो मा।
आछो सर्वघटे अक्षपुटे साकार आकार निराकारा॥
तुमि सन्ध्या तुमि गायत्री, तुमि जगद्धात्री गो मा।
तुमि अकुलेर त्राणकर्त्री, सदाशिवेर मनोहरा॥

अर्थात्—

"(मम) मा त्वं हि तारा।
त्वं त्रिगुणधरा परात्परा॥
जानामि मातः, असि दीनदयामयी, त्वं दुर्गतितो दुःखहरा।
त्वं जले त्वं हि स्थले त्वमाद्यामूले अयि मातः।
असि सर्वघटे अक्षिपुटे साकाराकारा निराकारा॥
त्वं सन्ध्या त्वमेव गायत्री त्वं हि जगद्धात्री अये मातः।
त्वमकूलात् त्राणकर्त्री सदाशिवस्य मनोहरा॥"

श्रीठाकुराद् गानमिदं शिक्षित्वा नरेन्द्रनाथस्तद् गायन् निशां समस्तामनैषीत्। तदान्तरिकः समुद्रः प्रेमचन्द्रोदयेन समुद्वेलितो बभूव।

* * *

श्रीठाकुरस्य प्रार्थनया तया नरेन्द्रनाथस्य पारिवारिको धनाभावः कियदंशतो दूरं गतः। स विद्यालयस्य (स्कूल) शिक्षकतां कार्यान्तराणि च प्रापत्। तदीयहार्दिकदुर्दमनीयद्वन्द्वभावस्तिरोदधे। तस्यान्तःकरणं झञ्झावातनिर्मुक्तवारिधिरिव प्रशान्तं गम्भीरं च समजायत। ज्ञानतोऽसौ भगवत्प्रेम्णि ऊर्ध्वतमातिचेतनदिव्यप्रकाशं प्राप्तवान्। सहैव श्रीरामकृष्णदेवमहिमाऽपि तदीयान्तःकरणेऽधिकारमकार्षीत्। स दक्षिणेश्वरगमनस्यैकमप्यवसरं नात्यजत्। श्रीठाकुरस्य सर्वमपि दर्शनादिकं तेन सत्यतया गृहीतम्। श्रीरामकृष्णदेवोऽपि नरेन्द्रं शनैः शनैरूर्ध्वस्थासीमभूमानंदनिकेतनाभिमुखं परिचालयाञ्चकार।

श्रीठाकुरस्य जीवनमसौ नवीनया दृष्ट्या ददर्श। तेन दिव्या दृष्टिरिव समधिगता। श्रीठाकुरेण नरेन्द्रस्य नयने दिव्यदृष्टिरूपेणाञ्जनेनेव विलेपिते। श्रीठाकुरस्य प्रत्येकवृत्तांतेनाचरणेन चासौ नूतनं प्रकाशमपश्यत्, तद्विचारेष्वपि अभिनवपरिवर्तनमन्वभवत्। अयमेव नरेन्द्रनाथः कदाचित् श्रीठाकुरस्य सम्मुखं व्याजहार—"भवदीयं दर्शनादि मस्तिष्कचापल्यं नेत्रभ्रमो वा।" प्रत्येकं मानवः स्वीयसीमितदृशाऽसीमानन्तं द्रष्टुमीहते, अल्पेन मनसा बुद्ध्या स्वल्पया च विराजं परिमापयितुमिच्छति।...

१८८४ ईसवीयस्येयं घटना। श्रीठाकुरस्य गेहे अनेके भक्ताः समागमन्। नरेंद्रोऽप्युपस्थित आसीत्। बहव ईश्वरीयवृत्तान्ता अभूवन्। वैष्णवधर्मस्यालोचनाप्रसंगेन श्रीठाकुरो जगाद—"नामनि रुचिः, जीवेषु दया, वैष्णवपूजनं चेति त्रयं वैष्णवधर्मस्योपदेशसारः। नामैवेश्वरः—नामनामवतोरभेदज्ञानेनानुरागपूर्वकं सर्वदा भगवन्नामानि जपनीयानि। भक्ते भगवति, विष्णौ वैष्णवे च परस्परमभेदबोधेन सदैव साधवो भक्ताः पूजनीया वन्दनीयाश्च। जगत् सर्वं श्रीकृष्णरचितमिति हृदये धारयित्वा सर्वजीवेषु दया"—इत्युदीर्याकस्मादेवासौ समाधिस्थोऽभवत्।

किञ्चित्कालानन्तरं कथञ्चित् प्रकृतिस्थो भूत्वा स स्वमनस्येव व्याचष्ट—"जीवे दया, जीवे दया? धिक् तत्! कीटाणुकीटोऽसि, त्वं जीवेषु कथं दयां करिष्यसि? त्वं कोऽसि दयाकर्त्ता? न हि, न हि जीवेषु दया न। शिवज्ञानेन जीवसेवा।"

सर्वैरेव मुग्धैर्भूत्वा देववाणीयमाकर्णिता। परमस्यां यत् परमसत्यं निहितमास्ते, तत्केवलं नरेन्द्रनाथेनैवावधारितम्। तेनानन्तरं प्रोक्तम्—"...कीदृगपूर्वप्रकाशोऽद्य मया श्रीठाकुरस्य वचसा प्राप्तः! श्रीठाकुरेण भावाविष्टेनाद्य यत्किमप्युक्तं तेन वनस्य वेदांतो गृहमानेतुं शक्यते। संसारस्य सर्वेष्वपि कार्येषु परमसत्यस्यास्य प्रयोगः कर्तुं शक्यते।..."

जीवनस्य प्रत्येकक्षणे मानवा येषां सम्पर्कमासादयन्ति, येषां श्रद्धा-सम्मानादिकमनुतिष्ठन्ति, येषु स्निह्यन्ति, ते सर्व एव ईश्वरस्यांशभूता:—स्वयमपि तदभिन्नाः सन्ति।···संसारस्य सर्वेषां जीवानामेवंविध-शिवज्ञानपूर्वकसेवानुष्ठानेन चित्तशुद्धौ सत्यामहमपि सच्चिदानन्द-मयस्येश्वरस्यांशः शुद्धमुक्तस्वभावश्चेति धारणा कर्त्तुं शक्यते।···यदि भगवान् कदाचिदवसरं दद्यात्, तदानीमद्य यत् श्रुतं, तस्यैव सत्यस्य संसारे सर्वत्र प्रचारं करिष्यामि। पण्डितान् मूर्खान्, धनिनो दरिद्रान्, ब्राह्मणान्, चाण्डालान्, सर्वानेव विमुग्धान् करिष्यामि।"*

—:-*-:—

* 'शिवज्ञानेन जीवसेवा'—अत्र महामन्त्रे साम्य-मैत्री-विश्वभ्रातृत्वानां बीजं निहितमास्ते। सर्वतो निकटस्थेषु स्पृश्यास्पृश्य-प्रतिवेशि-समाज-जात्युपजाति-महामानवजातिमानवेषु चापि, पुनश्चैकधर्मस्य विभिन्नशाखासु मतवादेषु, विभिन्नेषु धर्मेषु चैकत्वसंस्थापनाय शिवज्ञानेन मानवमात्रसेवैव एकमात्रसहजो-पाय आस्ते। मनुष्य एव भगवतः श्रेष्ठतमः प्रतीकः, मनुष्यसेवा चैव तस्योत्तमा समर्चा। 'नरनारायण'-सेवा हि विशेषतया भारतस्य विभिन्नजातीयानां सदा विवादशीलसम्प्रदायानां च मध्ये एकतासम्पादनाय साहाय्यं दास्यति। करुणा-मयस्य भगवतः श्रीरामकृष्णदेवस्य 'सर्वधर्मसमन्वयवेद'स्य प्रथमो मन्त्रः—'नरनारायणसेवैवास्ते।'

श्रीरामकृष्णदेवस्य प्रार्थनया नरेन्द्रनाथस्य परिवारकृते साधारणान्न-वस्त्रप्रबन्धः शनैः शनैः सम्पन्नः, परन्तु पारिवारिकी समस्या नितरां जटिलत्वमापत्। अवसरमासाद्य ज्ञातिभ्रातॄणां शत्रुता चरमसीमानं प्रपेदे। तैस्तन्निवासभवनं समाक्रान्तम्। मातरं भगिनीं भ्रातरं चादाय नरेन्द्रनाथेन मातामहीशरणं शरणीकृतम्। प्रधानन्यायालये (हाईकोर्ट) अभियोगश्चालितः। सर्वप्रकारेण सर्वतो दशाया अस्तव्यस्तता बभूव। श्रीठाकुरोऽपि कन्सररोगेण समाक्रान्तः। नरेन्द्रो महता धैर्येण आत्मिक-बलेन बलीयान् भूत्वा वीर इव एतस्या विकटस्थितेरभियानमकरोत्। संसारस्य दानवीयं स्वरूपं तदीये मनसि भूमसन्धानाकाङ्क्षां नितरां तीव्रामकार्षीत्। स च वारं वारं दक्षिणेश्वरमागमत्। श्रीठाकुरस्य लोकोत्तरं जीवनं तं समधिकेन निविड़भावेन समाकर्षत्।

१८८५ सितम्बरमासस्यारम्भे चिकित्सायै श्रीठाकुरः सर्वतः पूर्वं श्यामपुकुरस्यैकस्मिन् भाटकक्रीते भवने समानिन्ये। प्रदीप्ताग्निशिखेव नरेन्द्रो युवकभक्तान् संगृह्य श्रीठाकुरस्य सपर्यायां संलग्नः।...

श्रीठाकुरस्य रोगः क्रमशोऽसाध्यतायां परिणतोऽभवत्। डाक्टरीय-वैद्यकादिबहुविधौषधैरपि न किमप्यनुकूलं फलमभूत्। चिकित्सकैर्नै-रुज्याशा प्रत्याख्याता। श्यामपुकुरो जनबहुलकलिकत्ताया एवैकोऽश-विशेषः। डा० महेन्द्रलालसरकारेण कुत्रापि मुक्ते निर्जनस्थाने निवास-व्यवस्था प्रदत्ता।

अतिशयान्वेषणेन कलिकत्तायाम् उत्तरस्यां काशीपुरे मनोरमुद्यान-भवनमेकम् अशीतिमुद्रामासिकभाटकेन स्थिरीकृतम्। १८८५ ईसवीय-

दिसम्बरमासस्यैकादशतारिकायां शुभे मुहूर्त्ते श्रीठाकुरः काशीपुरमानीतः। फलकुसुमवृक्षलतासुशोभिते मुक्ते स्थानेऽत्र समागत्य श्रीठाकुरो नितरामानन्द।

काशीपुरस्योद्यानमेव श्रीरामकृष्णदेवस्य 'अन्त्यलीलास्थानं' बभूव। अत्रैव श्रीठाकुरो निजशरीरे रोगाक्रान्तेऽपि संख्यातीतनरनारीषु आध्यात्मिकीं चेतनां सञ्चारयामास। तेन युवकभक्तान् त्यागमन्त्रे दीक्षितान् विधाय भाविनः श्रीरामकृष्णसंघस्य संघटनं काशीपुर एव सम्पादितम्। एकदा कुमारेभ्यो वैराग्यवद्भ्यः स्वहस्तेनैव गैरिकवस्त्राणि जपमालाश्च दत्वा तेषामभ्यन्तरेषु तेनाध्यात्मिकशक्तिसञ्चारः कृतः। घटनेयं तेषां युवकभक्तानां भाविजीवनसम्बन्धे विशेषेङ्गितपरिपूर्णाऽभवत्।*

श्रीरामकृष्णदेवो महाप्रस्थानाय प्रस्तुतोऽभवत्। तदीयं नरलीलाकार्यं समाप्तप्रायमभूत्। त्यागिशिष्याणां जीवनघटनकार्ये एव तस्यैकमात्रदृष्टिः। शारीरिक्या अस्वस्थतायाः वार्तां विस्मृत्यानेकहोरापर्यन्तं सर्वेभ्योऽनेकान् धर्मोपदेशान् ददद्सौ तान् साधने भजने च न्ययोजयत्। रात्रिन्दिवं श्रीठाकुरसेवनमेव युवकभक्तानामेकमात्रं विधेयमासीत्। रात्रौ नरेन्द्रनाथोऽग्निं (धुनिं) प्रज्वाल्य सर्वैः सह ध्याने समुपविवेश। शास्त्राणामध्ययने समालोचनायां चाधिकः कालो व्यतीयाय। क्रमशस्तैर्गृहगमनमपि परित्यक्तम्। भगवतस्तथागतस्य दृढसंकल्पमादाय

---

* श्रीठाकुरस्तस्मिन् दिवसे नरेन्द्र-राखाल-योगीन्द्र-बाबूराम-निरञ्जन-तारक-शरत्-शशि-वृद्धगोपाल-काली-लाटूसंज्ञकेभ्य एकादशयुवकभक्तेभ्यो गैरिकवस्त्राणि जपमालाश्च प्रदत्तवान्। अनन्तरं गिरीशचन्द्रायाप्येकं गैरिकं वस्त्रं प्रदत्तम्। देहत्यागात् पूर्वं त्यागिन एकादशापि शिष्यान् श्रीठाकुर एकस्मिन् दिने द्वारे द्वारे माधुकरीभिक्षार्थं प्राहिणोत्। तद्भिक्षान्नानां केचित्कणास्तेनापि गृहीताः। स तु "भिक्षान्नं परमं पवित्र"—मिति जगाद।

नरेन्द्रनाथः साधने व्रती बभूव । 'मन्त्रं वा साधयेयं शरीरं वा पातयेयम्' इयमेवासीत् तस्य प्रतिज्ञा । कदा कदापि च रात्रौ कांश्चन गुरुभ्रातॄनादायासौ दक्षिणेश्वरमगमत् । निशां ध्यानेनातिवाह्य प्रातः पुनः काशीपुरं प्रत्यागमत् । बुद्धदेवस्यालौकिकस्त्यागः, कठोरतपश्चर्या, असीमकरुणा च नरेन्द्रनाथस्य ध्यानवस्तुतामगच्छन् । 'इहासने शुष्यतु मे शरीरम्' इति दृढत्वमवलम्ब्य बुद्धदेवेन बुद्धत्वमधिगतम् । तारककालीनामधेयौ गुरुभ्रातरौ साकं नयन् कमपि न विज्ञाप्य नरेन्द्रनाथोऽकस्माद् बुद्धगयां प्रतस्थे । तत्रैव बुद्धदेवेन बुद्धता समासादिता । तेन तिस्रो निशास्त्रीणि दिनानि च बोधिद्रुमतले ध्यानेनातिवाहितानि ।* बुद्धदेवस्य विशालं हृदयं महाप्राणतां च समधिगत्य नरेन्द्रनाथः काशीपुरं प्रत्यागतः । विश्वमैत्र्या तदीयं हृदयमाप्लावितम ।

* * *

नरेन्द्रनाथस्य हार्दिकं व्याकुलत्वं क्रमशो ववृधे । तेन परिज्ञातं यत् श्रीठाकुरोऽतः परं नरदेहे बहूनि दिनानि न स्थास्यति । परन्तु परमसत्यस्योपलब्धिरिदानीं यावन्नाऽभूत् । आहारं निद्रां च परित्यज्यासौ अस्यामेव चिन्तायां न्यमज्जत् । एकस्यां रात्रौ निर्विकल्पसमाधिलाभहेतवे श्रीठाकुरं परिवार्य्यातिष्ठत्, अवोचच्च—"अहं शुकदेव इव निर्विकल्पसमाधियोगेन सच्चिदानन्दसागरे निमज्जितुमिच्छामि ।" नरेन्द्रस्य व्याकुलत्वमवलोक्य श्रीठाकुरेण प्रोक्तम्—"यदि माता समीहेत तदा स सम्पत्स्यते ।†"

---

* बुद्धदेवसम्बन्धे स्वामिना पाश्चात्यदेशतः अखण्डानन्दस्वामिनं प्रति लिखितमासीत्—"बुद्धदेवो ममेष्टः, ईश्वरश्च । तेन ईश्वरवादस्य प्रचारो न कृतः—स्वयमेव स ईश्वरः—इत्यहं वेद्मि ।"

† नरेन्द्रनाथस्य तात्कालिकमानसिकदशायाः सुन्दरं चित्रम् कथामृतग्रन्थे ( तृतीयभागे, त्रयोविंशखण्डे प्रथमपरिच्छेदे, १८८६ ईसवीयजनवरीमासचतुर्थ्यां

श्रीठाकुरस्य वार्त्तयैतया नरेन्द्रनाथचित्तं न शांतिमापत्। स च नितरामस्थिरत्वमगच्छत्। एकदा सन्ध्यायां नरेन्द्रो ध्यानाय समुपविवेश। क्रमशो गम्भीरे ध्याने न्यमज्जत्। एकेनानिर्वचनीयानन्देन तस्य मनः प्लावितम्। सच्चिदानन्दज्योतिःसागरे निमग्नो बभूव। तस्य बाह्यज्ञानं व्यलुम्पत्। स हि ब्रह्मानन्देन साकमेकतामभजत्। महान् समयो व्यतीयाय। न सन्तीव देहे प्राणचिह्नानि।...

जीवकल्याणरूपसूक्ष्मवासनावलम्बनेन नरेन्द्रनाथस्य निर्विकल्पं निर्विषयं मनः क्रमशो जीवभूमौ प्रत्यागमत्। स्वयं तस्य न कापि

---

तारिकायां, काशीपुरोद्यानवाटिकायाम्) समुपलभ्यते। एकान्ते मणिना सह वार्तामकरोत्। नरेन्द्रनाथः (मणिं प्रति) "गतशनिवासरेऽहमत्र ध्यानं कुर्वन्नासम्। सहसा हृदयस्याभ्यन्तरे न जाने कीदृशं विकलत्वमुत्पन्नमभूत्।" मणिः—"कुण्डलिनीजागरणम्।" नरेन्द्रः—"तादृशमेव भविष्यति। स्पष्टं परिज्ञातम्—इडा पिङ्गला च इति! हजारामहमुक्तवान्, "हृदये हस्तं दत्वा पश्यतु।" उपरि गत्वा तेन मिलितः सन् सर्वं तस्मै (श्रीठाकुराय) निवेदितवान्। मयोक्तम्—"सर्वेषां समभवत्, मह्यमपि किञ्चिद् दीयताम्। सर्वेषां सम्पन्नम्। मम न सम्पत्स्यते?" मणिः—"तेन तुभ्यं किमुक्तम्?" नरेन्द्रः—"तेन प्रोक्तम्—त्वं गृहस्य किञ्चित् प्रबन्धं कृत्वा समागच्छ। सर्वं समीचीनं सम्पत्स्यते किं त्वमभिलषसि?"

मया प्रोक्तम्—"मम समोहितं यदेवमेवाहं दिनत्रयं दिनचतुष्टयं वा यावत् समाधिस्थो भवेयम्। कदा कदापि भोजनार्थमुत्तिष्ठेयम्।" तेन व्याहृतम्—"त्वमेतादृक् हीनबुद्धिरसि। तदपेक्षयाऽपि समुन्नतावस्था विद्यते। त्वं तु गायसि—"यत् किमप्यस्ति तत् त्वमेव।" अनंतरं च तेन कथितम्—"त्वं गृहस्य कंचित् प्रबन्धं कृत्वा समागच्छ, समाधिप्राप्तिदशातोऽपि समुन्नता दशा भवितुमर्हति।"

"अद्य प्रातरहं गृहमगच्छम्। सर्वेऽब्रुवन्—'त्वं किं व्यर्थमितस्ततो भ्राम्यसि। बी० एल० परीक्षा निकटवर्त्तिनी वर्तते, पठनं लेखनं हित्वा इतस्ततो व्यर्थं कथं भ्रमसि?"

वासना आसीत्। किंतु भगवदिच्छया तस्य हृदये 'बहुजनहिताय' कर्मवासना जागृतिमगच्छत्। क्रमशो देहे तस्य मनोऽवातरत्। प्रकृतिस्थो भूत्वा शनैः शनैरसौ श्रीठाकुरस्य समीपमुपर्यगच्छत्। प्रणामं कृत्वा शिरो नमयन् तस्थौ। श्रीठाकुर आनन्देन परिप्लुतो भवन्नुवाच— "एतर्हि मात्रा तुभ्यं सर्वमपि प्रदर्शितम्। परन्तु साम्प्रतं ताः सर्वा अनुभूतयो निरुद्धाः स्थास्यन्ति। त्वया मातुः कार्यं करणीयमास्ते। कार्ये समाप्ते पुनरियमवस्था त्वया लप्स्यते।"* इमामवस्थामधिगत्यैव मन्त्रद्रष्टा ऋषिरुक्तवान्—

"वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय॥"

नरेन्द्रनाथेन स परमपुरुषो विज्ञातः। तस्य चेतसाऽभयपदमधिगतम्। स आप्तकामो बभूव। आत्मानन्दे निमग्नः। यावद्दिनपर्यन्तमसौ

---

"...मातामह्या गृहस्य तत्रैव प्रकोष्ठेऽहमध्ययनायागच्छम्। पठतो मम भयङ्करशङ्का प्रतीताऽभूत्—पठनं भयप्रदमिव वस्तु। हृदयं स्पन्दितम्। अहमत्यरोदिषम्। ततश्चाहं पुस्तकं परित्यज्य पलायितवान्। अनन्तरं मार्गेऽधावम्, उपानहौ कुत्रापि त्यक्ते। पलालसमूहपार्श्वतो गच्छन्नासम्। शरीरे पलालं संलग्नमभवत्। काशीपुरस्य मार्गेणाधावम्।... गार्हस्थ्यं न रोचते। गार्हस्थ्यस्थिता अपि न रोचन्ते—एकं द्वौ वा भक्तौ परित्यज्य।"

नरेन्द्रनाथस्तस्यामेव रात्रौ साधनभजनानुष्ठानाय दक्षिणेश्वरमगच्छत्। एको द्वौ वा भक्तौ सहास्ताम्। सूचिभेद्यं तमः—अमा संक्रान्ताऽऽसीत्।

* एकदा काशीपुरे गृहद्वारं पिधाय श्रीठाकुरो देवेन्द्रमजुमदारं गिरिशघोषं च नरेन्द्रविषये प्रोक्तवान्—"तस्मै स्वरूपस्य परिज्ञानं दीयेत चेत्तर्ह्यसौ स्वदेहं न रक्षिष्यति।" अतः कारणात् श्रीठाकुरेण नरेन्द्रस्य स्वरूपानुभूतयो निरुद्धाः कृताः। स च सम्मोहितश्चक्रे। संसारस्य कल्याणवासनायां जागरितं कृत्वा 'जगद्धिताय' कर्मस्वेनं नियोजयामास।

नरदेहेऽतिष्ठत्, तावद्दिनानि आत्मानन्द एवं तस्य स्थितिरभूत्। जीवनयात्रापथे सर्वेषामेव घातप्रतिघातानां दुःखदैन्यक्लेशानां तेन निर्विकारचेतसा सहनमनुष्ठितम्। तदीयहृदयप्रशान्तिरीषदपि नाह्रसत्। ब्रह्मविद आभा तस्याकारे सदैव अङ्किताऽजायत। तदनन्तरं च यदाऽसौ कौपीनधारी संन्यासिपरिव्राजकरूपः कदापि वृक्षतले, देवालये, दरिद्रगृहे, राजप्रासादे, ब्राह्मणस्यातिथिरूपेण, अस्पृश्यकुटीरे वा बभ्राम सर्वत्रैव तं महामानवस्वरूपेण लोका अगृह्णन्।

* * *

श्रीरामकृष्णेन असीमाह्वानमाकर्णितम्। तस्य सर्वत्रैव ब्रह्मदर्शनमभूत्। स सर्वदैवात्मस्थो बभूव। दैहिकं कष्टं तदीयमजरममरमात्मानं कदापि नास्पृशत्। सहसैव मनो निर्विकल्पे समाधावगच्छत्।

एकदा तेनोक्तम्—"लोककल्याणसमीहाऽपि मनसो दूरापास्ता भवति।...उपदेशः कस्मै दद्याम्। सर्वमेव राममयं पश्यामि।" 'सर्वं ब्रह्ममयं जगत्' एषैव तस्य सहजाऽवस्था बभूव। अत्रैव यदा मनः किंचिदवतरति, त्यागिनां पार्षदानामाध्यात्मिकजीवनपूर्णतासम्पादनचेष्टायाः सीमैव नासीत्। स च नानाभावैः शिष्यान् स्वरूपोपलब्धिमकारयत्। संन्यासिनः शिष्यान् संघबद्धान् विधाय स नरेन्द्रं कुलपतिं विधास्यति, येनासौ सम्पूर्णेऽपि विश्वेऽस्मिन् तस्य (श्रीरामकृष्णस्य) साम्य-मैत्री-प्रेमविश्वभ्रातृत्व-त्याग-तपस्या-सर्वधर्मसमन्वयेश्वरपरायणत्वादीनां वार्त्तां प्रत्येकनरनारीसमीपे प्रापयेत्।*

---

* देहावसानस्य कतिचिद्दिनेभ्यः प्राक् श्रीठाकुरो नरेन्द्रनाथं पार्श्वमाहूय प्रावोचत्—"पश्य, तव हस्तेऽहं सर्वान् बालकान् समर्प्य गच्छामि।.. त्वं सर्वतो बुद्धिमान् शक्तिमानपि। सस्नेहं तान् मेलयित्वा रक्षेः। साधनभजनयोस्ते मनो व्यापारयेयुरित्यस्य व्यवस्था विधेया।"...नरेन्द्रनाथो मौनी तस्थौ। श्रीठाकुरस्येङ्गितं तेनावगतम्। वेदनाया अश्रुभिस्तस्य नयने सम्भृते।

श्रीठाकुरस्यासन्नलीलासमाप्तिचिन्ता शिष्यान् व्याकुलचेतसोऽकार्षीत्। एकदा स स्वस्यान्तर्धानस्येङ्गितं ददुवाच—"कीर्तनदलमागच्छत्, अनृत्यद्गायच्च। यथाऽऽगतं तथैव गतमपि। न कोऽपि तत् पर्यचिनोत्।"...

सम्प्रति श्रीठाकुरो नरेन्द्रस्य स्वपार्श्वतो दूरे स्थितिं नैच्छत्। एकान्ते समीपे संस्थाप्य धर्मतत्त्वस्यालोचनां प्राचालयत्। भविष्यत्कर्मपद्धतयो निरदिश्यन्त। तेन हि नरेन्द्रस्योपरि स्वकीयोऽसमाप्तः कर्मभारः समर्पितोऽभवत्। एकदा श्रीठाकुरेण कर्गजस्यैकस्मिन् खण्डे लिखितम्—"नरेन्द्रो लोकशिक्षां दास्यति।"...नरेन्द्रायाधिकारपत्रमिव समर्पितम्।

नरेन्द्रनाथः कांश्चित्क्षणान् द्वैविध्ये स्थित्वा जगाद—"अहमेतावत् कर्तुं न शक्ष्यामि।" श्रीठाकुरः प्रत्युदतरत्—"त्वया अवश्यमेव कर्त्तव्यं भविष्यति।"

श्रीरामकृष्णदेवेन ग्रीवाग्रा हं नरेन्द्रः सर्वं कार्यं कारितः। अतो नरेन्द्रेण विवेकानन्दरूपेण प्रोक्तम्—"अहमाकाररहिता वाणी भवितुमिच्छामि"।

स च श्रीरामकृष्णदेवस्य अमूर्त-वाणीरूपः—तदीयहस्तयन्त्रस्वरूप आसीत्। नरेन्द्रनाथेनात्मसमर्पणमक्रियत। नरेन्द्रनाथं विश्वासाविश्वासदुःखवेदनादिविविधसंघातानामभ्यन्तरतो निष्कास्य श्रीरामकृष्णः स्वहस्तकौशलेन विवेकानन्दरूपं ग्राहितवान्।

श्रीरामकृष्णस्य प्रेरणयैव विवेकानन्दस्य विश्वपरिक्रमा समभवत्। इयमपि तदिच्छाविरुद्धैव। श्रीठाकुरस्यामोघेच्छाशक्तियन्त्रस्वरूपोऽसावभूत्। नरेन्द्रनाथहृदये या किल विश्वकल्याणसाधनसमीहा जागर्तिमभजत्, सापि श्रीठाकुरेच्छयैव सम्बभूव। विवेकानन्दहेतुना संसारः श्रीरामकृष्णं प्रति ऋणी वर्तते।

देहत्यागस्य त्रिचतुर्दिनपूर्वमेकदा सन्ध्यासमये श्रीठाकुरेण नरेन्द्रः स्वपार्श्वमाहूतः। गृहे कश्चिदपरो नासीत्। द्वारं पिहितं कृतम्। नरेंद्रमभ्यर्णमुपवेश्य तस्य नयनयोः स्वीयनेत्रे निवध्य श्रीठाकुरः क्रमशः समाधिस्थोऽभवत्। तस्मिन् काले नरेंद्रेणेदमनुभूतं यत् श्रीठाकुरस्य शरीराद् विद्युदिवैकं ज्योतिर्निर्गत्य तदीयं देहं प्रविशति। क्रमशः सोऽपि समाधिमग्नो जातः। दीर्घकालमसौ तदवस्थायामेवातिष्ठत्। बाह्यज्ञाने समायाते नरेन्द्रेण विलोकितं यत् श्रीठाकुरस्य नयनाभ्यामानन्दाश्रूणि प्रवहन्ति। सस्नेहं श्रीठाकुरो व्याजहार—"अद्य स्वीयं सर्वस्वं तुभ्यं समर्प्य निष्किंचनोऽस्मि संवृत्तः। त्वं शक्त्याऽनया संसारस्यानेकानि कार्याणि सम्पादयिष्यसि। कार्ये सम्पन्ने पुनः प्रत्यागमिष्यसि।" नरेंद्रोऽपि रुरोद। तस्य मुखादेकापि वार्ता न निरगच्छत्।

तस्मिन् दिवसे श्रीठाकुरो 'जगद्धिताय' नरेंद्रस्याभ्यन्तरे शक्तिं संचारयामास। स च श्रीठाकुरस्य विपुलाध्यात्मिकशक्तेरुत्तराधिकारी बभूव। एकस्य दीपकस्य शिखया अन्यो दीपकः प्रजज्वाल। अनंतरं शतशो हृदयेषु शिखाऽसौ प्राज्वलत्।

नरेन्द्रस्याभ्यंतरे शक्तिरूपेण श्रीठाकुरोऽनुप्रविष्टः। उभावेकतां गतौ।* महति समुद्रे महान् नदः सम्मिलितः।

महाप्रयाणात् दिनयुगलपूर्वं भीषणया रोगयन्त्रणया श्रीरामकृष्णः कातरोऽभवत्। एतावदधिकं कष्टमासीद् यद् दृष्ट्वाऽश्रूणि न निरोद्धुं शक्यन्ते। दशायामेतस्यां नरेन्द्रेण विचारितं—"साम्प्रतं यद्ययं ब्रूयाद् यत् 'अहमवतारोऽस्मि,' तदैवाहं विश्वासं करिष्यामि।"

आश्चर्यम्, नरेंद्रस्याभ्यन्तरे चिन्तायामस्यामुदीयमानायामेव

---

* नरेन्द्रनाथेन सह श्रीरामकृष्णस्य नेषदपि पृथग्बुद्धिरासीत्। आत्मन एकत्वमिव जातम्। एकदा श्रीठाकुरः प्रोवाच—"तव बुद्धिरतिहीना वर्तते, किं त्वमहं च पृथक् स्वः ? अयमप्यहं सोऽप्यहमेवास्मि।"

श्रीठाकुरेण सहजकण्ठत उक्तम्—"इदानीं यावदपि तवाविश्वासः।··· सत्यं वदामि—यो रामः, यः कृष्णस्तौ द्वावप्येकाधारेण रामकृष्णरूपं बिभृतः। परन्तु तव वेदान्तदृष्ट्या न।"

वज्राहत इव नरेंद्रनाथः स्तम्भितोऽभवत्। सन्देहकारणादनुतप्तो भूत्वाऽसौ तीव्रवेदनया रुरोद। श्रीरामकृष्णः कोऽस्ति, कथमागतः—तदीया मर्मवाणी नरेन्द्रस्य हृदये स्वर्णाक्षरैर्मुद्रिता बभूव।*

श्रीरामकृष्णो नरेन्द्रनाथस्यान्तरे नवीनरूपं जग्राह—अवतार-वरिष्ठरूपेण। केवलमेतदेव न, सर्वेषां भावानां, धर्माणां, सर्वदेव-देवीस्वरूपेण च। परवर्त्तिनि काले श्रीरामकृष्णदेवस्य यस्य प्रणाम-मन्त्रस्यासौ रचनामकार्षीत्, तत्र सूत्ररूपेण श्रीठाकुरस्य यथार्थं स्वरूपं प्रकटीचकार।

---

* १८९५ ईसवीये अमेरिकातः स्वामिना विवेकानन्देन स्वीयमन्यतमं गुरुभ्रातरं श्रीस्वामिनं ब्रह्मानन्दमुद्दिश्य लिखितम्—"रामकृष्णावतारे ज्ञान-भक्तिप्रेम्णाम् आनन्त्यम्, अर्थात् अनन्तं ज्ञानं कर्म प्रेम च, जीवान् प्रति अनन्ता करुणा च आसन्। युष्माभिः साम्प्रतमपि नावधारितम्। 'श्रुत्वा-प्येनं वेद न चैव कश्चित्' What the whole Hindu race has thought in ages, he lived in one life. His life is a living commentary to the Vedas of all nations. अर्थात् सम्पूर्णाऽपि हिन्दुजातिः युगसहस्रेण यं विचारमकरोत्, श्रीठाकुरः किल एकस्मिन्नेव जीवने तस्य सर्वानपि भावान् उपालभत। तस्य जीवनं सर्वजाति-वेदानां जीवित-व्याख्यारूपम्।" अन्यत्र तेन कथितम्—"सर्वेषां भावाना-मेतादृशः समन्वयः संसारस्येतिहासेऽन्यत्र कुत्रापि समन्वेषणेनापि न लप्स्यते। एतेनैवावधारणीयं यद्ध्यासौ कोऽयं देहं धृत्वा समागतः। अवतारकथनेन स लघुत्वमासादयति।"

स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे ।
अवतारवरिष्ठाय रामकृष्णाय ते नमः ॥"

अद्यैतत्प्रणाममन्त्रमुच्चार्य लक्षशो मस्तकानि श्रीरामकृष्णचरणयोरवलुठितानि बोभूयन्ते ।

स्वामिना विवेकानन्देन तस्य वेदमूर्तेः श्रीरामकृष्णस्य वाणी किल विश्ववासिनां निकटे प्रचारिता । श्रीरामकृष्णः कस्यचिद् विशिष्टस्य देशस्य, जातेः, धर्मस्य वा कृते नागच्छत्, स हि सनातन-वैदिक-धर्म-जीवितस्वरूपः, नवतमप्रकाशशाली, विश्वधर्मप्रतीकः । द्वैत-विशिष्टाद्वैताद्वैत-शैव-शाक्त-गाणपत्य मुसलमान-ख्रीस्त-जरोआष्ट्रियनप्रभृतीनां सांसारिकसर्वधर्ममतवादानां युगोपयोग्याधुनिकप्रकाशशीलः मानवसभ्यताप्रगत्युन्नयनेन सह भविष्यत्युद्भविष्णूनां सम्भाव्यमानोद्भवानां निखिलानामेव धर्माणां परिपूर्णविकासरूपेण समागतः । परमसत्यस्यास्य संसारे विज्ञापनमावश्यकमासीत् इति हेतोर्विवेकानन्दस्यागमनमभूत् *

* * *

१८८६ ईसवीयागस्तस्य षोडशी तारिका, सोमवासर आसीत् । रात्रावेकवादने षट्कलानन्तरं महानिशायां वारत्रयं कालीनामानि समुच्चार्य श्रीरामकृष्णदेवः समाधिमग्नो बभूव । द्वितीयदिने मध्याह्नं यावत् तस्यामेव समाधिदशायां तल्लीनोऽभवत् । स एव समाधिर्महासमाधिरूपेण परिणनाम । स शरीरं परित्यज्यात्मस्वरूपे व्यलीयत ।

तृतीयप्रहरे तस्य पावनं शरीरं नूतननवपुष्पमालादिभिः सुशोभितं कृत्वा काशीपुरस्थगंगातटे श्मशाने भस्मत्वमासादितम् । 'जय रामकृष्ण' इति ध्वनिश्चतुर्दिक्ष्वगुञ्जत् । शोकैरभिभूता नरेन्द्रादिशिष्याः श्रीठाकुरपार्थिवशरीरस्य पवित्रं भस्मास्थि ताम्रघटे चैकत्र संस्थाप्य काशीपुरमानीय श्रीठाकुरस्य शय्याया उपरि स्थापितवन्तः ।

* तेनोक्तम्—अहं रामकृष्णस्य दासः । मया स्वीयं शरीरं तस्मै समर्पितम् ।

द्वितीये दिवसे श्रीसारदादेवी विधवावेशधारणाय समुद्यता शरीरात् सर्वाण्याभूषणानि अवातारयत्। हस्तयोः कङ्कणे अवतारयितुमैच्छत्। तदानीमेवाविर्भूय तस्या हस्तौ निपीड्य च श्रीठाकुरेणोक्तम्—"कङ्कणे नावतारणीये।...अहं तु अत्रैवास्मि।...इतो गृहात् तत्र गृहे गमनमेव।" तेनान्यदपि कथितम्—"त्वं जगतो महालक्ष्मीर्वर्त्तसे। लक्ष्म्या अलङ्काररहितत्वेन संसारे दुःखदारिद्र्यसीमैव न स्यात्।"

श्रीसारदादेव्या जीवनस्यान्तिमदिनं यावत् ते सुवर्णकङ्कणे हस्तयोर्धारिते बभूवतुः।

अचिन्त्यरूपेण श्रीठाकुरस्य दर्शनमधिगत्य तदीयमुखवचन-विषयं निशम्य च सर्वेऽवागच्छन् यद् यथार्थतः श्रीठाकुरो न ममार। स च केवलं शरीरं परित्यज्यान्तदधौ, जीवितस्वरूपेण सूक्ष्मदेहे चैतन्यवनो विराजते।

श्रीसारदादेव्या निर्देशेन ततः प्रभृति श्रीठाकुरस्य समर्चादीनां प्रवर्तनमभूत्। स्थूलदेहनिवासकाले यथा तस्य सपर्या समपाद्यत, तथैव सेवा-पूजाभोगादीनां नियमेन सम्पादनमभवत्। भक्ताः श्रीठाकुरस्य देहावशेषपूर्णं घटं केन्द्रीकृत्य काशीपुरोद्यान एव सप्तदिनान्यतिष्ठन्। श्रीश्रीमाता सारदादेवी चापि तत्रैव तस्थौ। सप्ताहानन्तरं भवनस्य भाटकावधेः समाप्तौ श्रीमाता बागबाजारस्थबलरामवसुगृहे समाजगाम। श्रीठाकुरस्य व्यवहृतवस्तूनि भस्मास्थिपूर्णघटेन साकं बलरामभवन एव स्थानान्तरितान्यक्रियन्त।...

—:-*-:—

श्रीमाता कैश्चन युवकभक्तैर्महिलाभिश्च साकं श्रीवृन्दावनमगच्छत्। श्रीठाकुरं केन्द्रीकृत्य युवानो भक्ताः काशीपुरे समवेता बभूवुः। श्रीठाकुरस्तान् त्यागमन्त्रे दीक्षितानकार्षीत्। परन्तु तस्य देहत्यागानन्तरं तेषां निवासाय न किमपि स्थानमवशिष्टम्। अनेके जनास्तु स्वस्वनिलयेष्वेव परावबृतिरे। केचन पुनरध्ययनमारब्धवन्तः, लाटूयोगेन्द्रौ च श्रीमात्रा सह वृन्दावनमगच्छताम्। तारकोऽपि किञ्चिद्दिनानन्तरं वृन्दावनं जगाम। काशीपुरस्य लीला समाप्तिमगात्।

* * *

नरेन्द्रनाथस्य हृदयमत्यन्तं व्याकुलमभवत्। श्रीठाकुरेण देहत्यागात् पूर्वं समस्तानामपि युवकभक्तानां निरीक्षणरक्षणभारो नरेन्द्रोपरि समर्पित आसीत्। किन्तु स धनहीनो निरुपायश्च। इतश्चासौ ज्ञातिभिः सह स्वनिवासगृहविषयेऽभियोगकारणाल्लिप्तोऽभवत्। कुत्र केनोपायेन युवकभक्तानेकत्र करिष्यामीति चिन्तया तस्य चित्तं विकलमभूत्। श्रीठाकुरस्यान्तिमां समीहां पालयितुं नासौ समर्थो भवतीति हेतोस्तदीये हृदये शान्तिर्नास्ति। स च बलराममन्दिरं केन्द्रीकृत्य भक्तैः सह विचारविमर्शमकरोत्। तदानीमेव काले एकेनाभावनीयेनोपायेन श्रीठाकुरस्य विशिष्टामिच्छामनुसृत्य सर्वासां समस्यानां समाधानं बभूव। चतुर्दिक्स्थिते प्रगाढान्धकारे नरेन्द्रेण चैका समुज्ज्वला दीपशिखा दृष्टा।...

श्रीठाकुरस्य परमभक्तः सुरेन्द्रनाथो मित्रोपनामा एकदा कार्यालयादागत्य वस्त्रपरिवर्त्तनमकरोत्। तदानीं सन्ध्या आसीत्। तस्मिन्

समये श्रीठाकुरः सूक्ष्मदेहे आविर्भूतस्तमुवाच—"सुरेन्द्र ! त्वं किं करोषि ? बालका निराश्रिता भूत्वा इतस्ततो भ्राम्यन्ति । तेषां कृते कस्यचिन्निवासस्थानस्याद्यापि प्रबन्धस्त्वया न विहितः ?" तां दैवीं वाणीमाकर्ण्य सुरेन्द्रनाथस्तम्भितो बभूव । तदैवासौ नरेन्द्रान्वेषणे निर्जगाम । अत्यन्वेषणानन्तरं बलराममन्दिरे तेन साक्षात्कारो जातः । श्रीठाकुरस्य दर्शनादेशवृत्तान्तं श्रावयित्वा सजलनयनः सुरेन्द्रनाथः प्रत्यवादीत्—"भ्रातरः, यूयं कुत्र गमिष्यथ ?···श्रीठाकुरस्यादेशोऽयं यत् कुत्राप्येकं गृहं भाटकेन गृह्यताम् । तत्रैव यूयं स्थास्यथ । वयमपि मध्ये मध्ये समागत्य सांसारिकीं ज्वालां शमयिष्यामः । अहं काशीपुरे तस्य सेवार्थं किञ्चिद्धनमयच्छम् । तन्न निरोत्स्यामि । त्वां सविनयं प्रार्थये यत् त्वं कमपि प्रबन्धं कुरु, येन सर्वे एकत्र स्थास्यन्ति ।"

आकाशचन्द्रो मुष्टिकायामिवागतः । नरेन्द्रनाथ आनन्देनाधीरो भवन्नुवाच—"ममापि मनस्येकमात्रमियमेव चिन्ता आसीद् यत् सर्वानादायैकस्थाने संघीभूय कथं तिष्ठेयम् । यदि श्रीठाकुरस्यादेशो जातस्तदा सर्वं सम्पत्स्यते ।"···

परस्मिन् दिवसे कांश्चन युवकान् भक्तान् आदाय भाटकभवनान्वेषणाय स प्रस्थितः । कियद्दिनाभ्यन्तरे, कलिकत्ताया अपरसीमनि बराहनगरे 'भूत निवास' इति ख्यातं गृहमेकं दशरूप्यकमासिकभाटकेन गृहीतमभवत् । तदानीं तस्य भ्रातुस्तारकस्य वचो विशिष्य स्मृतिपथमगच्छत् । स तु श्रीठाकुरस्य विद्यमानतायामेव गृहं त्यक्त्वा संन्यासी अभवत् ।

तारकनाथस्तावत् वृन्दावनात् काशीमागत्य साधनभजने न्यरंस्त । नरेन्द्रनाथेन भाटकगृहीतभवनवृत्तान्तमन्यान् समाचारांश्च वेदयित्वा विना विलम्बं समागमनायासौ सूचितः । पत्रमधिगत्यैव तारकनाथः कलिकत्तायामाजगाम ।

तारकनाथं वृद्धगोपालं च समादाय वराहनगरमठस्य श्रीरामकृष्ण-संघस्य च प्रथमसूचना बभूव। क्रमशः श्रीठाकुरस्य विष्टरं भस्मास्थि (आत्मारामस्य पिटिकां) च संस्थाप्य नियमेन पूजनारतिभोगरागादयः प्राचलन्। नरेन्द्रनाथगृहाभियोगस्तदानीं समयेऽपि प्रचलित एवाभवत्। स रात्रौ वराहनगरमठे न्यवात्सीत्। दिने चाभियोगसफलतायै कलिकत्तायामभ्रास्यत्। गृहस्थभक्तानां यातायाते अपि प्रारभाताम्। केचन युवानो भक्ता मध्ये मध्ये समाजग्मुः। प्रायशो नरेन्द्रनाथस्तेषां गृहेषु गत्वा तानाचकर्ष। तदानीं सर्वेषां मनस्सु तीव्रं वैराग्यमासीत्। सर्वे चेश्वराधिगमाय व्याकुलत्वमवापुः। एवं प्रकारेण श्रीठाकुरस्य शरीर-त्यागस्य सार्धैकमासाभ्यन्तरे वराहनगरमठः स्थापितो बभूव। इदानीं समस्तेऽपि भूमण्डले श्रीरामकृष्णसंघस्य अनेकानि प्रतिष्ठानानि संस्थापितानि सन्ति, नरेन्द्रनाथस्यैकान्ताक्लान्तचेष्टया वराहनगरमठं केन्द्रीकृत्य तदीयः शुभसूत्रपातो बभूव।

* * *

डिसम्बरमासस्यान्तिमभागे श्रीठाकुरस्यान्यतमपार्षद्बाबूरामस्य हुगलीमण्डलान्तर्गत-आँटपुर-निवासिनी भक्तिमती माता नरेन्द्रप्रभृतीन् यूनो भक्तान् न्यमन्त्रयत्। बाबूराम-शरत्-शशि-तारक-काली-निरञ्जन-गंगाधर-सारदाप्रसन्नादीन् संगे गृहीत्वा नरेन्द्रनाथ आँटपुरम् आजगाम। शान्तसुन्दरनिर्जनग्रामीणपरिवेशे समागत्य सर्वे समानन्दुः। बाबूराममातुः सहृदयतया आतिथेयतया च तेषां हृदयानि आप्या-यितानि। तेषु दिवसेषु नरेन्द्रादीनां मनसि तीव्रवैराग्यमासीत्। आँटपुरमागत्य ते ध्यानभजनेषु न्यमज्जन्। कदाचित् भजनकीर्त्तनानि, कदापि च शास्त्राणां पाठ आलोचनाश्चाविर्भूयन्त। तैः सर्वापि रात्रि-र्ध्याने धारणायां च व्यतियापिता। हिमस्य ऋतुरासीत्। निशायामग्निं प्रज्वाल्य, तस्य च चतुर्दिक्षु सर्वे ध्यानेषूपविष्टाः। निशैव साकं ध्यान-स्यापि गम्भीर्यं ववृधे। प्रज्वलिताग्निशिखेव नवीनवैराग्यवतां मानस-

मपि अन्तर्मुखं सदात्मस्थमभवत्। ग्रामस्य गंभीरा नीरवता प्रशान्तिश्च मनसः संयमे साहाय्यं प्रायच्छत्। कदा कदापि 'हर हर बम् बम्' ध्वनिना ग्रामस्य रात्रिकालीना निःस्तब्धता भग्नाऽभवत्। मस्तकोपरि संख्यातीतनक्षत्रसंयुक्तो नीलाकाशो वितानवत् प्रसृतो बभूव।

एकस्यां रात्रौ सर्वे ध्याने समुपविष्टा बभूवुः। गभीरस्तब्धतायाः प्रथमो निशायाः प्रहरो व्यत्यगात्। सहसा नरेन्द्रनाथो भावाविष्ट इव नेत्रे उन्मील्य ईसामसीहस्यानुपमजीवनकथामकथयत्। मेरीमातुः क्रोडे ईसामसीहस्याविर्भावः, तदीयबाल्यकालस्य आडम्बरशून्यदिनानि, तस्य जार्डननदीतटे दीक्षा, तदीयानि विशिष्टानि त्यागतपोवैराग्यादीनि, आत्मानुभूतयः, शिष्यसंग्रहः, प्रचाराश्च नरेन्द्रनाथेनैतादृश्या हृदयस्पृशा भाषया वर्णिताः येन सर्वेषां हृदये ईसामसीहस्य जीवितरूपेण आविर्भाव इवाभवत्। अनन्तरं च ईसामहोदयस्य त्यागिसंघटनवृत्तान्तं परिकीर्त्य तेन स्वगुरुभ्रातॄणां सन्निधौ ईसामसीहस्यादर्शमनुसृत्य निजजीवन-संघटनार्थमनुरोधः कृतः। ईसामहोदयः पापितापिनां परित्राता समभवत्। दुःखात् संसारं मोचयितुमसौ क्रास (अङ्कुश) विद्धो भूत्वा प्राणांस्तत्याज। अस्माभिरपि सर्वस्वं परित्यज्य जगद्धिताय स्वजीवनोत्सर्गो विधेयः। अग्नेरभिमुखं समुत्थाय सर्वैरेव श्रीभगवन्नामस्मरण-पूर्वकं संन्यासशपथग्रहणं विहितम्। 'आत्मनो मोक्षार्थं जगद्धिताय च' अयमेव तेषां संन्यासजीवनादर्शः। ईसा-रामकृष्णयोर्जयध्वनिना दशापि हरितो मुखरिता बभूवुः।* शपथग्रहणानन्तरं यदा तैर्ज्ञातम्

---

* ईसारामकृष्णयोर्जीवने विचारकार्ययोरनेकानि सादृश्यानि विद्यन्ते। ईसामसीहः स्वदेहत्यागपूर्वं संन्यासिसंघं संस्थाप्य भगवद्वाणीभावप्रचारभारं स्वीयत्यागिशिष्याणामुपरि समर्पितवानासीत्। श्रीरामकृष्णेनापि देहपरित्यागतः प्राक् एकादश शिष्यान् द्वारीकृत्य संन्यासिसंघं प्रतिष्ठाप्य संसारे सद्धर्मप्रचाराय शिष्या निर्दिष्टाः।··· श्रीरामकृष्णेन ईसाईधर्मसाधनाकाले ईसादर्शनमधिगत-

यत् दिवसोऽयं "क्रिसमसईवम्" नामा अर्थात् ईसाजन्मनः पूर्वतनीयो वासर इति तदा तेषामाश्चर्यसीमा नासीत्। तैरिदं परिज्ञातं यत् ईश्वर-निर्देशत एव भगवतो 'ईसा' इत्यस्य नरशरीरधारणदिने तैरपि संन्यासजीवनयापनस्य पावनं व्रतं गृहीतम्। तैरपि नूतनजन्मानि लब्धान्यभूवन्।

आँटपुरस्यानन्तरमनेके भक्ता वराहनगरमठे न्यवसन्। नरेन्द्रोऽपि समधिककालं यावत् मठमेवाध्यवात्सीत्। तस्मिन् कालेऽपि न्यायालये तस्याभियोगो न समाप्तिमगच्छत्। स मध्ये-मध्ये कलिकत्तामगच्छत्। परन्तु स एव मठस्य प्राणस्वरूपः सर्वेषां प्रेरणाया उद्गमस्थानं च। वराहनगरस्य जीवनं कृच्छ्रसाधनत्यागतपस्यापरिपूर्णमासीत्। सूर्योदयादारभ्य सूर्यास्तपर्यन्तं कीर्त्तनं प्राचलत्। बुभुक्षापिपासाक्लान्त्यवबोधो न बभूव। कदापि च उदयास्तं यावत् जपयज्ञा एव प्रचलिता अभूवन्। कैश्चिच्च सम्पूर्णाऽपि रात्रिर्ध्यानेनैवातिवाहिता। ब्राह्ममुहूर्त्ते नरेन्द्रोऽगायत्—"अमृताधि-कारिणः सर्वे जाग्रतु।" तस्मिन्नेव काले सर्वे ध्यानायोपाविशन्। प्रहरद्वयं ध्यानजपस्तवादीनि प्रचेलुः। कदाचिच्च धर्मदर्शनेतिहासजड-विज्ञानसमाजविज्ञानसाहित्यशिल्पकलागीतोपनिषदां, कैन्ट-मिलहेगेल-स्पेंसरादीनां नास्तिकजडवादिनामपि मतसम्बन्धे तुमुलमालोचना अक्रियन्त। सन्ध्याकाले धूपं दीपं च प्रज्वाल्य घण्टाघर्घररवपुरस्सरं श्रीठाकुरस्यारार्तिकमक्रियत। शशी सस्वरतालं भावमयनृत्यमनुतिष्ठन् आरार्तिकमकार्षीत्। कदापि चोद्दामनृत्येन साकं 'जय शिव ओंकार, भज शिव ओंकार-हर हर महादेव' इति समस्वरगीत्या चतस्रो दिश

---

मासीत्। ईसामहोदयः श्रीरामकृष्णमालिङ्ग्य तस्यैव शरीरे प्रविवेश। तद्दिनादारभ्य ईसारामकृष्णौ एकात्मतां गतौ। 'जार्डन' नदी सुरसरितमामिलिता। श्रीठाकुरेण प्रोक्तम्—"ईसाईधर्मोऽपि भगवत्प्राप्तेरेकः पन्थाः।

आनन्देन मुखरिता बभूवुः। शशिनस्तन्मयत्वेन समयज्ञानमपि नाभवत्। कदा कदाऽपि दिवसे एकहोरां यावदारार्तिकमक्रियत। तदीयेयं तन्मयता सर्वेषां मानसं समाक्रामत्।

१८८६ ईसवीयस्यान्तिमभागतः १८९२ ईसवीयस्यारम्भं यावत् वराहनगरभूताविष्टगृहस्थो मठ एव नूतनवैरागिणां तपस्यास्थानमभूत्। १८८७ ईसवीयस्यारम्भे कदापि नरेन्द्रादिभिः सर्वैरेवानुष्ठानिकरीत्या विरजाहोममनुष्ठाय संन्यासाश्रमो गृहीतः। श्रीरामकृष्णेन तु सर्वेषां त्यागिशिष्याणां ललाटेषु पूर्वमेव त्यागतिलकमङ्कितमक्रियत। नूतनैर्नामभिर्वेशैश्च ते विभूषिता अभूवन्। अतीताः स्मृतयस्तैः स्वहृदयेभ्योऽपसारिताः। "आत्मनो मोक्षार्थं जगद्धिताय च" इति नवीनं व्रतं तैरङ्गीकृतम्।* श्रीरामकृष्णस्याद्भुतस्त्यागः, वैराग्यं, पवित्रता, भगवल्लाभाय तीव्रा व्याकुलता, ईश्वरप्राप्तिचिन्तायां सदैव मग्नता च सर्वेषामन्तःकरणेषु नवीनां प्रेरणां जागरयन्ति। तेन यद् दर्शितं,

---

* १८९५ ईसवीयशरत्काले अमेरिकातः स्वामिमहोदयः स्वशिष्यम् अलासिंगानामानमुद्दिश्य लिलेख—"यदाऽहं संन्यासी अभवम्, तदा बुद्ध्वाऽवधार्यं च पन्थानमेनं परिगृहीतवान्। विज्ञातं यत् शरीरं बुभुक्षया मरिष्यति। तेन किमभूत्? अहं तु भिक्षुकोऽस्मि। मम सर्वे सुहृदो निर्धनाः सन्ति। अकिञ्चना एव मम प्रियाः सन्ति। अहं दरिद्रतां सादरमगृह्णाम्। कदा कदापि च मयोपवासेन दिनानि याप्यन्ते। एतेनाहं प्रसीदामि। नाहं कस्यापि साहाय्यमभ्यर्थयामि, तेन को लाभः? सत्यं स्वीयप्रचारं स्वयं करिष्यति। मम साहाय्यं विना न तन् नङ्क्ष्यति। "सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ। ततो युद्धाय युज्यस्व" इति गीतावाक्यम्।··· एतादृशस्यानन्तप्रेम्णः, सर्वावस्थायामेतादृशाविचलितसमभावस्य सत्त्वात्, ईर्ष्या-द्वेषयोः परिपूर्णतया विमुक्तौ कार्याणि सेत्स्यन्ति। मम सहायताया अभावेन न तद् विनङ्क्ष्यति।" स्वामिनो वृत्तान्तेनानेन संन्यासधर्मस्य महत्त्वं दायित्वं च प्रकाशितं भवति।

तदीयशतांशस्यैकांशोऽपि नास्माभिः समनुष्ठितः। धिगस्मान्। तदीय-शिष्यरूपपरिचयप्रदानस्य योग्यता सम्प्रत्यपि न समुपार्जिता। वयं कीदृशा अयोग्याः स्मः—एतादृश्यश्चिन्ताः सदैव तेषां मनांसि अस्थिराण्यकार्षुः। नवीनेनोद्यमेन नूतनं संकल्पमादाय समधिके साधने भजने चैते न्यमज्जन्।

बराहनगरमठजीवनं श्रीरामकृष्णसंघस्येतिहासे एकः समुज्ज्वलः अध्यायः। तत्रत्यास्त्यागतपस्याऽपरिग्रहाः श्रीरामकृष्णस्य त्यागिसंघाय युगशतस्य स्थायित्वं प्रायच्छन्। ईश्वरदर्शनस्य वासना प्रत्येकहृदये दावाग्निरिव सर्वक्षणं प्रजज्वाल। तेन च संसारस्य निखिलाश्चिन्ता वासनाश्च समूलमदह्यन्त। नरेन्द्रादयः प्रायोपवेशनेन देहं परित्यक्तु-मुद्यता बभूवुः।

भोजनादीनां नासीत् कोऽपि प्रबन्धः। तदर्थं काचिच्चेष्टा नाभूत् प्रतिदिनं पर्याप्तभोजनं नालभ्यत। प्रसंगक्रमानन्तरं स्वामी विवेका-नन्दस्तेषामानन्दमयदिवसानां विषये जगाद—"बराहनगरे एतादृशो दिवसा बहवो व्यत्ययुः येषु भोजनार्थं न किमप्यासीत्। भक्तं यदि प्राप्तं तदा लवणं नास्ति। बहूनि दिनानि सलवणभक्तं प्राचलत्। परन्तु न कस्यापि तत्र दृष्टिरासीत्। जपध्यानप्रबलप्रवाहे वयमवहाम। कदा कदापि अरवीनामककन्दावशेषपत्राणि क्वाथयित्वा तैः साकं लवण-भक्तानि खादितानि। अहो ! कीदृशस्ते दिवसाः ! तां कठोरतामवलोक्य भूता अपि पलायन्ते स्म, का कथा मानवानाम् ?…"

बराहनगरस्य तपस्यया कृच्छ्रसाधनेन च तृप्तिं नाधिगच्छन्तः कतिचिन्नवीनाः संन्यासिनः परिव्राजकरूपेण तीर्थपर्यटनाय तपःसाधनाय च निरगच्छन्। सर्वावस्थासु सर्वत्र विषये श्रीभगवत उपरि निर्भर-त्वमेव परिव्राजकजीवनस्योद्देश्यम्। एतेन भगवति विश्वासो नितरां दृढायते।

स्वामिनो विवेकानन्दस्य हृदये तदानीं तीव्रं वैराग्यमासीत्। स चापि स्वस्याभ्यन्तरे असीमाह्वानमाकर्णयत्। परमसौ सातिशयं धैर्यमवलम्ब्यानुकूलसमयं प्रतीक्षमाणस्तस्थौ। श्रीठाकुरस्यान्तिमादेशं स्मृत्वा स तदानीमेव बराहनगरमठं परित्यज्य न गन्तुमशक्नोत्। गुरुभ्रातॄन् संघबद्धान् विधातुं तेषां जीवने च पूर्णताविधानदायित्वं तेन स्वयमङ्गीकृतमासीत्। केवलं साधनं भजनमेव नहि, अतीन्द्रिय-तत्त्वानुभूत्या साकं श्रीरामकृष्णस्याध्यात्मिक-भावधारायाः प्रेमवाण्याश्च सामञ्जस्यमपि गुरुभ्रातॄनसौ समबोधयत्। तुलनात्मकभावेन स सांख्य-वेदान्त-न्याय-योगादिषड्दर्शनानां धर्मशास्त्रविज्ञानेतिहाससमाज-विज्ञानादीनां च शिक्षणमदात्। ज्ञानवृक्षस्य सर्वप्रकारशाखाप्रशाखा-परिचयफलास्वादपूर्वकं सर्वानेव आचार्यरूपेण संघटितानकरोत्।

प्रायः सर्वेऽपि संन्यासिनो मठं परित्यज्य भ्रमणाय निर्गताः। केवलं स्वामिना रामकृष्णानन्देन कदापि नैतत्कृतम्। स चासीन्मठस्य 'स्थिर-केन्द्रस्वरूपः' श्रीरामकृष्णस्य विश्वासी सेवकश्च। श्रीठाकुरस्य सेवा-पूजादि कुर्वन् स बराहनगरमठे निवसन्नासीत्। तदीयैकनिष्ठसेवादर्शाः शतशो हृदयेषु अनुप्रेरणासाजागरितामकार्षुः। स हि श्रीठाकुरं केन्द्रीकृत्य श्रीठाकुरस्य सेवापूजादिकार्यं परमसाधनं परमार्थं च मन्यमान आश्रमं विहाय न कुत्राप्यगच्छत्।...

एकदा काशीपुरोद्याने श्रीरामकृष्णदेवेन भावावेशेन श्रीसारदादेवी प्रोक्ता—"अयि भोः! युष्माभिश्चिन्ता न कार्या, ...काले (स्वीयं शरीरं दर्शयित्वा) एतस्य गृहे गृहे पूजा भविष्यति।" दक्षिणेश्वरे नौबत-गृहस्य निम्नभागे, यत्र गृहे श्रीसारदादेवी न्यवसत्, तत्र विविधदेव-देवीचित्रैः साकं श्रीरामकृष्णस्यापि चित्रं संरक्षितम्। श्रीसारदादेवी तदपूजयत्। एकदा श्रीठाकुरो भावाविष्टो नौबतवेश्मन्युपस्थाय स्वीयं तत् चित्रं पत्रपुष्पैः पूजितवान्।

श्रीरामकृष्णदेवस्य भविष्यद्वाणी साम्प्रतमक्षरशः सत्यतां प्रयान्ती समुपलभ्यते। अद्य समस्तेऽपि विश्वस्मिन्नगणिता नरनार्यस्तं भगवतो नवीनतमं विकासं मत्वा परिपूजयन्ति। श्रीरामकृष्णानन्दस्यैकनिष्ठा पूजैव तदर्थं पथिप्रदर्शिका बभूव।

—*o*—

बराहनगरमठं प्रतिष्ठितं निभाल्य स्वामिना कथंचित् सान्त्वना समधिगता। तदीया गुरुभ्रातरः प्रायशस्तीर्थाटने निरगच्छन्। किन्तु बराहनगरमठ एव तेषां स्थायि केन्द्रमासीत्—यत्र परिश्रान्ताः पक्षिण इव ते प्रत्याययुः। स्वामिनोऽन्यतमगुरुभ्राता स्वामी शिवानन्द एकदा प्रोवाच—"...यद्यपि वयं परिव्राजकरूपेण तपसे तीर्थाटनाय च निरगच्छाम, तथाप्यास्माकीनं मनो बराहनगरमठे 'आत्मारामं' केन्द्रीकृत्यातिष्ठत्।"

पूर्वं स्वामी महाशयः कांश्चिद् दिवसान् वैद्यनाथशिमुलतलाप्रभृतिस्थानेषु जगाम, पुनरसौ बराहनगरं प्रत्याययौ। किन्तु १८८८ ईसवीये सहसाऽसौ परिव्राजकरूपेण निरगमत्। वाराणसीम्, अयोध्यां, लक्ष्मणपुरम्, आगरां, वृन्दावनं, हाथरसञ्च पर्यटन् हिमालयस्योपत्यकायां हरिद्वारे हृषीकेशे च गतवान्। परन्तु शारीरिक्या अवस्थतया गुरुसोदराणां विशेषानुरोधवशात् च बराहनगरं निववृते।...

भ्रमणेनैतेन तेन बहु शिक्षितम्। तस्य चेतसि भविष्यत्कर्मपद्धतेरेकं सक्रियरूपं संघटितमभूत्। साधारणसंन्यासीवासौ कपर्दकविहीनो दण्डकमण्डलुधारी संन्यासिवेशो भ्रमणमकार्षीत्। भिक्षान्न एवासौ पूर्णतया निर्भरो बभूव। कदा कदापि च शरीररक्षायै यथेष्टं भोजनमपि तेन नालभ्यत।

काश्यां निवासता तेनैका महती शिक्षा समधिगता। एकस्मिन् दिने स श्रीदुर्गामन्दिरे दर्शनार्थमगच्छत्। तत्र बहवो वानरास्तदुपर्याक्रमणार्थमधावन्। उपायान्तरमनवलोक्य असावेकतः पलायन-

मकरोत्। कपयोऽपि तमाक्राम्यन्तः पृष्ठतः पर्यधावन्। एतस्मिन्नवसरे तेनाकर्णितं यत् कश्चित् कथयतीव—"तिष्ठ तिष्ठ न पलायस्व, स्थित्वा तेषां प्रतिरोधं कुरु।" स्वामिनः परावृत्य स्थित्या मर्कटाः पलायिताः। स्वामी महोदयस्तां घटनामुल्लिख्याबोचत्—"Face the brutes. Face nature, face ignorance, illusion. Never fly!" अर्थात् पशूनां प्रत्याक्रमणं विधेहि। प्रकृतेः अज्ञानस्य मायायाश्च वीर इत्राभिरोधमनुतिष्ठ। कदापि न पलायस्व।

काशीतः अयोध्यां पर्यटन्नसौ लक्ष्मणपुरमाजगाम। 'करतलभिक्षा, तरुतलवासः' एवंप्रकारेण निःसंगो भूत्वा व्यचरत्। बुभुक्षया पिपासया च तदीयाः प्राणाः कण्ठगता अभूवन्। परन्तु नासौ स्वसंकल्पात् परिच्युतोऽभवत्। श्रीभगवानपि पदे पदे तेन परीक्षितो बभूव।

आगरायास्ताजमहलमालोक्यासौ विशेषरूपतो मुग्धोऽभवत्। स च प्रोक्तवान्—"एतस्या विशालाया अनुपमस्थापत्यकलाया नास्ति संसारे तुलना। एतस्य क्षुद्रांशस्यापि परीक्षणपूर्वकं निभालनप्रयोजनं भविष्यति। सम्पूर्णमपि 'महलं' समीचीनरीत्या विलोकयितुं न्यूनतोऽपि मासषट्कसमय आवश्यकोऽस्ति।"

वृन्दावनमार्गे प्राचलत्। बुभुक्षा पिपासा च तीव्रे बभूवतुः शरीरं च धूलिधूसरम्। मार्गे ददर्श एको मानवः समुपविष्ट आनन्देन धूम्रं पिबति। तस्यापि धूम्रपाने समीहा समुदियाय, तस्मात् मानवात् धूम्रपानपात्र-याचने ससंकोचमसौ (मानवः) जगाद—'महाराज! अहं श्वपाकोऽस्मि" स तदीयधूम्रपानमकृत्वैवाग्रे ससार। बहुविमर्शानन्तर तस्य मनस्ययं विचारः प्रादुरभवत्—"अहमस्मि संन्यासी। मया सर्वेषु भूतेषु ब्रह्मदर्शकेन भवितव्यम्। इदानीमप्यहं तुच्छजातिपङ्क्तिभेदात् पृथङ् नाभवम्।"

स्वामी परावृत्तः। स मानवस्तदानीमपि धूम्रपानं कुर्वन्नासीत्।

तस्य कस्या अप्यापत्तेरसौ विचारं नाकरोत्। तस्य हस्तान् धूम्रपान-पात्रमादाय धूमं पीत्वा पुनरसौ वृंदावनाभिमुखं प्रतस्थे।*

वृंदावने कालाबाबूकुञ्जे स्वामी तस्थौ। श्रीकृष्णमहिम्नो ज्योतिषा तस्याभ्यन्तरं परिपूर्णमभवत्। तस्य नवीननेत्रे समुन्मीलिते इव जाते। निष्कामजीवकल्याणरूपेण स्वामिनो हृदयं श्रीकृष्णेनाधिकृतम्। स च पूर्णकामो भूत्वापि संसारकल्याणायाक्रान्तः कर्माण्यन्वतिष्ठत्।

गिरिगोवर्धनपरिक्रमाकाले स्वामिना संकल्पः कृतः—अद्य कुतोऽपि भिक्षां न याचिष्ये। श्रीकृष्णस्य राज्ये समागतोऽस्मि, पश्यामि, यदसौ भोजनं प्रयच्छति न वा? यादृशः संकल्पस्तादृशमेव कर्म। प्रहरद्वयमतीतम्। बुभुक्षापिपासात एकतः कातरता, अपरत्र च मुसलधारा वृष्टिः! सः श्रीकृष्णं परिध्यायन् अग्रे जगाम। शरीरस्यावसन्नतया नायमग्रे गन्तुमशक्नोत्। तथापि न कोऽपि भिक्षां याचितः। अग्रे गन्तुमेव प्रावर्त्तत। एतस्मिन् काले समाकर्णितं यत् कोऽपि स्थातुमिव तं पृष्ठतो निर्दिशति। न तत्र तेन अवधानं प्रदत्तम्। स च स्वेच्छया प्राचलत्। क्रमश एको मानवो धावन् तदीयमार्गमवरुध्य तस्थौ। तस्य हस्तयोर्विविधखाद्यपदार्था आसन्। स्वामी आश्चर्यचकितो जातः। तेनावधारितं यत् सर्वेयं भगवतः श्रीकृष्णस्य लीला। आवेगात् तस्य नेत्रयोरश्रूणि प्रावहन्।

---

* स्वामिनो मुखाद् वृत्तान्तममुमाकर्ण्य गिरिशचन्द्रः परिहसन् अवचोत्—"त्वमसि धूम्रपानकर्त्ता। अतो मादकताविवशश्चाण्डालधूम्रपानपात्रमपिबः।" तेन कथितम्—"न गिरिशचन्द्र, सत्यमेव मम स्वीयपरीक्षणसमीहा समुदपद्यत। संन्यासग्रहणानन्तरं पूर्वसंस्कारो दूरीबभूव न वा, जातिवर्णतः पृथगभूवं न वा, एतत्परीक्षां कृत्वा द्रष्टुमैच्छम्। सत्यमवितथं च संन्यासित्वमतिकठिनमास्ते। वचने कार्ये च ईषदप्यन्तरेण न भाव्यम्।"

वृन्दावनस्यैकयाऽपरघटनयाऽपि स्वामिनो मनसि गभीरः प्रभावः पातितः। स राधाकुण्डं प्रापत्। एकमात्रमावरणवस्त्रमेव सम्बलमासीत्। तच्च कुण्डजले प्रक्षाल्य शोषयितुं सूर्यदीधितौ प्रासारयत्, स च स्नानार्थमवातरत्। स्नानानन्तरं तेन दृष्टं यद् वस्त्रं तत् तत्र नास्ति। स्थानं तन्निर्जनमासीत्। अवागसावपश्यत् यदेको वानरस्तस्य वस्त्रमादाय वृक्षस्य समुन्नतशाखायामेकस्यां गत्वोपविष्टोऽस्ति। तस्यान्तःकरण-मसन्तोषेण वेदनया च परिपूर्णमभवत्। बहुविलम्बतः प्रतीक्षयाऽपि न किञ्चित्फलमभूत्। वस्त्रालाभात् तस्य हृदयमतिदुःखितं जातम्, कुण्डस्य चाधिष्ठातृदेवतायां राधायां राज्ञ्यामसौ क्षुब्धो बभूव। एतदीय-राज्ये एतादृशोऽत्याचारः! जनस्थानाभिमुखमगत्वा स वनाभिमुखं प्रचचाल। किञ्चिद् दूरं गतोऽसावश्रृणोत् यत् पृष्ठतः कश्चिदाह्वयतीव। मुखं परिवर्त्य नासौ विलोकितवान्। क्रमशः कण्ठस्वरोऽयं निकटवर्त्ती बभूव। एको मानवः शीघ्रमागत्य तदभिमुखमुपस्थितः। तस्य मनुष्यस्य हस्तयोर्गैरिकं वस्त्रं खाद्यवस्तूनि चासन्। अविलम्बेनैव स्वामिना-ऽवधारितं यदियं राधाराज्ञीलीला विद्यते।

चिन्मयधाम्नो वृन्दावनस्य महत्त्वं तस्याभ्यन्तरे परिपूर्णमभवत्। चिन्मयस्य श्यामस्य चिन्मय्या राधाराज्ञ्याश्चावस्थितिमनुभूय स विशेषमानन्द।* "नित्यो भगवान् नित्यं धाम नित्यो भक्तः।"

---

* स हि पूर्वं श्रीकृष्णं श्रीराधां चैतिहासिकव्यक्तिं नामन्यत। श्रीठाकुरेण सह तेनानेके तर्कवितर्काः कृताः। श्रीकृष्णलीलाया अतिशयकठोरा समालोचना विहिता। श्रीठाकुरेण नरेन्द्रस्य तर्कमाकर्ण्य प्रोक्तम्—"अतिशोभनम्, श्रीकृष्ण-राधास्वीकारस्य नास्ति ते प्रयोजनम्। किन्तु तयोर्भावं ग्रहीतुं शक्नोषि। तयोर्भाव आश्रयणीयस्त्वया।" श्रीठाकुरस्य वचनं सत्यमभूत्। स्वामिना श्रीराधाकृष्णौ केवलं स्वीकृतावेव न हि, प्रत्युत तस्य हृदये भावघनरूपेण तौ प्रविश्य तं विह्वलमकुरुताम्।

वृन्दावनस्यानन्तरं हरिद्वारे व्रजन् स हाथरसे समागतः। धूम्र-यानालयस्य यानस्थाने (प्लैटफार्म) एकत्र कोणे शान्तः समुपविष्टोऽभवत्। बुभुक्षया पिपासया च शरीरमवासीदत्। तदानीमेव धूम्रयानालयोपाध्यक्षस्य (असिस्टेण्ट-स्टेशनमास्टर) शरच्चन्द्रगुप्तस्य दृष्टिः स्वामिन उपरि पपात। स चकित उत्तस्थौ। प्रदीप्तः पावक इव कोऽयं सौम्यः? पश्यन्नेवासौ परिज्ञातवान्; "अहो बत! एतादृशः साधुः कदापि मम न दृष्टिगोचरीभूतः।"

कौतूहलवशात् तेन पृष्टम्—"किं भवतो भोजनमभवत्?" भोजनं नाभूदिति परिज्ञाय विशिष्टयाऽऽन्तरिकतया तेन स्वामी महोदयः स्वगृहमानीतः।

क्रमशः परिचयो घनिष्ठतायां परिणतः। स्वामिना सह यावती घनिष्ठता प्रावर्धत, तावानेवासौ मुग्धो बभूव। स्वामिनो ललाटे भगवता स्वहस्तेनैव राजतिलकोऽङ्कितः। कुत्राप्यसावात्मानं गोपयित्वा रक्षितुं न शशाक। तदीया लावण्यमयी मूर्त्तिः सर्वेषां मनुष्याणां दृष्टिं श्रद्धां चाचकर्ष। परिव्राजकजीवने प्रायः स्वामी दिनत्रयादधिकमेकत्र न न्यवात्सीत्। किन्तु हाथरसे तस्य विविधधर्मप्रसंगं सुमधुरसंगीतं च समाकर्ण्य स्थानीया उच्चपदस्थमानवा एतावदधिकमाकृष्टा यत्ते स्वामिनं कथञ्चिदपि परित्यक्तुं नैच्छन्। सर्वेषामनुरोधेन स्वामिना कियन्तो दिवसास्तत्रैव व्यतियापिताः। दिनानुदिनमधिकाधिकजनास्त-दीयमुखनिर्गतां वाणीं श्रोतुमागच्छन्। अनेन युवकेन संन्यासिना समस्तोऽपि हाथरसो धर्मभावेन मुग्धतां निन्ये।

शरद्बाबूमहाशय * एकस्मिन् दिने शिष्यवद् विनीतो भूत्वा

---

* अयमेवानन्तरं स्वामिसदानन्दरूपेण स्वामिनः प्रथमः संन्यसी शिष्यः संवृत्तः। तेन प्रोक्तं यत् स्वामिनो नयने विशेषरूपेण तमाचकर्षतुः, प्रथम-दर्शनादेव तस्मिन् विशिष्टा श्रद्धा अनुरागश्च प्रादुर्बभूवतुः।

तत्त्वोपदेशमधिगन्तुं तं शरणीकृत्योपाविशत् । स्वामिना गानमेकं श्रावयित्वा तदुत्तरं प्रदत्तम् । गानस्याशयो यथा—

"ज्ञानं यदि लब्धुमिच्छसि, मुखचन्द्रे
भस्म धारय, अन्यथेदानीमिव पन्थानं पश्य ।"

गानस्याशयेन शरद्बाबूमहाशयः सातिशयं प्रभावितोऽभवत् । तेन स्वामिन इङ्गितमवाबुध्यत । त्यागमन्तरेणामृतत्वं न लब्धुं शक्यते । तेन करौ बद्ध्वा प्रोक्तम्—"भवत आदेशेनाहं स्वकीयानसूनपि परित्यक्तुमुद्यतोऽस्मि ।"

कियद्दिनानि यावत् हाथरसवासिनामन्तःकरणेषु आध्यात्मिकं भावमाविर्भाव्यैकदा स्वामिना प्रोक्तं यदसौ द्वितीये दिवसे हृषीकेशं गमिष्यति । अधिकदिनमेकत्र निवासः संन्यासिनां कृते नोचितः । किन्तु शरद्बाबूमहाशयः स्वामिनं परित्यज्य न स्थातुं शक्ष्यति । स च स्वामिनोऽनुगमनाय कृतसंकल्पः स्वीयहृदयसंमीहामव्यंजयत् । स्वामिना तं परीक्षितुमिदमुक्तम्—"किं सत्यमेव त्वं मया सह गन्तुं प्रस्तुतोऽसि ? किमभिमानमहंकारं च परित्यक्ष्यसि ? किं दारिद्र्यमङ्गीकरिष्यसि ?"

शिरो नमयित्वा स्वसम्मतिं व्यंजयन्तं शरद्बाबूमहोदयमसौ प्रोवाच—"ममेदं भिक्षापात्रं गृहाण । द्वारं द्वारं गत्वा भिक्षां गृहीत्वा समागच्छ ।"

धूम्रयानालयाध्यक्षः (स्टेशनमास्टर) निःसंकोचं हस्तौ प्रसार्य भिक्षापात्रमगृह्णात् । स्टेशनस्य भारवाहकेभ्यः (कुली) अन्येषां च गृहेभ्यो भिक्षां ग्रहीतुं प्रवृत्तः ।··· नितरां प्रीतिमापन्नः स्वामी तेन सहागन्तुमाज्ञप्तवान् ।···

तपोभूमिं हृषीकेशमागत्य स्वामी सविशेषमानन्द । साधारणसाधुवदसौ सह शिष्येण भिक्षान्नमाहरन् साधने भजने च कालमत्यवाहयत् । तदानीं हृषीकेशो निबिडारण्यानीपरिवृतः साधनभजना-

नुकूलविविक्तस्थानमासीत्। तस्यान्तःकरणे हिमालयस्य गभीरप्रदेशे केदारनाथवदरीनारायणयोर्दर्शनेहा समुद्भूत्।

तदानीं हृषीकेशजलवायू स्वास्थ्यजनकौ नास्ताम्। मलेरिया-ज्वरस्य प्रबलः प्रभाव आसीत्। एककालभिक्षान्नग्रहणेन उभयोः शरीरे अत्यन्तं क्षीणे दुर्बले च बभूवतुः। एतस्मिन्नेव समये शिष्यः कठिन-रोगेण समाक्रान्तोऽभवत्। स्वामी वैराग्यवानकिञ्चनः संन्यासी आसीत्। शिष्यस्य प्राणरक्षायामसौ विकलो जातः। सेवाशुश्रूषादिभिः शिष्यस्य नीरुजीकरणमेव तस्य चिन्ताविषयोऽभवत्। तदानीन्तनदशां वर्णयन् शरद्बाबूमहाशयः प्रोवाच—"अहं तु रुग्णोऽभवम्।··· स ममोपानत्स-हितसमस्तवस्तूनि निरापदि स्थानेऽतिवाह्य समानयत्।··· तेन सह निवासे मृत्युरपि तुच्छः प्रतीतोऽभूत्।··· तस्य प्रेम्णः स्नेहस्य कथां किं कथयेयम्। स तु प्रेम्णोऽवतार आसीत्।"

स्वामिनः प्रणयेनासौ सर्वकालकृते भृत्यो बभूव। शरद्बाबूसहोद-यस्य गुरुभक्तिरेतादृशी गभीरा आसीत् यदसौ साभिमानमवोचत्—"अहं स्वामिनः सारमेयोऽस्मि।" प्रभुभक्तेः प्रतीकः कुक्कुर एव भवति।···

शिष्यस्य रुग्णतया केदारवदरीदर्शनसंकल्पं परित्यज्य स्वामी किञ्चिद्दिनानन्तरमेव हाथरसं प्रत्याजगाम। पुनः स्वामिनमधिगत्य हाथरसनिवासिनामानन्दस्य सीमा नासीत्। कियद्दिवसानन्तरं स्वामी मलेरियासमाक्रान्तो जातः। शरद्बाबूमहाशयः पुनरपि रुग्णोऽभवत्। दैवयोगेन तदानीमेव काले स्वामिनो गुरुभ्राता स्वामी शिवानन्दो वृन्दावनमार्गेण हाथरसमाययौ। स्वामिनमस्वस्थमवलोक्य वराहनगरमठं प्रतिगमयितुमसावाग्रहमकरोत्। तत्र मठे स्वामिनोऽस्वस्थतासमाचारे प्राप्ते तदीया गुरुभ्रातरः प्रत्यागमनाय तस्मै पत्रं लिखितवन्तः।

दुर्बलेनैव शरीरेण स स्वामिना शिवानन्देन साकं वराहनगराभि-

मुखं प्रतस्थे। विशिष्टेन शोकेनाकुलोऽपि शरद्‌वाबूमहाशयोऽमुं प्रास्थापयत्। परमसौ गुरोर्वियोगं सोढुं न शशाक। अल्पदिवसाभ्यन्तर-मेवासौ स्वकार्यात् त्यागपत्रं प्रदाय वराहनगरमठमुपस्थाय गुरुदेवेनामिलत्। आचार्यशङ्करेण सत्यमेव प्रतिपादितम्—

"क्षणमिह सज्जनसंगतिरेका,
भवति भवार्णवतरणे नौका।"

साधुसंगस्यापारं महत्त्वमास्ते। साधुः स्पर्शमणिरिव भवति, यस्य संस्पर्शतः अयोऽपि सुवर्णायते। शरच्चन्द्रो युवा स्वामिनः संसर्गे समागत्य जीवनस्यानित्यतामवागच्छत्। तस्य मनसि विवेको वैराग्यं चोदयं लेभाते। श्रेयोलाभस्य पन्थास्तेन वृतः। स्वामी एव तदीयजीवन-नौकाकर्णधारो जातः। सर्वत उपरि स्वामिनोऽभ्यन्तरे तेन एतादृशस्यैकस्य अपार्थिवप्रेम्णोऽनुसन्धानमधिगतम्, यस्याकर्षणेन तस्य संसार-बन्धनमत्रुट्यत्।...

वराहनगरमठे स्वामिनं पुनः प्राप्य गुरुभ्रातरो नितरामानन्दुः। तेन भ्रमणकाले या शिक्षा समधिगता, तया स्वकीयान् गुरुसोदरान् सपरिचयानकार्षीत्। देशस्य प्रणयी स्वाधीनतयाश्च ऋत्विक् स्वामी विवेकानन्दो भ्रमणमाध्यमेनावाधारयद् यत् जगतो मङ्गलाय विशेषतो भारतस्य कल्याणाय श्रीरामकृष्णदेवभावधाराप्रचारस्य नितरां प्रयोज-नीयता वर्त्तते। तत्कठिनकार्यसम्पादनदायित्वं तमेव निर्विभर्त्ति। तेन प्रतिपादितम्—"श्रीरामकृष्णदेवप्रभावात् आपातविच्छिन्नं भारतं पुनरेकतां गमिष्यति।" अन्यत्र तेन व्याहृतम् "...श्रीरामकृष्णदेव-चरणसमीपमुपविश्य शिक्षाग्रहणेनैव भारतमुत्थातुं शक्ष्यति, चतुर्दिक्षु तज्जीवनोपदेशप्रचारोऽवश्यं विधेयः, येन हिन्दुसमाजस्य सर्वांशतः प्रत्येकाणुपरमाणुषु उपदेशोऽसावोतप्रोतभावेन परिव्याप्तोऽभवेत्। क इदं कार्यमनुष्ठास्यति? श्रीरामकृष्णदेवस्य पताकामुत्तोलयन् कः

सर्वस्य जगतः समुद्धाराय यात्रां करिष्यति ?... प्रभुर्यं मनोनीतं करिष्यति स एव धन्यः स एव महान् गौरवाधिकारी च विद्यते ।"...

भारतस्य सम्पादितमैक्यमवलम्ब्य समस्तस्य एशियाभूखण्डस्य, ततश्च सम्पूर्णस्यापि भूमण्डलस्यैकत्वसाधनाय श्रीरामकृष्णदेवस्याविर्भावः, तस्य समन्वयपूर्णं जीवनं च वरीवृत्यते । केवलं धर्मक्षेत्र एव न हि, प्रत्युत सामाजिके राष्ट्रिये च क्षेत्रे तदादर्शतो विश्वस्य मानवत्वभ्रातृत्वप्रेमाणि संघटितानि सम्पत्स्यन्ते । केन प्रकारेणैतत्सर्वं सफलं भवितुं शक्ष्यतीत्येष एव स्वामिन एकमात्रचिन्ताविषयोऽभूत् ।

उत्तरभारतस्यैकांशे भ्रमणसमय एव तदभिमुखं प्राचीनस्य, वर्तमानस्य, भविष्यतश्च भारतस्य स्वरूपमुद्भासितमभूत् ।* तथा च तद-

---

* आधुनिकयुगे स्वामी विवेकानन्दः केवलं पूर्वपश्चिमसम्मेलनस्यैव न हि, प्रत्युत भारतस्यातीतवर्त्तमानयोरपि सेतुरिव भविष्यत्पथप्रदर्शको बभूव । भारतीयसंस्कृतेः श्रेष्ठत्वविशिष्टत्वसम्बन्धे तेनानेके वृत्तान्ताः प्रतिपादिताः । तेनेयमपि घोषणा कृता यत् समस्तेऽपि संसारे साम्यमैत्रीसंस्थापनाय भारतीया संस्कृतिरेव श्रेष्ठां भूमिकां ग्रहीष्यति । अतो भारतीयसंस्कृतेर्विशुद्धिसंरक्षणं प्रथमं प्रयोजनम् । आसीदियं तदीया वाणी—"सांस्कृतिकजीवने पूर्णताविधानाय स्वीयां प्रकृतिमनुसृत्य अस्माभिरग्रे सर्तव्यम् । पाश्चात्त्यसमाजप्रचलितकर्मपद्धतेरनुसरणमस्माकं देशे व्यर्थमास्ते । वस्तुतस्तदसम्भवमेव विद्यते ।...

"वयं पाश्चात्त्या भवितुं न शक्नुमः । अतः पाश्चात्त्यजातीनामनुकरणमस्मदर्थं व्यर्थमेव ।...भारतेऽस्माकमग्रगतेर्मार्गे विशाले द्वे बाधे वर्त्तेते—प्राचीनं रूढिवादित्वम् वर्त्तमानयोरोपीयसभ्यतायाः संकटत्वं च । उभयोरहं योरोपीयजीवनधारापेक्षया सनातनरूढिवादितायाः पक्षपाती वर्त्ते । प्राचीनपथप्रवृत्ता अन्धविश्वासिनो मानवाः कुसंस्कारपूर्णाः स्थूलबुद्धयो भवितुमर्हन्ति, परन्तु तेषु मनुष्यत्वमस्ति, विश्वासो विद्यते, आत्मशक्तिर्वर्त्तते—स्वीयचरणबलेनोत्थातुं शक्नुवन्ति । अन्यदिशि योरोपीयादर्शाङ्किता नरास्तु मेरुदण्ड-

भ्रांतदृष्टौ भविष्यद् विश्वमानवताया नवः क्षितिजः प्रतिभासितोऽभूत्। तस्याभ्यन्तरे तद् वैदिकं भारतम्—पौराणिकेतिवृत्तकिंवदन्तीमहिम-मण्डितं देवदेवीनां स्थानम्—द्रविडार्यसभ्यतयोर्मेलनभूमिः, साम्य-मैत्रीस्वाधीनताश्च यदीयसभ्यतायाः मर्मवाणीस्वरूपाः, यच्च आर्य-भारतं प्रागैतिहासिकयुगादेव जातिवर्णभेदमनादृत्य सर्वदेशोत्पन्नेभ्यः सर्वधर्मावलम्बिमानवेभ्यः स्वकीये वक्षसि आश्रयमदात्—तदेव विश्वमानवताया जन्मभूमिस्थानं भारतं जागृतिं गतमिवाभवत्।

---

विहीनाः सन्ति। अत्रोभयत्रापि निस्सन्देहमिदं वक्तुं शक्यते यदाद्या व्यक्तयो वरणीया विद्यन्ते। यतस्तेषां समुन्नतेरस्ति सम्भावना। जातीय-संस्कृतावास्ते तेषां विश्वासः। तस्याः अवलम्बनेन ते जीवितुं शक्ष्यन्ति। परन्तु द्वितीयानां व्यक्तीनां विनाशोऽवश्यम्भावी। आध्यात्मिकतां विसृज्य यदि यूयं जडाश्रयपाश्चात्त्यसभ्यताभिमुखमग्रेसरिष्यथ, तदा तृतीयपुरुषानन्तरमेतज्जाति-विलोपोऽनिवार्य एव। जातीयो मेरुदण्डो भग्नः भविष्यति, तत्प्रासादस्याधारो नंक्ष्यति च, फलतः सामूहिको ध्वंसोऽवश्यम्भावी सम्पत्स्यते।···" सांस्कृतिक-दृष्टिभङ्गिमत्वप्रसारविषये तेनोक्तम्—"भारतं बाह्यसंसारं परित्यज्य न संसर्तु-मर्हति। परमिदानीं यावत् निर्बोधवदस्माभिर्विचारितम् यत् तादृशं भवितुं शक्नोति। अस्माकं सहस्रवर्षव्यापि दासत्वं तस्या बुद्धिहीनताया दण्डस्वरूपं विद्यते। दण्डस्यैतस्य भोगोऽस्माभिः कृतः। अग्रे नैतदनुष्ठेयम्। भारतवासिनो भारताद्बहिर्न गमिष्यन्तीति धारणा नितरां बाल्यविजृम्भिता। यूयं यावदधिकं भारताद् बहिर्गत्वा भूतलनिवासिनीभिर्जातिभिः साकं मिलिष्यथ तावदेवाधिकं युष्माकं देशस्य कल्याणं भविष्यति।···भारतसमुन्नतिबाधकेषु विघ्नेष्वयमप्येको विघ्नो वर्त्तते यदस्माकमियं धारणा वर्तते यद् वयं भूमण्डलस्थाभ्योऽन्यजातिभ्यः श्रेष्ठाः स्मः। स्मर्त्तव्यमेतद् यत् प्रत्येकजातितः शिक्षाग्रहणयोग्या अनेके महत्त्वपूर्णा विषयाः सन्ति। अतोऽस्माभिः सर्वजातिभ्य उत्तमोत्तमगुणानां शिक्षाग्रहणाय सदैव प्रस्तुतैर्भवितव्यम्। अस्माकं श्रेष्ठविधानदाता मनुरवादीत्—"नीचादप्युत्तमा विद्या" ग्राह्या। अतो मनोर्यथार्थवंशधरा इव वयं तदीय-

स्वामिना स्वीया गुरुभ्रातरो निजभावधाराया भागिनो विहिताः। सर्व एव तां भावधारां ग्रहीतुमशक्नुवन् न वेति नास्माभिर्ज्ञायते। वयं स्वामिनं पश्यामो यदसौ बराहनगरे समागत्य साधने भजने च यथा मनो दत्तवान् तथैव वेदान्तभाष्यं पाणिनीयं व्याकरणमष्टाध्यायीं च मनोयोगपूर्वकमध्येतुमारब्धवान्। स च श्रीरामकृष्णजीवनरूप-भाष्यप्रकाशतः सर्वशास्त्रमर्मोद्घाटने प्रावर्त्तत। गुरुभ्रातृभिः सह तेषां सर्वेषां विषयाणां समालोचनाऽबोभूयत। किन्तु श्रीरामकृष्ण-विचारधारां सक्रियां विधातुं तस्यानेकेऽब्दा व्यत्यगुः, बहूनां संघ-र्षाणां संघातानाञ्च अभियानं तेन समनुष्ठितमभूत्।···

तदानीं काले विपरीतभावद्वयद्वन्द्वेन स्वामिनो विवेकानन्दस्यांतर-मान्दोलितं बभूव। भगवतोऽधिगमस्य प्राकृतिकी प्रबला समीहा, पार्थिवं सर्वं विरहय्य आत्मानन्दे निमज्जनमेकम्, द्वितीयं च 'जग-द्धिताय कर्म'—यस्य विशिष्टकार्यस्य कृते श्रीरामकृष्णस्तं स्वपार्षदरूपेण

---

निर्देशमनुसृत्य ऐहलौकिकेषु पारलौकिकेषु च विषयेषु प्रत्येकजातियोग्य-शिक्षकेभ्यः शिक्षाग्रहणाय प्रस्तुताः स्थास्यामः।···"

भारतीयसंस्कृतिप्रचारमहत्त्वसम्बन्धे तस्यायं निर्देशः—अस्माकं जातीय-प्राणशक्तिमुद्बुद्धां तेजोदीप्तां च विधातुमेकमात्रोपायो भारतीयभावधारा-माध्यमेन पृथिव्या विजय एव।···एतस्मिन् प्रसंगे एतद्विस्मृत्यापि कार्यं न चलिष्यति यद् भारतीयामाध्यात्मिकतां द्वारीकृत्यैव संसारे विजयानुष्ठानम्— शब्दैरेतैरहं जीवनप्रदतत्त्वानां प्रचारमवधारयामि।···यस्मिन् दिने धर्मक्षेत्रेऽपि पाश्चात्यदेशवासिनां हस्तेषु नैजमात्मानं समर्प्य भारतदेशवास्तव्यास्तच्चरण-समीपमुपविश्य धर्मं शिक्षितुमीहिष्यन्ते, तस्मिन् दिवस एव अधःपतित-भारतीयानां जातीयवैशिष्ट्यं सदाकालकृते विलुप्तं भविष्यति। मया विश्वस्यते एतद्धर्मानुशीलनेन वेदांतस्य च व्यापकप्रचारेण देशोऽयं पाश्चात्यभूभागा अपि उभये किल लाभवन्तो भविष्यन्ति।" स्वामी महोदयो निजजीवने महा-कार्यस्यैतस्य शुभसूचनां कृत्वा जगाम।

समानिनाय। यद्यपि स्वकीयां मुक्तिवार्त्तां विहाय श्रीरामकृष्णस्याज्ञापालनायासौ प्रतिज्ञाबद्ध आसीत्, तथापि सचेतनभावेन न, किंतु तदीयावचेतने मनसि भगवतो लाभस्याकांक्षा तं न न्यूनं व्याकुलत्वमनयत्। अतो दृश्यते यत् स्वामी विवेकानन्दो जागतिककोलाहलतो दूरे – हिमालयस्य नीरवतायां नैजमात्मानं निमज्जयितुमनेकशश्चेष्टामकार्षीत्। किन्तु श्रीरामकृष्णस्यादृश्या शक्तिर्निर्ममभावेन तमाकृष्य नीचैरवातारयत्। आत्मानुभूतये यावद्वारमसौ हिमालयस्य प्रशांतकाननेऽगच्छत् तावद्वारमेव कठिनरोगसमाक्रांततया कारणान्तरेण वा नीचैरवतर्त्तुं बाध्यो बभूव। एतद्वयं तदीयपरिव्राजकजीवनस्यानेकघटनाभ्यन्तरे पश्यामः।...

बराहनगरमठमागतस्य तस्य मानसिक्या अवस्थायाः पूर्णं चित्रं, १८८९ ईसवीयजुलाईमासचतुर्थतारिकायाः पत्रे लभ्यते—"...ईश्वरीय मङ्गलहस्ततो मम विश्वासो न गतो न वा यास्यति, शास्त्रेभ्यश्चापि मे प्रत्ययो न व्यपगतः, किन्तु भगवतः समीहया पञ्चभिः सप्तभिर्वा वर्षैर्मम जीवनमनेकविधविघ्नबाधासंग्रामेण निरन्तरं परिपूर्णमभवत्। मया शास्त्राणामादर्शः समधिगतः, आदर्शमानवश्च स्वीयनयनाभ्यामवलोकितः, परन्तु पूर्णरूपेण स्वयं किमपि कर्त्तुं न शक्यते। एतदेव दुःखाकरम्। विशेषतश्च कलिकत्तासमीपनिवासेन कश्चित् साध्योपायश्च न विद्यते।.. पारिवारिकीं दुरवस्थामवलोक्य रजोगुणप्राबल्येन अहंकारविकारस्वरूपकार्यकारिण्या वासनायाः समुदयो जायते स्म, तदानीं मनसि भीषणः संघर्षः प्रादुर्भवति।..."

श्रीरामकृष्णो नरेन्द्रनाथं मोहविमुग्धमकार्षीत्। तस्य विचारजगति आमूलपरिवर्त्तनमनुष्ठातुं तं किल शारीरिकमानसिकसांसारिकदुःखकष्टानुभवाभ्यन्तरतः समानेतुं च विशिष्टं प्रयोजनमासीत्। श्रीरामकृष्ण एव विवेकानन्दं विश्वप्रेमिरूपेण संघटितमकरोत्।*

---

* एतस्या घटनायाः सम्बन्धे परवर्तिकाले श्रीमान् अरविन्दः "कर्मयोगिन्"

स्वामी महोदयः शक्तेर्मूर्त्तविग्रहधारी। तस्याभ्यन्तरे एकः पुरुष-सिंहो अवसत्। निष्क्रियतां प्रति तस्मिन् प्रचण्डा घृणा समविद्यत। तेन प्रोक्तम्—"विश्रामो मदर्थं नास्ति। अहं परिश्राम्यन्नेव शरीरं त्यक्तुमिच्छामि। अहं कार्याय स्पृहयामि। जीवनसंग्रामे सर्वदैव विशेषतया अस्माभिः कार्ये संलग्नैर्भवितव्यम्।" भारतीयजीवनस्य वर्तमानावनतिकृतेऽसौ कर्मवैमुख्यमेव कारणमवादीत्। अतो भारतं प्रति इयमासीत् तस्य वाणी—"सर्वतः पूर्वं शक्तिशालितां प्रपद्य पौरुषमालम्बस्व।"

स्वामी महोदयो बराहनगरे स्वीयान् गुरुसोदरान् तेनैव भावेन संघटितान् कर्तुं व्रतमगृह्णात्। ध्यानेन, भजनेन च साकं सेवामूलकं कार्यं स्वाध्यायं च मेलयित्वा स नूतनं संन्यासिसंघमेकमसृजत्।

स्वामी विवेकानन्द आन्तरिकैकांतप्रदेशे विवेकस्याह्वानमाकर्णयितुं प्राभवत्। तेनावाबुध्यत यद् विश्वमपि प्रकम्पयितृ विराट्-कर्त्तव्यं तस्य प्रतीक्षां विधत्ते। तदीयविचाराभ्यन्तरे प्रतिभासिता अभूवन्—नवयुगस्योन्मादना, पाश्चात्त्यसभ्यतायाः सर्वग्रासिनी बुभुक्षा, तत्फल-स्वरूपदुःखवेदना, चतसृभ्यो दिग्भ्यः समुत्थितोत्पीड़ितमानवताया मूकमावेदनम्, भारतस्यातीताभ्युदयस्य तथा भविष्यत्समुत्थानस्य

---

पत्रिकाया १९०९ ईसवीये वर्षे समुल्लिलेख—"यश्च पूर्णो युगप्रवर्त्तकः, अतीतावतारसमष्टिरूप आसीत्, तेन भारतं न दृष्टम्, तत्सम्बन्धे वा किमपि न कृतम्, इति विषये नास्माकं विश्वासः।...स हि भविष्यद्भारतस्य प्रति-निधिं स्वाभिमुखमुपवेश्य संघटितमकरोत्। असौ किल भविष्यद्भारतस्य प्रति-निधिरासीत् स्वामी विवेकानन्दः।... स्वामिनो विवेकानन्दस्य स्वदेशप्रेम तदीयपूज्यपादगुरुदेवस्यैव दानमभूत्। श्रीरामकृष्णेन परिज्ञातमिदं यत् तस्या-भ्यन्तरे यः शक्तिसञ्चारः क्रियते, तदुद्भिन्नप्रकाशेन यथासमयं समस्तोऽपि देशः प्रखरसूर्यकिरणजालेन समावृतो भविष्यति।"

शक्तेश्च समारोहः। तच्च पुनरभ्युत्थानं श्रीरामकृष्णं केन्द्रीकृत्य सम्पत्स्यते। भारतवर्षेण सर्वजनीनकल्याणाय जीवितेन स्थातव्यम्। यतः समस्तविश्वस्य आध्यात्मिक्याः भावधारायाः पुनरुद्दीपनेन सह भारतस्य कल्याणं संहतमास्ते। विश्वकृते एव भारतेन जीवितव्यमस्ति। परन्तु तच्च केन भावेन संघटितं भविष्यतीत्यसौ तदानीमपि काले पूर्णरूपेण न परिज्ञातवानासीत्। ईश्वरस्य निर्देशार्थं स प्रतीक्षामकरोत्।…

पुनः स्वामी इयद्भ्यो दिवसेभ्यो वैद्यनाथ-गाजीपुर-काशी-प्रयागादिस्थानानां दर्शनाय निरगच्छत्। किन्तु तस्य पदे पदे बाधाविघ्नानां साम्मुख्यमभवत्। काचिदेकाऽज्ञातशक्तिः तन्मार्गमवरुध्य इव स्थिता अभवत्। गाजीपुरनिवासकाले भक्तप्रवरसुरेन्द्रनाथमित्रस्य कठिनरोगसमाचारमवगत्य 'स कलिकत्ता-प्रत्यागमन-पूर्वं काशीमायातः। तत्रैव च प्रमदादासमित्रेण सह निवाससमये श्रीठाकुरस्य परमभक्तबलरामबाबूमहोदयस्य कठिनरोगसमाचारं प्राप्य स अविलम्बं कलिकत्तां प्रत्याजगाम। बलरामबाबूमहोदयस्य रोगसमाचारेण स्वामिनं विशेषकातरं दृष्ट्वा प्रमदाबाबूमहाशयस्तमपृच्छत्—"भवान् संन्यासी अस्ति। भवत एतादृशं शोकाकुलत्वं किमुचितमास्ते?"

स्वामी उदतरत्—"भवानेतादृशं कथयति? किमहं संन्यासी भूत्वा हृदयमपि विस्मृतवान्? यथार्थसंन्यासिनः हृदयं साधारणमनुष्यहृदयापेक्षयाऽधिकं कोमलं भवेत्। किमपि स्यात्, वयं मनुष्यास्तु स्म एव, एतद् व्यतिरिक्तम् असौ मम गुरुभ्राता विद्यते। वयमेकगुरोश्चरणसमीपमुपविश्य शिक्षां प्राप्नुवाम। यश्च संन्यासः हृदयं प्रस्तरं कर्तुमुपदिशति, स ममाभिप्रेतो नास्ति।" संन्यासिनो हृदयं तु कुसुमादपि कोमलं भवति।

स्वामी त्वरितमेव कलिकात्तां पराववृते। महायात्रायै प्रस्तुतो बलरामबाबूमहोदयः स्वामिनं प्राप्य मृत्युयंत्रणां व्यस्मरत्। स च श्रीराम-

कृष्णदेवस्य चिन्तायां न्यमज्जत्। तस्य चित्तं एकेनानिर्वचनीयेन आनन्देन आप्लावितमभवत्। स हि स्वामिनं परित्यक्तुं नैच्छत्! यतः श्रीठाकुरः स्वामी च परस्परमभिन्नौ। श्रीरामकृष्णस्य नामानि जपतो बलरामबाबूमहोदयस्य १८९० ईसवीयमईमासस्य १३ तारिकायां देहान्तो बभूव। तस्य च सप्तदिनानन्तरं १८९० ईसवीय मईमासस्य २० तारिकायां सुरेन्द्रनाथमित्र-महोदयोऽपि गुरुपदे व्यलीयत।

सुरेन्द्रनाथः युगावतारश्रीरामकृष्णस्यान्यतमः पोषक आसीत्। एनमेव यन्त्रीकृत्य बराहनगरमठः स्थापितः अभवत्। प्राधान्येन तस्यैवार्थिकसहायतया मठस्य व्ययः प्राचलत्। सुरेन्द्रनाथस्य रुग्णावस्थात एव मठनिवासिनां जीवनं महता कष्टेन प्रचचाल। एकस्यानन्तरं द्वितीयविशिष्ट-भक्तस्य देहत्यागेन तदानीं मठस्य दशा शोचनीयतामगच्छत्।

परन्तु स्वामी कयापि विपत्त्या पराजयस्वीकर्त्ता मनुष्यो नासीत्। अनेकविधं प्रयत्नमनुष्ठाय मठस्यात्यधिकचरमदरिद्रताम् अंशतो दूरीचकार। एतस्य भीषणधनाभावस्य समये संन्यासिनां हृदये वैराग्यतपस्याभावः तीव्रतरो बभूव। श्रीभगवत उपरि निर्भरतया तदीयं चित्तं परिपूर्णमभूत्। एकस्मिन्दिने सर्वैः संकल्पः कृतः—अद्य कोऽपि भिक्षार्थं न गमिष्यति। यस्य नाम्ना गृहं गार्हस्थ्यं च परित्यक्तं स भोजनं दास्यति न वेति द्रक्ष्यामः। आभ्यन्तरिककपाटं पिधाय सर्वे ध्याने समुपविष्टाः। संध्यापर्यन्तं निरन्तरं ध्यानं प्राचलत्, ततः कीर्तनं प्रारब्धम्। कीर्तनस्य भावावेशेन रात्रिं यावत् ताण्डवनृत्यं प्रचलितं बभूव। सर्वे उपवासिनः परन्तु भगवदानन्दे निमग्ना आसन्।

निशीथे कश्चित् बाह्यत आगत्य कपाटस्य कीलकं खट्खटायते स्म। द्वारोद्घाटने दृष्टं यत् गोपालमन्दिरात्प्रचुरप्रसादः समागतोऽस्ति। स्वामी महोदय आनन्देनोत्फुल्लो भवन् रामकृष्णानन्दमुवाच—"गृहाण,

ठाकुराय भोगमर्पय।" भोगस्य निवेदनं कृत्वा सर्वे सानन्दं भगवतो दयाया आलोचनां कुर्वन्तः प्रसादमभक्षयन्। केवलमेकस्मिन्दिने एव न हि, अनेकेषु दिवसेषु एतादृशमेवाभवत्। ते ध्यानजपभजनकीर्तनेषु शास्त्रालोचनायां,च तन्मया भवन्तो भिक्षार्थं नो निर्जग्मुः। किन्तु ते एकस्मिन्न दिनेऽपि. अभुक्त्वा नातिष्ठन। कस्मिन्दिने देवालयतः, अपरत्रायाचितभावेन कस्यचिद्भक्तस्य गृहाद् वा तदर्थं खाद्यपदार्था आयाताः। एतेन भगवति विश्वासः निर्भरत्वं च समधिकमवर्द्धताम्। सुरेन्द्रनाथस्य बलरामबाबूमहोदयस्य च दिवंगतया किमभूत्? यदि श्रीठाकुरस्य समीहया मठः स्थापितोऽस्ति तदा स स्थास्यत्येव। अभवदप्येवमेव। स्वामिनः प्रयत्नैर्मठस्य स्थायित्वं क्रमशो दृढभित्तौ प्रतिष्ठितं बभूव। आशया आनन्देन च सर्वेषां चेतांसि परिव्याप्तानि जातानि।...

———

हिमालयस्याह्वानं स्वामिनं व्याकुलमकरोत्। इदानीं केवलं तीर्थ-भ्रमणसमीहैव नासीत्। स आत्मानं मानवसमाजतः पृथक्कृत्य, सांसारिकसर्वविधदायित्वमुक्तो भवन् हिमालयस्य निर्जनताभ्यन्तरे आत्मानन्दे निमग्नतामैच्छत। तेनैवमप्यनुभूतं यत् आन्तरिकी एका प्रचण्डशक्तिः सक्रियाऽबोभूयत। मठपरित्यागात् पूर्वं तेन संन्यासिनो भ्रातर उक्ताः—"स्पर्शमात्रेण लोकानां चेतांसि परिवर्तयितुं शक्ति-मप्राप्याहं न प्रत्यागमिष्यामि।"

श्रीरामकृष्णस्य स्मृति-पूतं बराहनगरमठं परित्यज्य स अनिर्दिष्ट-कालाय निर्जगाम। किन्तु एतस्या दीर्घयात्रायाः पूर्वमसौ मातुः श्री-सारदादेव्या * आशीर्वादं ग्रहीतुं वेलूड़ग्रामस्यान्तर्गत-'घुसुड़ी'-नामक-स्थानेऽगच्छत्। श्रीमाता तपस्यायै निर्जननिवासार्थञ्च तत्रातिष्ठत्।

प्रणामं कृत्वा स्वामिना प्रोक्तम्—"मातः, अहं तीर्थपर्यटनार्थं हिमालयं गच्छामि। मातः! यावदहं आत्मज्ञाने प्रतिष्ठितो न भवामि न तावत् परावर्तिष्ये।"

---

* श्रीरामकृष्णभक्तसंघनिकटे सा श्रीमाताऽथवा "मां" इति नाम्ना परिचिता वर्तते। श्रीस्वामी श्रीमातरि श्रीठाकुरवत् भक्तिं श्रद्धां चाकरोत्। परन्तु मातरं प्रति तस्याः श्रद्धाया अभ्यन्तरे समधिकं गाम्भीर्यं बभूव। सा केवलं गुरुपत्नी एव नासीत्। यथा श्रीरामकृष्णो नरदेहे भगवानासीत्तथैव श्रीमाता नारीदेहे भगवती। स्वामी श्रीमातुः आशीर्वादस्याधिकं महत्त्वं ददौ। १८९४ ईसवीय-वर्षेऽमेरीकातस्तेन स्वीयो गुरुभ्राता स्वामी शिवानन्दः सूचितः—'.. श्रीश्री-

श्रीमात्रा प्रोक्तम्—"पुत्र, अहं हृदयतः आशिषं ददामि। यत् त्वं सिद्धकामो भूत्वा परावर्तस्व। तवाभ्यन्तरे तु श्रीठाकुरो निवसति।"

श्रीमातुराशीर्वादं शिरसा धारयन्नसीमबलेन बलवान् भूत्वा श्रीस्वामी बराहनगरमठात् निर्जगाम। हिमालय-तिब्बतीय-मार्गोपत्यकासम्बन्धेऽभिज्ञः गङ्गाधरः (स्वामी अखण्डानन्दः) तदीयपथप्रदर्शकरूपेण सहैव प्राचलत्। स्वामी निर्जगाम अमरजीवनास्वादनाय तथाऽभ्यन्तरेऽव्यक्तप्रकाशनाय च। समस्तस्यापि भारतस्य तस्याः तीर्थयात्राया अभ्यन्तरे स्वामिना विवेकानन्देन नूतनमेव जन्म

---

माता किं वस्तु इति इदानीं यावदपि मया नावधारितम्। इदानीं यावत् युष्माभिरपि न परिज्ञातं, क्रमशो ज्ञातुं शक्ष्यते।··· भ्रातरः, नान्यथा मन्तव्यम्। युष्मासु कोऽपि साम्प्रतमपि मातरं नावाबुध्यत। मातृकृपा मम सम्मुखे पितृकृपातो लक्षगुणाधिका।··· भ्रातरः, क्षंतव्योऽस्मि। मया तु स्पष्टवार्ताद्वयं प्रतिपादितम्। अहं तस्या मातुः किंचिदधिकपक्षपाती।··· भ्रातः तारक, अमेरिकाऽऽगमनतः प्राक् आशीर्वादं ग्रहीतुं मया श्रीमातुः निकटे एकं पत्रं लिखितम्। तयाऽऽशीर्वादो दत्तः। अहं त्वरितमेव समुद्रपारमागच्छम्। एतावदेवावधारय।

"···बाबूरामस्य जननी वृद्धतायां बुद्धिहीना बभूव। सा जीवितदुर्गां परित्यज्य मृत्तिकादुर्गायाः पूजां कर्तुमुपविष्टा। भ्रातः, विश्वासो महद्धनमास्ते। जीवितदुर्गायाः पूजां यदि प्रदर्शयिष्यामि, तदैव मम नाम।" स्वामिनः प्रेमानन्दस्य माता प्रतिमायां दुर्गापूजाया आयोजनं कृत्वा श्रीश्रीमातरं तस्यां पूजायामुपस्थित्यर्थं हुगलीमण्डलान्तर्गत-"आँटपुर"-ग्रामे न्यमन्त्रयत्—इमां घटनामुल्लिख्य स्वामिना तस्मिन् पत्रे स्वामिने शिवानन्दाय इयं वार्त्ता समुल्लिखिता।

गृहीतम् । * भारतीयपवित्रधूलिकणाभ्यन्तरतः समुत्पन्नः स्वामी विवेकानन्द एव भारतवासिभिः प्राप्तः, विश्ववासिभिरपि वरणीयश्च बभूव ।

पूर्वं भागलपुरे वैद्यनाथे काश्यां च जगाम । स हि तरुणभास्करः कुत्रापि आत्मगोपनं कर्तुं न शशाक । यत्रागच्छत्तत्र सर्वत्रैव प्राकट्य-मगमत् । यश्च क्षणकालकृतेऽपि तेन सह वार्तामकरोत्, स एव तस्याभ्यन्तरिकमहाशक्तिपरिचयं प्राप्य मुग्धो बभूव । स केवलं परिहितकौपीनः मुण्डितमस्तकः श्रमण एव नासीत्, प्रत्युत स भस्मा-च्छादितः पावकोऽभूत् । यश्च प्रतिभायाः अनलस्तस्य नेत्रयोः प्राज्व-लत्, तमसौ कथमपि गोपायितुं न प्रबभूव ।··· काश्यां प्रमदादास-मित्रमहाशयः स्वामिनं सादरमग्रहीत् । पाण्डित्ये शास्त्रज्ञाने पद-मर्य्यादायां च सः समस्तेऽप्युत्तारप्रदेशे एकः श्रेष्ठपुरुषः आसीत् । प्रमदादासेन सह शास्त्रीयालोचनायां स्वामी सविशेषमाननन्द । आन्तरिकशक्तेरुत्तेजनया एकदैका कठोरवाक् स्वामिनो मुखान्निर्जगाम "अहं गच्छामि । यावदहं समाजस्योपरि बमास्त्रवत् विदीर्य्य न पतिष्यामि, यावच्चानुगतभृत्यवत्समाजं कृतानुशरणं न कारयिष्यामि,

---

* स्वामिनं विवेकानन्दं प्रति श्रद्धांजलिं समर्पयन् श्रीमानरविंदः प्रोवाच—"शक्तिमान् पुरुषः इति कथनयोग्यः यदि कश्चिदस्ति तदाऽसौ स्वामी विवेकानन्द एव । विवेकानन्दः पुरुषसिंह आसीत् । वयमनुभवामः, स्वामिनो विवेकानन्दस्य शक्तिः प्रभावश्च प्रचण्डभावेन कार्यं कुरुतः ।·· ( तदीयजीवनस्य ) यत् किंचिद् महत् सिंहसदृशं वीर्यसम्पन्नं कमनीयं च स्वतः स्फूर्तम् अनुभवोपलब्धम्, उज्जीवकञ्चासीत् तत् सर्वमपि भारतस्यात्मनि प्रविष्टमास्ते । वयं ब्रूमः—दृश्यतामसौ विवेकानन्दः भारतमातुः तत्संतानानामन्तरात्मसु इदानीमपि निवसति ।"—( बंगलामासिकम् ) उद्बोधनम् १३६५ वर्षीयचैत्रसंख्या ।

न तावदहं परावर्तिष्ये।" इयं स्वामिनो दाम्भिकी उक्तिर्नास्ति, तदभ्यन्तरे यस्य ऋषेर्निवासस्तस्यैवेयं कल्याणवाणी।

अयोध्यामुपस्थाय गङ्गाधरेण सह स हिमालयाभिमुखं चचाल—काठगोदामतः नैनीतालस्यालमोड़ायाश्च पथा। पार्श्वे एकं पणमपि नास्ति। कुत्र भोजनम्, कुत्र रात्रियापनम्, कस्यापि किमपि निर्धारणं नासीत्। द्वावपि असीमयात्रापथेऽग्रेसरन्तौ अगच्छताम्। दिनत्रयं दिवसचतुष्टयं वा गमनानन्तरं क्लान्तो भूत्वा स्वामी एकस्य विशालवृक्षस्य निम्नभागे आश्रयमगृह्णात्। पार्श्वे एव वेगवती पर्वतीया नदी वहन्ती गच्छति। नद्याः जले स्नात्वा स्वामी तद्वृक्षतले ध्यानाय समुपविष्टः। स च गम्भीरध्याने मग्नो बभूव। ध्यानमग्न एव स प्रोवाच—"गङ्गाधर! अद्य एतद्वृक्षस्य तले मम जीवनस्यैकः अमूल्यक्षण उपस्थितो वर्तते। एतेन एकस्या महत्या समस्यायाः समाधानमभवत्।"

तेन नान्यत् किमपि प्रोक्तम्। किन्तु तस्य मुखमण्डलेऽनुपमायाः स्वर्गीयायाः आभायास्तथा ब्रह्मानन्दस्य च ज्योतिराविरासीत्। अखण्डानन्दः अनन्तरं स्वामिनो नोटपुस्तिकामुद्घाट्य ददर्श। तत्र लिखितमस्ति—"मयाऽद्य क्षुद्रब्रह्माण्डे विराट्ब्रह्माण्डे चैकात्मकताया अनुभवः कृतः। ब्रह्माण्डे यत्किंचिदस्ति सर्वमेतत्क्षुद्रशरीराभ्यन्तरे वर्तते। मयाऽनुभूतम्—प्रत्येकपरमाणोरभ्यन्तरे विराट् विश्वब्रह्माण्डं विद्यते।*

---

* स्वामिनो नोट-पुस्तिकायामेतदनुभूतिप्रसंगेऽन्यत् यत् किमपि लिखितमासीत्, तस्य अनुवाद एवंविधः—"आदौ शब्दः (शब्दब्रह्म नादो वा) आसीत्।··· क्षुद्रब्रह्मांडम् ( Microcosm ) विराट्ब्रह्माण्डञ्च ( Macrocosm ) एकेनैव नियमेन रचितमास्ते। शरीरेऽस्मिन्यथा व्यष्टिः जीवात्माऽऽच्छादितो वर्तते, तथैव दृश्यमानजगति जड़प्रकृतिं द्वारीकृत्य समाच्छा-

स्वामिनो विवेकानन्दस्य जीवने एकस्य ब्रह्मज्ञानस्य विशेषतः प्रयोजनमासीत्। सर्वोऽपि ब्रह्मप्रकाशः ईश्वरस्यैवांशः—एतस्यामनुभूत्यां प्रतिष्ठितो भूत्वा एवासौ संसारस्यागणितनरनारीणां शिवज्ञानेन सेवां कर्तुमशक्नोत्। तेन प्रतिपादितम्—

"बहुरूपे सम्मुखे तोमार छाड़ि कोथा खुँजिछ ईश्वर।
जीवे प्रेम करे जेइ जन, सेइ जन सेविछे ईश्वर।"

अर्थात्–ईश्वरस्तव सम्मुखेऽनेकरूपेण विराजते। तं परित्यज्य कुत्र त्वम् ईश्वरम् अन्वेषिष्यसि? जीवेषु यः प्रेम करोति स एव यथार्थतः ईश्वरस्य सेवां कुरुते।

प्राणिमात्रस्य सेवैव जगदीश्वरसेवा। तस्य ब्रह्मदृष्टिः केवलं मनुष्येषु सीमिता नासीत्। तदीया करुणा सर्वेषु जीवेषु अतिष्ठत्। अत एव तेन 'जीव-प्रेम्णः' मन्त्रः श्रावितः।

अलमोड़ा-मार्गे स एकस्थाने बुभुक्षापिपासामूर्छितो भूत्वा मार्गस्यैकभागेऽपतत्। स्वामी अखण्डानन्दो निरुपायो भीतश्च बभूव। स धावन् जलान्वेषणे निर्गतः। दैवयोगात् एको माहम्मदीयः साधुस्तेनैव मार्गेणागच्छत्। स्वामिनो मूर्च्छायाः कारणमवगत्य पार्श्ववर्तिकब्रिस्तान-निकटस्थित-स्वपर्णकुटीरतो शीघ्रं गत्वा एकं 'खीरा'-नामफलं समानीय, तं भोजनायार्पयत्। एतेनैव तस्मिन् दिने स्वामिनो

---

दितः समष्ट्यात्मा (हिरण्यगर्भः) वर्तते। शिवः शिवामालिंग्य तिष्ठति इति केवलं कल्पनामात्रं नास्ति। शब्दे तत्-प्रतिपाद्यार्थे च योऽभेदसम्बन्धः स एव सम्बन्धो जीवात्म-परमात्मनोरभ्यन्तरेऽवस्थितो वर्तते। वस्तुत एकस्मिन्नेव वस्तुनि केवलं बुद्धिभेदेन पार्थक्यमनुभूयते। शब्दं विना विचारो न संभवति। अत आदौ केवलं शब्दमात्रमासीत् इति सत्यम्। एकस्य परमात्मन एवंविधभावद्वयेनानुभूतिरनादिकालतो वर्ततेऽतो वयं यत्किञ्चिदनुभवामः, तत् अनादि-साकार-नित्य-निराकार-सम्मिलितं ज्ञानमेवास्ते।"

जीवनस्य रक्षा बभूव। इमां घटनां समुल्लिखता तेनैकदा प्रोक्तम्—"तेन मानवेन सत्यमेव तस्मिन् दिने मम प्राणाः रक्षिताः।···बुभुक्षया एतावान् कातर इतः प्राक् कदापि नाहमभवम्।····"

हिमालयभ्रमणस्य प्रथमोंऽशः स्वामिनः कृतेऽत्यधिकसन्तोषप्रदो बभूव। दीर्घपथ-परिश्रमस्यानाहारस्य चाभ्यन्तरेऽपि चिरतुषार-मण्डिताभ्रभेदिनो हिमालयस्य शान्तं भावगाम्भीर्य्यं तस्य चेतसि अपूर्वमानन्दं शान्तिं च प्रायच्छत्। अलमोड़ोपत्यकायाः मार्गः स्वामिनः अखण्डानन्दस्य परिज्ञात आसीत्। अम्बादत्तस्योद्यानभवने साधूनां महात्मनां कृते समुदारप्रबन्धोऽभूत्। द्वावपि तत्र गत्वा स्थितौ। सारदानन्दः कृपानन्दश्च पूर्वत एवालमोड़ास्थाने आस्ताम्। समाचारमासाद्य तावपि तत्र समुपस्थितौ।

'बद्रीशा-ठुलघरिया'-नामको विशिष्ट एकः पुरुषः अलमोड़ास्थाने आसीत्। बहुवर्षपूर्वं स्वामिना शिवानन्देन सह तस्य परिचयः आलापश्चाभूताम्। स हि श्रीरामकृष्णस्योपरि विशेषश्रद्धासम्पन्नो बभूव। स्वामिनः आगमनसमाचारमाकर्ण्य तं स्वगृहमानेतुमसौ समागच्छत्। सारदानन्दः कृपानन्दश्च उभावपि तस्यैव गृहे स्थित्वा साधनं भजनं च अकुरुताम्। स्वामिनापि तत्र गन्तव्यमभवत्।

चत्वारोऽपि गुरुभ्रातरः सहैव स्थित्वा साधने भजने शास्त्रालोचने च बहून् दिवसान् आनन्देन व्यतियापितवन्तः। तत्रैव सहसा कलिकत्तातः स्वामिनः कनीयस्या भगिन्या आत्महत्यायाः समाचारः तन्त्रीद्वारा प्राप्तः। स बाणविद्धः खग इव व्याकुलीबभूव। ततश्च पत्रेण भगिन्याः शोचनीयमृत्युसम्बन्धे विस्तारितसमाचारमवगत्य स्वामिनो दुःखस्य सीमा नासीत्।

स उन्मत्त इव बभूव। लघीयस्या भगिन्या मृत्युकारणादेव न हि, प्रत्युत प्रेयस्या भगिन्या जीवनं निष्ठुरहिन्दुसमाजवेद्यां बलिरूपेण प्रदत्तमभूत्। भगिनीशोकजनकमृत्युवार्तामवगत्य तदीयं मनः हिन्दु-

समाजस्य हृदयहीनतां प्रति विद्रोहशीलं जातम्। हिन्दुस्त्रीणां दुर्भाग्यस्य वार्त्ता स्मृतिपथमागता। अहो ताः कीदृश्य असहायाः सन्ति! सर्वविधाधिकारवंचिता निपीड़िता दलिताश्च विद्यन्ते, तासां जीवने काचिदुच्चाकाङ्क्षा नास्ति, केवलं सन्तानपोषणयन्त्रस्वरूपा एव सन्ति। सहैव देशपर्यटनसमये दरिद्रपददलित-तथाकथित-निम्न-श्रेणीनां दुःखदशायाश्चित्रं यत्तेन दृष्टं तदपि तस्य मनसि अङ्कित-मभवत्। अन्या अपि बहुविधाः समस्यास्तदीयचेतसि समुदिता बभूवुः। स अत्युन्मत्तो बभूव, निर्लिप्तद्रष्टृवत् निरीक्षणं तदीयस्वभावविरुद्धम्। सः प्रतिकारस्योपायमशोचत्।* समाधौ स्थितेः चिन्ता तदानीं काले निरुद्धा जाता तस्य मनसः एकत्रैकान्ते कोणे।···

---

* भारते नारीजातेः समुन्नतिर्जातीयजीवनसमुन्नत्या सहोतप्रोतभावेन अनुषक्ता विद्यते। विषयेऽत्र स्वामिना विभिन्नस्थानेष्वालोचना कृता वर्तते। "···किं त्वं निजस्त्रीजातिदशासमुन्नतिं कर्तुं शक्नोषि? तदैव तव कल्याणस्याशा कर्तुं शक्यते। मातरः समुन्नता भवेयुः, तदानीमेव तदीयानां योग्यसन्तानानां महती कीर्त्तिर्देशमुखमुज्ज्वलयिष्यति। तदानीमेव च देशे संस्कृतिपराक्रमज्ञान-भक्तीनां पुनरुत्थानं भवितुं शक्ष्यति।··· मनुनापि प्रोक्तम्—'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः, यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः' इति।···नारीभ्यो न्याय्यं सम्मानं दत्त्वैव सर्वा जातयः समुन्नता बभूवुः।··· युष्माकं जातेरेतादृशी या अवनतिः जाता तस्याः प्रधानकारणमेतदेव यत् यूयं शक्तेर्जीवन्तीभ्यो मूर्तिभ्यो यथार्थमर्यादां न प्रदत्तवन्तः। पुरुषा अनेकानि धर्मशास्त्राणि लिखित्वा स्त्रियः विधिनिषेधकठोरबन्धनेषु निगडिताः कृत्वा ताः सन्तानप्रसवयन्त्ररूपाः सम्पादितवन्तः। ताः नितान्तमसहायाः परमुखापे-क्षिण्यश्च विद्यन्ते।

"···वैदिके औपनिषदिके वा युगे एतद् दृश्यते यत् मैत्रेयी-गार्गी-प्रभृतयः पुण्यवत्यः स्त्रियः ब्रह्मवादिन्यो भूत्वा ऋषिस्थानं प्राप्नुवन्।···प्राचीनसमये

स्त्रीजातिसमुन्नतिमन्तरेण जातेरभ्युत्थानमसम्भवम्, अस्मादेव कारणात् श्रीरामकृष्णदेवः सारदादेवीमपूजयत्। भैरवीं ब्राह्मणीञ्च गुरुरूपेणागृह्णात्। वर्तमानयुगकल्याणार्थमेव तदीय-(श्रीरामकृष्णस्य) मातृभावप्रचारो बभूव।

* * *

अलमोड़ायां तस्य मनो नारमत। विशेषतो गृहजनानां तस्य संकेता विदितोऽभवत्। स ततः स्थानान्निर्गतः। गढवालमार्गतः प्राचलत्। सह त्रयो गुरुभ्रातर आसन्। कर्णप्रयागं परित्यज्याग्रेऽगच्छत्। तदानीं काले एकत्र विश्रामस्थानेऽखण्डानन्दः सहसा अस्वस्थतामगच्छत्। तत्र दिनत्रयं स्थितिरभवत्। किंचित्स्वास्थ्यमासाद्य सर्वे मार्गस्याह्वाननाग्रे संचेलुः। तस्मिन् वर्षे सर्वत्र पार्वत्यप्रदेशेऽन्नाभावरूपः अकालः प्रसृतो बभूव। पर्वतीयपुरुषाः वृक्षस्य मूलं पत्रं

—

स्त्रीणां ज्ञानार्जनाधिकार आसीत्। वर्तमानयुगे ताः तदधिकारवञ्चिताः कथं भविष्यन्ति?...

"अवनतियुगे यदा पुरोधसः ब्राह्मणेतरान् वेदपाठानधिकारिणोऽकार्षु-स्तदानीमेव ते स्त्रियोऽपि तादृशसर्वाधिकारवञ्चिताः कृतवन्तः।...अग्निहोत्रवत् वैदिकेष्वन्यकर्मस्वपि गृहस्थस्य सहधर्मिण्याः प्रयोजनमभवत्। परन्तु पौराणिकयुगे प्रचलितशालिग्रामशिलादिगृहदेवतास्पर्शाधिकारोऽपि स्त्रीणां नासीत्।... आर्य्याणां सेमिटिक-जातीयानां च दृष्ट्या नारीणामादर्शः सम्पूर्णतया विपरीतः। 'सेमिटिक'-मते नारीणां साहचर्य्यम् ईश्वरभक्तिकृते हानिकारकमास्ते। अतः कारणात् कुत्रापि धर्मानुष्ठाने नारीणामधिकारो नास्ति। परन्तु आर्यमते स्त्रियो विरहय्य पुरुषाणां किमपि धर्मानुष्ठानं पूर्णाङ्गं न सम्पद्यते।...यथा पक्षी एकेन पक्षेणोड्डयितुं न प्रभवति तथैव स्त्रियं परित्यज्य कापि जातिर्नोत्थातुं शक्नोति—न वा कोऽपि समाजः समुन्नतो भवितुमर्हति।...दक्षिणभारते द्रविडाः सुसभ्या आसन्। तेषु नारीणां स्थानं समुन्नतं बभूव।"

च भक्षयितुमारब्धवन्तः। सर्वकारेण यात्रिणां कृते यात्रामार्गोऽवरुद्धः। स्वामी केदारबद्रीदर्शनस्याशां परित्यज्य रुद्रप्रयागाभिमुखं प्रतस्थे। चतुर्दिक्षु अनिर्वचनीय-सौन्दर्य-सम्भारः विशाला स्तब्धता चासीत्। मध्ये मध्ये गिरिनिर्झरिणीनां कल-कल-निनादः सुमधुरहास्यसंगीतवत् प्रावहत्। चिरतुषार-मण्डित-गिरि-शृङ्गाणां हिमालयस्य चानुपमं रूप-वैभवं स्वामिनो बाल्यकालस्य स्वप्नः सुखविलासश्चासीत्। स च विराड्-ध्याने निमग्नो बभूव।···

रुद्रप्रयागस्यानन्तरं शैत्यपूर्वको ज्वरः स्वामिनः समायातोऽखण्डानन्दोऽपि रुग्णतां गतः। अगत्या एका धर्मशाला सर्वैः समाश्रिता। दैवयोगेन सर्वकार-'सदर-अमीनः' निकट एव वितानं प्रसारितवानासीत्। सारदानन्देन स्वामिनः अस्वस्थताया वृत्तान्ते निवेदिते अमीनेन कानिचित् वैद्यकानि औषधानि दत्तानि। तेनोभयोर्ज्वरो व्यपगतः। सदर-अमीनः स्वामिनो वार्तालापेन विशिष्य प्रसन्नो जातः। तेन दाण्डीसहायेन ते अलकनन्दा-कूले श्रीनगरे प्रेषिताः। किंचित् स्वास्थ्यमवाप्य सर्वे ध्याने भजने च निमग्ना बभूवुः। अवकाशकाले उपनिषदामध्ययनमालोचनं च प्राचलत्।

कियद्दिनानन्तरं स्वामी गुरुभ्रातॄन् गृहीत्वा टेहरीजनपदाभिमुखं प्रतस्थे। पार्वत्यप्रदेशेषु दुर्भिक्षं प्रसृतमासीत्। कुत्रापि भिक्षा न लभ्यते स्म। अनाहारेण मृतप्रायावस्थायां वर्तमानाः सर्वे शनैः शनैः गढ़वालस्य राजधानीं टेहरीमुपतस्थुः। एकत्रानुकूले कुटीरे सर्वे न्यवात्सुः। यत् किंचिद् भिक्षान्नम् अलभ्यत तेन स्वामी तृप्तो भवन् निःसंगताया आनन्दे रात्रिंदिवममज्जत्। कदाचित्तु स वेदान्तस्य आर्य्यमहर्षीणां जीवनस्य चालोचनामकरोत्। स च जगाद—"अस्माभिरार्य्यमहर्षिभिः भवितव्यम्। ऋषित्वपदवीमारूढैर्भाव्यम्।"

घटनाचक्रतः राज्यदीवानरघुनाथभट्टाचार्येण महाशयेन सह स्वामिनः परिचयो जातः। स हि पंडितप्रवर-हरप्रसादशास्त्रिणो

ज्येष्ठो भ्राताऽऽसीत्। परिचयः क्रमेण घनिष्ठमित्रतायां परिणतः। तस्य गम्भीरं पाण्डित्यं शास्त्रानुभूतिः, त्यागो वैराग्यं च दीव्रानमहोदयं विशेषरूपेण प्रभावितमकार्षुः। तेन दृष्टं यदयं साधारणसाधुरिव नास्ति।

स स्वेच्छया गङ्गा-भिलाङ्गना-सङ्गमस्थले गणेशप्रयागे तेषां साधन-भजन-व्यवस्थां कर्तुमैच्छत्। यात्रायाः पूर्णः प्रबन्धो जातः। तदानीमेव स्वामी अखण्डानन्दः पुना रुग्णतां गतः। टेहरीस्थानस्य सिविलसर्जनः रोगिणो वक्षःस्थलं परीक्ष्य जगाद—"ब्रांकाइटिस-नामक-रोगो जातः, पर्वते निवासः कदाप्युचितो नास्ति। समतलप्रदेशे चिकित्सा कारयितव्या।"

गुरुभ्रातुः प्राणरक्षायै स्वामी हिमालयस्य निर्जनतां परित्यज्य 'मुसौरीम्' 'राजपुर'ञ्च समुपस्थाय देहरादूनमागच्छत्। राजपुरस्य मार्गे सहसैव स्वामिनो तुरीयानन्देन सह साक्षात्कारो जातः। सोऽपि स्वामिना सार्धं चलितः। रघुनाथभट्टाचार्यः देहरादून-सिविलसर्जनमुद्दिश्य एकं परिचयपत्रमलिखत्। अल्पीयसैव वार्त्तालापेन सिविलसर्जनः स्वामिनो मुखात् धर्म-दर्शनबाइबिलादीनां व्याख्यामाकर्ण्य सविशेषमानन्द।

सिविलसर्जन-चिकित्सया किंचित् स्वस्थीभूतमखण्डानन्दं कृपानन्देन सह 'इलाहाबाद'-स्थितस्यैकस्य मित्रस्य भवने प्रेषयितुं प्रबन्धं विधाय स्वामी अन्यान्यगुरुभ्रातृभिः सह हृषीकेशमाजगाम।

प्राचीनकाले तत् किल ऋषीणां मुनीनां च तपस्यायाः स्थानमासीत्। हिमालयस्य उपत्यकां परिवेष्ट्य निर्जनं वनमासीत्, पवित्रगङ्गायाः कलध्वनिरपि अश्रूयत। भिक्षाया उपरि निर्भरा भूत्वा स्वामिना सह ते सर्वे कठोरतपस्यायां न्यमज्जन्। अवसरे च ब्रह्मसूत्रस्योपनिषदां गीतादिशास्त्राणाञ्चालोचनाऽक्रियत। रात्रेः गम्भीरतयैव सह ध्यानस्यापि गाम्भीर्य्यमवर्धत। स्वामी महत्यानन्दे निमग्नो बभूव। परन्तु विधि-

विडम्बनयाऽल्पदिनैरेव प्रबलज्वरेण स्वामी समाक्रान्तोऽभवत्। नासीत् कश्चिदुपायः। कस्याप्यौषधस्य पथ्यस्य च प्रबन्धसंभवो न बभूव। गुरुभ्रातरः किंकर्त्तव्यविमूढतामभजन्। एकस्मिन् दिने ज्वरस्य प्रबलकोपेन स्वामी लुप्तचेतनो जातः, शरीरं शीतलतां गतम्। धमनी नालभ्यत। अन्तिमसमयमुपस्थितमवगत्य गुरुभ्रातरः शोक-व्याकुलाः अभूवन्। स्वामी एव तेषां बलस्यालम्बस्य च स्थानमासीत्। श्रीठाकुरस्यादर्शनानन्तरं तमेव समाश्रित्य सर्वे जग्मुः। अनन्यमनसस्ते भगवतश्चरणेषु स्वामिनः प्राणभिक्षां ययाचिरे। इदानीमेव काले देवप्रेरित इव कुटीद्वारे एकः अज्ञातसाधुः समागत्योपस्थितः। तेन स्वझोलिकामध्यादेकमौषधं निःसार्य्य तच्च मधुना संघृष्य स्वामिनो भक्षणार्थं दत्तम्। केनापि प्रकारेण तदौषधं स्वामिनो मुखे निक्षिप्तम्। आश्चर्यम्। अल्पैरेव क्षणैरस्य शरीरे प्रचुरः स्वेदः समुत्पन्नः, ज्वरश्च व्यपगतः। क्रमशस्तेन नेत्रे उन्मीलिते, ततश्च शीर्णस्वरेण तेन प्रति-पादितम् यत् तस्यामचेतनावस्थायां तेन एका अपूर्वा अतीन्द्रियाऽनुभूतिः प्राप्ता। तेनावधारितं यत् साम्प्रतं मृत्युर्न भविष्यति। तेन श्रीभगवतो विशेषकार्याणां सम्पादनं कर्त्तव्यमास्ते। अत एव कारणादसौ मृत्यु-मुखान्निर्गतः। तां भविष्यद्वाणीमाकर्ण्य गुरुभ्रातृभिः कथंचित् सान्त्वना समधिगता। तेऽपि शनैः शनैः स्वस्था बभूवुः। हृषीकेशस्य जलवायू तदानीं कालेऽस्वास्थ्यकरावास्ताम्। अतः कारणात् स्वामी दुर्बलेनैव शरीरेण हरिद्वारमानीतः। स्वामी ब्रह्मानन्दः हरिद्वारस्य समीपे कनखले तपस्यां कुर्वन् आसीत्। संवादमाकर्ण्य सोऽपि समागत्य स्वामिना सम्मिलितोऽभवत्। ततः स्थानात् स्वामी गुरुभ्रातृनादाय सहारनपुरे आजगाम—पूर्वपरिचित-वकील-बङ्क-बाबू-भवने।

तदानीं काले स्वामिनः शरीरमतिदुर्बलमासीत्। अखण्डानन्द एषु दिवसेषु मेरठमागत्य किंचित्स्वास्थ्यमध्यगच्छत्। तेषां विशेषाग्रहेण स्वामी

गुरुभ्रातॄनपि मेरठमानिनाय। स्थानीय-डाक्टर-त्रैलोक्यनाथघोषो यज्ञेश्वरमुखोपाध्यायश्च * स्वामिनः तद्गुरुभ्रातॄणां च सादरं स्वागतं चक्रतुः।

मेरठे श्रेष्ठिन उद्यानं बराहनगरमठे परिणतमिव जातम्।

---

* अनन्तरं स एव 'भारतधर्ममहामण्डलस्य' प्रतिष्ठाता स्वामी ज्ञानानन्दो बभूव।

स्वामी महोदयो निजान् षट् गुरुसोदरान् (ब्रह्मानन्दम्, सारदानन्दम्, तुरीयानन्दम्, अद्वैतानन्दम्, अखण्डानन्दम्, कृपानन्दम् च) गृहीत्वा श्रेष्ठिन उद्याने न्यवसत्। स्थानीया अनेके विशिष्टपुरुषा धर्मालोचनामाकर्णयितुं प्रतिदिनं तस्य सन्निधाने समायाताः। तदानीं काले तस्याभ्यन्तरे एकस्या विपुलाध्यात्मिकशक्तेर्विकाशमवलोक्य तस्य गुरुभ्रातरो विस्मिताः बभूवुः। सा शक्तिर्निर्गमनमार्गमन्वेष्टुमिवैच्छत्।

ध्यानभंगस्यावकाशे गुरुभ्रातृभिः सह "मृच्छकटिक"—"अभिज्ञानशाकुन्तल"— "कुमारसम्भव"—"मेघदूतादि"--संस्कृतग्रंथानामालोचनामकरोत्; पुराणपाठश्चापि प्राचलत्। स्थानीयवाचनालयाध्यक्षेण अखण्डानन्दस्य परिचयो जातः। स च ग्रन्थागारात् स्वामिनः कृते अनेकानि पुस्तकानि दत्तवान्। तदानीं काले स्वामिनो हृदये ज्ञान-स्पृहा एतावद् वर्धिता ययासौ पूर्णरूपेण पपाठ।

स्वामिनः अखण्डानन्दस्य हस्ते प्रसिद्धस्य अँग्रेज लेखकस्य सरजॉनलावकस्य ग्रन्थं विलोक्य नितरां प्रसन्नोऽसावपृच्छत् "पुस्तकमिदं त्वया कुतो लब्धम्?"

"पुस्तकालयात् आनीतवानस्मि।" "...साधु कृतम्" इत्युक्त्वा तेन पुस्तकं हस्ते गृहीतम्। द्वितीयदिवसे तत्पुस्तकं प्रत्यर्प्य तेन कथितम्—"इदं प्रत्यर्प्य लावकस्य द्वितीयं पुस्तकं यदि भवेत् तदा आनेतव्यम्।"

अखण्डानन्दः प्रतिदिनमेकं पुस्तकमानयत्। स्वामी तदधीत्य द्वितीये दिवसे तत् प्रत्यर्पयति। एवंप्रकारेण लावकस्य सर्वाण्यपि पुस्तकानि तेनाधीतानि। लावकस्यैकस्य पुस्तकस्य प्रतिदिनं नयनं द्वितीयदिने च प्रत्यर्पणं दृष्ट्वा वाचनालयाध्यक्षस्य कौतूहलं जातम्। तेन पृष्टम्—"कोऽस्ति वृत्तान्तः, भवान् प्रतिदिनं पुस्तकं गृह्णाति, द्वितीयदिने तत्प्रत्यर्पयति। एतानि पुस्तकानि किमर्थं गृह्णासि ?"

अखण्डानन्देन सोत्साहमुत्तरं दत्तम्—"स्वामिनः कृते पुस्तकानि गृह्णामि, सः पठति।"

अध्यक्षः सपरिहासमवोचत्—किमेतदसम्भवमेकस्मिन्दिने लावकस्य एकपुस्तकस्याध्ययनम्! अखण्डानन्दस्य मुखेन एतादृशीं वार्त्तामाकर्ण्य स्वामी स्वयमध्यक्षं साक्षात्कर्तुमगच्छत्। एकस्या द्वितीयस्या वा वार्त्ताया आलापानन्तरं प्रहसता तेन प्रत्युक्तम्—'मया तानि पुस्तकानि सम्यक् पठितानि। भवान् इच्छति चेत् पृष्ट्वा द्रष्टुं शक्ष्यति।"

अध्यक्षस्य कुतूहलं जातम्। स च विभिन्नग्रन्थेभ्यः स्वामिनः प्रश्नमकरोत्। प्रत्येकप्रश्नस्य यथार्थमुत्तरमेव न हि, प्रत्युत लावकस्य भाषामपि उद्धृतां कुर्वन्तं स्वामिनं विलोक्य अध्यक्षमहोदय आश्चर्यान्वितो बभूव। तदीयमुखाकृतिर्मलिनतामभजत्।

स्वामी प्रोवाच—"अहं बालकवत् शब्देषु पंक्तिषु दृष्टिं दत्त्वा नापठम्। एकमनुच्छेदं सहैव पठामि। एकपृष्ठस्य आरम्भस्यैकां पंक्तिं पठित्वैव लेखकस्य वक्तव्यमवधारयितुं शक्यते।"...

मासत्रयाधिककालं स्वामी गुरुभ्रातृभिः सह मेरठनामकनगरे आसीत्। एतत् समयाभ्यन्तरे गुरुसोदराणामाध्यात्मिकजीवनं यथा समृद्धमभवत्, तथैव स्थानीयाः अनेकव्यक्तयः अपि स्वामिनः संसर्गेण धर्मालोकलाभपूर्वकं धन्या बभूवुः। तासामभ्यन्तरे धनिनो निर्धनाः, पंडितमूर्खाः,—समाजस्य सर्वस्तरीयमनुष्या आसन्।

स्वामी अभ्यन्तरे एकस्या महाशक्तेः स्फुरणस्यानुभवं चकार। तेन जीवनस्य महत्तर-कर्त्तव्य-संधानमपि प्राप्तम्। संकल्पे दृढो भूत्वा स एकस्मिन् दिने गुरुबन्धून् आहूय प्रोवाच,—"मम जीवनस्य व्रतं स्थिरमभूत्।···अधुना मया निःसंगेन भूत्वा स्थातव्यम्। युष्माभिः मम संगस्त्यज्यताम्।···गुरुभ्रातृभिः सह निवासोऽपि एकप्रकारेण मायायाः बन्धनरूप एव। सर्वबन्धनमुक्तो भूत्वाऽहं एकाकी भ्रमणं कर्तुमिच्छामि।··मया सह केवलं भगवान् एव स्थास्यति।"···

गुरुबन्धूनां कोऽप्यनुरोधस्तेन नाकर्णितः। १८९१ ईसवीयजनवरी-मासस्यान्तिमभागे स एकाकी निर्जगाम—भारतस्य अगणितमानव-समुद्रेषु स सम्मिलितो बभूव। असंख्य-संन्यासिन इव सोऽप्येको गैरिकवस्त्रधारी संन्यासी एव आसीत्।···

वर्षद्वयादप्यधिक-कालं यावदसौ एकाकी भ्रमणमकरोत्। *

भारतस्य धूलिषु तदीयानि पदचिह्नानि विलीनतां प्रापुः, कदापि ग्रामे, कदापि पत्तने, कदापि च धनिनो भवने, कदाचिच्च निर्धन-कुटीरे, कदापि वृक्षस्य तले, देव-मन्दिरे चासौ न्यवात्सीत्। कदापि वर्ण-श्रेष्ठस्य ब्राह्मणस्य सम्मानितोऽतिथिः, पुनः अस्पृश्यान् धन्यान् विधातुं तेषां सुखदुःखयोर्भागी चाभवत्। राज्ञां महाराजानाञ्च सौधेषु

---

* श्रीमदाचार्यशङ्करेणापि स्वकीये 'विवेकचूड़ामणि'ग्रंथे ब्रह्मज्ञपुरुषस्य दिनचर्या एवमेव वर्णिता आस्ते—

चिन्ताशून्यमदैन्यभैक्ष्यमशनं, पानं सरिद्वारिषु
स्वातन्त्र्येण निरंकुशा स्थितिरभीर्निद्रा श्मशाने वने।
वस्त्रं क्षालनशोषणादिरहितं दिग्वास्तु शय्या मही
सञ्चारो निगमान्तवीथिषु विदां क्रीडा परे ब्रह्मणि ॥१॥
विमानमालम्ब्य शरीरमेतद्
भुनक्त्यशेषान्विषयानुपस्थितान्।

माननीयो गुरुरूपः संन्यासी उच्चासने उपाविशत्, राजानो महाराजाश्च तस्य पादसेवामकुर्वन्। स च तेषां भोगविलासशीलचित्तेषु ज्ञानाग्निवर्तिकां प्राज्वालयत्—संसारस्य चानित्यताया बोधं कारयित्वा भूमानन्दप्रतिष्ठितेराकांक्षामुदपादयत्। तेषां सुप्तहृदयेषु जनसेवाचेतनामुद्बुद्धामकार्षीत्। पुनः वयं तम् आर्तनिपीडितमित्ररूपेण पश्यामः प्राप्नुमश्च स्वयंवेदनाविधुरचेतसा तदीयसेवाव्रतिरूपेण च।

दिनानुदिनं महाभारतस्य यथार्थरूपं तदन्तरे समुद्भासितमभवत्। तेन दृष्टं, मानवाभ्यन्तरे जीवात्मानः कथमिव विक्षुब्धाः क्लिष्टाश्च बोभूयन्ते। भारतस्य जनसाधारणानां करुण आर्त्तनादः तदीयं हृदयं आलोडितमकरोत्। अहो कथमेतेऽसहायाः सन्ति।

मेरठं परित्यज्य स्वामी दिल्लीमागतः। दिल्लीस्मृत्या सह अनेकेषाम् उत्थानपतनानामितिहासः संमिलितो वर्तते। विविदिषानन्दनाम्ना स कतिचिद्दिनानि भ्राम्यन् सर्वस्थानानि ददर्श। प्राचीनैतिह्याभ्यन्तरे स न्यमज्जत्। कियद्दिनानि यावत् श्यामदासश्रेष्ठिन उद्याने न्यवसत्। अनेके मानवास्तस्य समीपे आगच्छन्। चतुर्दिक्षु समाचारोऽयं प्रसृतोऽभवत्, यत् महापण्डितः, अंग्रेजीभाषाभिज्ञः, साधुरेकः समागतोऽस्ति। येन सह स वार्तां करोति तमेव मुग्धीकरोति। तस्यागाध-पांडित्येन गम्भीरज्ञानेन च सर्वे स्तंभिता भवन्ति।

---

परेच्छया बालवदात्मवेत्ता
योऽव्यक्तलिङ्गोऽननुषक्तबाह्यः ॥
दिगम्बरो वापि च साम्बरो वा
त्वगम्बरो वापि चिदम्बरस्थः ।
उन्मत्तवद्वापि च बालवद्वा
पिशाचवद्वापि चरत्यवन्याम् ॥

स्वामिनः अखंडानन्दप्रभृतयः केचित् गुरुभ्रातरस्तस्य पृष्ठत एव दिल्लीमाजग्मुः। स्वामी तान् विलोक्य असन्तोषं प्रकटयन्नुवाच—"यूयमत्रापि समागताः"—पुनरपि ते सर्वे सहैव किञ्चिद्दिनानि तस्थुः। परन्तु स स्वाभ्यन्तरे एकस्या महाशक्तेराह्वानमाकर्णयामास। निःसंग-निरंकुश-गंडकवत् एकाकि-विचरणसमीहा तम् अज्ञातपथे समानयत्। भविष्यद्-विवेकानन्दस्य प्रस्तुतीकरणे तस्य विशेषप्रयोजनमासीत्।

गुरुभ्रातरस्तेन उक्ताः—"यूयम् ध्याने भजने च निमग्ना भवत। व्यर्थं मया सह युष्माभिर्नागन्तव्यम्। एकाकिनं मां परित्यजत। ममान्तरम् एतदेवेच्छति। अहम् यथार्थतः भारतेन सह परिचितो भवितुमिच्छामि। विवेकस्याह्वानं मया श्रूयते।"

१८९१ ईसवीयफरवरीमासस्यान्ते स एकाकी राजस्थानस्य मार्गे निर्जगाम। तदनन्तरं वर्षद्वयतोऽप्यधिकं भारतभ्रमणं प्राचलत्। स चाज्ञातसंन्यासिरूपेणैकाकी आसीत्। न तस्यासीत् परिचयः, न वा किञ्चिन्निवासस्थानमेव, केवलमसौ एको मानवरूप आसीत्। तत्रापि केवलं भारतवासी। परन्तु स आत्मगोपनं कर्तुं न प्रबभूव। यत्रासौ गच्छति विद्वत्सु निष्कपटेषु मूर्खेषु—सर्वैरेवासाधारणव्यक्तिरूपेणासौ पर्यचीयत। ग्राम-नगराणाम्, उच्चनीचानां, धनिकदरिद्राणां, रुग्ण-वंचितानां, सर्वविधव्यक्तीनां दुःखेन वेदनयाऽऽशयाऽऽकाङ्क्षयोत्ते-जनया, सुखेन दुःखेन साकमसावेकत्वमभजत्। सर्वत्रैव स्वस्यान्तरिक-देवताया संधानमलभत। शतशो मन्दिरेषु विभिन्ननामरूपेषु—पुनश्च मानवजातिः नामरूप-विहीनत्वेन यं भगवन्तं समर्चयति, तं भगवन्त-मसौ साधौ, चौरे, ब्राह्मणे, चाण्डाले धनिनि, दरिद्रे, पूजके ब्रह्मचारिणि, मद्यपायिनि च प्राप्नोत्। तेन सर्वे पूजिताः। स च सर्वेषां जीवनेन सार्धं मिलित्वैको जातः। सर्वत उपरि वेदना-क्लिष्ट-मानवानां करुण आर्त्तनादः तदभ्यन्तरे प्रतिध्वनिताऽभूत्।

भ्रमणदिनान्यमूनि तदर्थं समुचित-शिक्षा-दायकान्यभूवन्। केवल-मयं शिक्षा-ग्रहणमकार्षीत्—ग्रहणं तस्य प्रचुरमभवत्।··· जलाभ्यन्तर-चारी मानव इव भारतमहादेशस्य रत्नानामाहरणमकार्षीत्। धर्मभूमि-भारतस्य याश्चिन्ताधाराश्चतुर्दिक्षु प्रसृता अभूवन्, तेन सर्वासां संग्रहः कृतः। स च सर्वेषु धर्मेषु शाश्वतमैक्यं प्रापत्। विभिन्नधर्माणां मूलोद्-गमस्थानसंधानमप्यध्यगच्छत्। समाजस्रोतसः कर्दमाक्त-दशायामपि तेन वेदनायुक्तहृदयेनावधानं प्रदत्तम्। तच्चावरुद्धस्रोतः गतिशीलं निर्मलं कर्तुमुपायश्चापि तदीय-हृदये रूपायितोऽभवत्। विशिष्य च देशवासिनां दरिद्रताऽज्ञानता च तदीयं हृदयं व्याकुलमकुरुताम्। श्रीरामकृष्णदेवो व्याहरत्—'रिक्तोदरस्य धर्मो न भवति।' एतद् वृत्तान्तस्य सत्यता तेन स्वान्तःकरणेनानुभूता। तत्-प्रतिकार-चिन्तया तस्य चेतसि पावकः प्रज्वलितः। दिने रात्रौ वा कदाप्यसौ तया चिंतया आत्मानं मुक्तं नाकार्षीत्। किमधिकं, निद्रायाः समयेऽपि ताश्चिन्ता-स्तस्य मनसि जागृता अभूवन्।

* * *

एतस्यानन्तरं वयं स्वामिनं राजस्थानस्य मार्गेषु एकाकिनं भ्रमन्तं प्राप्स्यामः। फरवरीमासस्यान्ते सः अलवरमागच्छत्। वृक्षच्छाया-युक्तेन राजपथेन भ्राम्यन्नसौ राजकीयचिकित्सालयस्य पुरतः समाज-गाम। एको मानवस्तेन पृष्टः—"महाशय, अत्र साधुसंन्यासिनां निवासस्यास्ति किंचित्स्थानम्?" यः पृष्टः स राजकीयचिकित्सालयस्य वंगीयो डाक्टर आसीत्। स च साग्रहं स्वामिनं स्वगृहमनयत्। ईषत्कालस्य वार्त्तालापेनैव स अवागच्छत्, यदयं साधारण-साधुर्नास्ति। स स्वकीयान् परिचितान् स्वामिनः समीपमानीतवान्। यः वार्त्तां करोति स एव मुग्धो भवति। कतिचिद्दिनाभ्यन्तर एव चतुर्दिक्षु कोला-हलो जातः। सदललोका समागच्छन्। एषु शिक्षिता अशिक्षिताः, सभ्या असभ्याः वृद्धा युवका हिन्दवो माहम्मदाश्च सर्व एवासन्।

निखिला एव तस्य धर्मोपदेशमाकर्ण्य परितृप्ता अभूवन्। कदाचिदसौ हृदयावेगेन उर्दूबंगलाहिन्दीभाषापद्यानि साधकानां पदावलीञ्च सुमधुरकण्ठेनागायत्। कदाचिच्च गीतोपनिषत्पुराणकुरानादीनां व्याख्यामकरोत्। प्राचीनानामार्य्यमहर्षीणां चरित्रकीर्त्तनं, बुद्ध-शंकर-कबीर-साधुतुलसीदास-नानक-दादू-चैतन्यरामकृष्णादीनां महाजनानां जीवन-सम्बन्धि-विविधघटनाः शास्त्रालोकतः समुद्भासिताः कुर्वन् अतिसहजरीत्यावागमयत्। प्रातःकालादारभ्य रात्रिं यावत् विभिन्न-श्रेणीनां मानवानां समागमेन डाक्टरमहोदयस्य गृहं तीर्थस्थानरूपेण पर्यणमत्। बहवो मनुष्यास्तं स्वगृहमानीय आलोचना-सभाया आयोजनमकार्षुः।

किंचिद्दिनाभ्यन्तर एव सर्वशास्त्रज्ञस्य तस्यापूर्वस्य संन्यासिनः समाचारः दीवान-मेजर-रामचंद्रस्य कर्णयोः प्रापत्। स च सम्मान-पूर्वकं स्वामिनं स्वगृहमानयत्। स यथा यथा वार्त्तालापं कुरुते स्म तथा तथाऽधिकतरं विस्मितोऽभवत्। एतादृशं पाण्डित्यं, भूयोदर्शनं, तेजस्विता, सर्वस्वपरित्यागश्चेत्यादि तदीयं सर्वमद्भुतम् आसीत्। एतं संन्यासिनं द्वारीकृत्य संभवतः महाराजस्य जीवनेऽपि परिवर्तनाधानं शक्यते—इदं दीवानमहोदयेन आलोचितम्।

महाराजो मङ्गलसिंहः सम्पूर्णरूपेण साहबः आसीत्,—मृगया-यामेव व्यापृतोऽतिष्ठत्, राज्यकार्यं किमपि नापश्यत्। महाराजस्य सन्निधाने समाचारोऽगच्छत्—"एको विख्यातः साधुः समागतोऽस्ति, अतिसुन्दरांग्लभाषां वदति, शास्त्रज्ञानमपि तत्रासाधारणमास्ते, पाश्चात्त्यदर्शनान्यपि कण्ठस्थानि सन्ति। परमसौ महान् त्यागी वर्तते।"

कुतूहलवशात् महाराजः तं साधुं द्रष्टुमागतः। सार्धञ्च तेनानेके उच्चपदस्था राज्यकर्मचारिण आसन्। ईषद्वार्त्तालापानन्तरं महाराजः अपृच्छत्—"श्रूयते भवान् परमविद्वान् वर्तते, यदि वांछति तदा

यथेष्टं धनमर्जितुं शक्नोति। एवं नानुष्ठाय भिक्षां याचमानः कथं भ्राम्यति भवान् ?"

स्वामी गंभीरभावेनोत्तरमदात्—"भवाँस्तु देशस्य राजा वर्तते, राज्यकर्म समुपेक्षमाणः साहबैः साकं मृगयां कुर्वन् कथं भ्राम्यति ?"

राज्यकर्मचारिणां मनसि भयमुदियाय। महाराजोऽपि स्तब्धो जातः। केभ्यश्चित् क्षणेभ्यः अनन्तरं स्वशिरो नमयन्नेवासावुत्तरमदात्—"कथं भ्रमामि, तत् साधु वक्तुं न शक्नोमि। आम्, तत् मह्यं रोचतेऽत एव मृगयायां क्रीडामि।" स्वामी विहसन्नुवाच "यथा मनोरुचिकरत्वात् भवान् मृगयां करोति, तथैव मनोनुकूलत्वादहमपि संन्यासी संवृत्तः।" श्रुत्वेदं महाराजो मौनी बभूव। कस्यचित् क्षणस्यानन्तरमसौ पप्रच्छ—"अत्रत्याः मूर्त्तिपूजां कुर्वन्ति, न तत्र मम कोऽपि विश्वासः। तर्हि मम का दशा भविष्यति ?" परिहासं कुर्वन् महाराजः किंचिद् जहास। स्वामिना प्रोक्तम्—"संभवतः महाराजः परिहासं करोति।"

महाराजो जगाद – "न स्वामिन्, मैवम्, पश्यतु भवान् सत्यमेवाहं काष्ठमृत्तिकाप्रस्तरधातुनिर्मितमूर्त्तीनां पूजां न कर्तुं शक्नोमि। किं मम आगामिजन्मनि अधोगतिर्भविष्यति ?"

स्वामी स्तब्धो जातः। पुरतो भित्तौ महाराजस्य चित्रमासीत् स्थापितम्। तमवतारयितुं स आज्ञापयामास। ततश्च तत् स्वहस्ते गृहीत्वा स्वामी पप्रच्छ–"इदं कस्य चित्रम् ?" दीवानमहोदय उदतरत्—"एतन्महाराजस्य चित्रम्।" सहसा स्वामी गंभीरस्वरेण अवोचत् "दीवानमहोदय, भवानत्र चित्रे निष्ठीवनं करोतु।" सर्वे स्तंभिता बभूवुः। किमयं संन्यासी उन्मादी वर्तते ?

किन्तु स्वामी अधिकदृढस्वरेणोवाच,—"भवत्सु कोऽपि चित्रोपरि थूत्करोतु।" सर्वे स्तब्धीबभूवुः। गम्भीरं वातावरणमुदपद्यत काचिदाकस्मिकी दुर्घटना घटमानैव संवृत्ता। सर्वे भयेन संकुचिता जाताः।

तस्मिन्नेव समये स्वामी वज्रगम्भीरस्वरेण प्रोवाच—'किमेतत्? एतत्तु केवलमेकं कर्गजमात्रमस्ति, अत्र थूत्करणे भवतामेतावान् कथं संकोचः ?"

दीवानो भयविह्वलो जगाद—"स्वामिन्, भवान् किमाज्ञापयति? इदन्तु मम पूज्यस्य महाराजस्य चित्रमस्ति।"

तदा स्वामी महाराजं सम्बोध्य जगाद "पश्यतु महाराजः, यद्यपि चित्रतो भवान् पृथक्, परन्तु अत्र दृष्टेः पातेनैव भवतः स्मृतिर्हृदय-पटले प्रतिफलिता जायते अतः महाराजवत् एतस्मै चित्रायापि सन्मानं दीयते। अतो भगवद्भक्ताः प्रस्तरादि-निर्मितमूर्त्तिमपि भगवद्बुद्ध्या प्रतीकज्ञानेन पूजयन्ति। पूजेयं भगवत एव समर्चा, मूर्त्तेः पूजेयं नास्ति। एतदेव प्रतीकोपासनायाः सार आस्ते। मूर्त्तिपूजकः कदाप्येवं न वक्ति —"हे प्रस्तर! अहं तव उपासनां करोमि।" ·· ब्रह्म चिन्मयं विभु-रूपम्! तत्तु प्रतिमायामपि विद्यते। प्रतिमा तस्य चिन्मयस्य भगवतः स्मरणं कारयति। अतो भक्ता मूर्त्तिमवलम्ब्य भगवन्तं पूजयन्ति, तत्पूजां भगवानङ्गीकुरुते च।"

महाराजस्तन्मयो भवन् स्वामिनो वार्त्तां शुश्राव। तस्य वचने समाप्तिं गते करौ बद्ध्वा महाराजः प्रोवाच—"स्वामिन्, भवता यत् किमपि प्रतिपादितं तत् अक्षरशः सत्यम्। अहमिदानीं यावदज्ञानान्ध-कारे निमग्न आसम्, मया न किंचिदवधारितम्। भवताद्य मदीये नयने उन्मीलिते। भवान् मयि कृपां करोतु।"

स्वामिना प्रोक्तं राजन्, ईश्वर-व्यतिरिक्तः न कोऽपि कृपां कर्तुं शक्नुयात्। असावपार-कृपा-सिन्धुः। अहमपि तस्यैव शरणं गतोऽस्मि। भवानपि तस्यैव शरणं गृह्णातु। भवतः कल्याणं संपत्स्यते—इत्युक्त्वा स्वामी उदतिष्ठत्।

स्वामिनो गमनानन्तरं महाराजः दीवानमुवाच—"दीवानमहोदय, एतादृशो महात्मा पूर्वं मया न दृष्टः। येन केन च विधिना भवेदिमं कानिचिद्दिनानि अत्र भवान् स्थापयतु।" महाराजस्याभिप्रायमवगत्य

दीवानमहोदयः स्वगृहे स्वामिनं कियद्दिनानि अवस्थानार्थं न्यवेदयत्। स्वमिना प्रोक्तम्—"पश्यतु दीवानमहोदय, मम संन्निधानेऽनेकविधा मनुष्याः समायान्ति। भवन्तो महत्तराः सन्ति। यदि भवान् धनिनां निर्धनानां पंडितानां मूर्खाणां, ब्राह्मणानां चाण्डालानाञ्च सर्वेषां कृते द्वारम् अपिहितं करोतु तदात्र स्थाने निवासे मम काचिदपि आपत्तिर्नास्ति।"

दीवानमहोदयः सानन्दं सम्मतो बभूव। स्वामी तत्र स्थितः। सर्वेभ्यो धर्मोपदेशं ददौ। राज्ये संस्कृतपाठस्य * शास्त्रादिप्रचारस्य च व्यवस्था जाता। बहूनां दीनदरिद्राणामभावः दूरीबभूव। अर्थाभावात् कस्यचिद्दरिद्रग्रामीणबालकस्योपनयनसंस्कारो न संपद्यत इति ज्ञात्वा स्वामी तदर्थमस्थिरतां गतः।...

---

* स्वामी संस्कृतभाषाशिक्षायास्तदीयबहुमुखप्रचारस्य च महत्त्वं ददाति स्म, यतः संस्कृत-शास्त्रेष्वेव भारतीयधर्म-संस्कृतिमूलस्य तत्त्वं निहितमास्ते। तेन १८९७ ईसवीये मद्रासे अन्तिमभाषणं ददता प्रोक्तम्—"...संस्कृत-भाषायाः कठोरतया संस्कृतशास्त्राणां तन्निहिततत्त्वानाञ्च जनसाधारणेषु प्रचलितभाषया शिक्षादानमस्माकमुचितम्। तेन सहैव च संस्कृतभाषायाः शिक्षणमपि प्रचरिष्यति। यतः संस्कृतशिक्षया संस्कृतशब्दानामुच्चारणमात्रेणैव भारतीयजातौ गौरवस्य शक्तेश्च भावो जागर्त्ति गमिष्यति।...अये निम्नश्रेणयो मानवाः! अहं युस्मान् ब्रवीमि भवदीयदशासमुन्नतिसाधनस्यैकमात्रोपायः संस्कृतभाषाशिक्षणमेवास्ते।...तदा च तेनैव साकमुच्चवर्णानां शिक्षासंस्कृतिरपि स्वीकर्त्तव्या वर्तते।"

अन्यत्र स्थाने तेन प्रोक्तम्—"स्त्रीषु निम्नश्रेणिजनेषु च संस्कृत-शिक्षा-विस्तारः सर्वतः पूर्वमावश्यकः। प्राचीनमहर्षिद्वारा प्रचालितया शिक्षया स्वीयकार्यक्षेत्रे निजादर्शं पूर्णरूपेण करायत्तीकृते ते स्वयमेवावधारयितुं शक्ष्यन्ति यत् समाजस्य कुत्र स्तरे तदीयस्थानेन निर्दिष्टेन भाव्यम्। कुत्र कुत्र कार्ये तैः हस्तक्षेपः कर्त्तव्यः। कस्य वा स्वीकारः कस्य वा परिवर्जनमावश्यकमास्ते।"

स्थानीयपुरुषाणामनेकेषामाग्रहे सत्यपि मार्चमासस्यान्तिमे भागे स जयपुराभिमुखं जगाम। ततश्च खेतडी-अजमेर-आबूप्रदेश-अहमदाबाद-जूनागढ़-गिरिनार-पोरबन्दर-स्थानेषु गतवान्। (अत्र ८-९ मासाः), द्वारिका-, काम्बे-उपसागरतटस्थितमन्दिर-बहुले पत्तने)-पालिताना-बड़ौदा-खण्डवा-मोहमयी-पूना-वेलग्राम-स्थानानि (१८९२ अक्टूबरमासे) गच्छन् बंगलोर- मैसोर-कोचीन-त्रिवेन्द्रम्-मदुरादिस्थानानां दर्शनं कुर्वन् दक्षिण-भारतस्य वाराणस्यां श्रीरामचन्द्रद्वारा प्रतिष्ठिते रामेश्वरे देवतीर्थे कन्याकुमारीस्थाने च (१८९२ ईसवीयस्यान्तिमभागे) उपस्थितो बभूव। तदनन्तरं पाण्डिचेरीम्, रामनादम्, मद्रासम्, हैदराबादम्, खेतडीञ्च समुपस्थाय १८९३ ईसवीयमईमासस्य ३१-तारिकायां मुम्बानगरेऽर्णवपोतेनामेरिकायात्राया दिनं यावदसौ निरन्तरमेव भ्रमणमकार्षीत्। प्रायशः सार्धद्वयवर्षात्मकभ्रमणस्यैतस्य प्रत्येकमपि दिनम् अनेकाभिः घटनाभिः परिपूर्णमास्ते। राजप्रासादेषु, दरिद्राणां कुटीरेषु, यदसौ शिक्षां दातुमादातुं वा भ्रमणाय निरगच्छत् सर्वत्रैव स्थानेषु तदेतत्सर्वं साधुरीत्या तेन सम्पादितम्। स युवकान् वेद-वेदान्तपुराणादि-श्रेष्ठधर्मग्रन्थानामध्ययने समुत्साहितानकरोत्। ततोऽपि विशिष्य देवतादृष्ट्या मनुष्यमात्रं पूजयितुमादिदेश। जन-

---

धर्म एवास्माकं जातीयजीवनमेरुदण्डः। "अस्माकं पुण्यभूमौ भारते केवलं धर्म एव जातीयजीवनस्य मूल-भित्तिः। भारतवासिनां जीवनसंगीते धर्म एव मौलिकः स्वरः।...धर्मः, केवलं धर्म एव भारतस्य प्राणरूपः।" इयमासीत् स्वामिनो वाणी। संस्कृतभाषायामेवास्माकं मूलधर्मग्रंथा रचिताः सन्ति। संस्कृतभाषामधीत्य धर्ममूलतत्त्वैरस्माभिः परिचितैर्भवितव्यमास्ते, अतः कारणात् स्वामिना संस्कृतस्य बहुप्रचारसम्बन्धे विभिन्नस्थानेषु अनेका वार्त्ताः प्रतिपादिताः।...भारतस्य जातीय-जीवने एकता-संस्थापनमेकमात्रसंस्कृतशिक्षा-माध्यमेनैव संभवति।

साधारणदशाया उन्नयनस्य दरिद्रप्रजानां दरिद्रतामोचनस्य तथा तदीयशिक्षायाश्च* व्यवस्थायै राज्ञो महाराजांश्च नियुक्तानकरोत्। दरिद्रेभ्यः साहसस्य आशायाश्च वाणीमश्रावयत्, भ्रष्टाचारिणो मर्य्यादा-पूर्णजीवने प्रतिष्ठितानकार्षीत्। पापितापिनां च हताशहृदयेषु अमृतरसं समचारयत्।

---

* शिक्षायाः सम्बन्धे स्वामिन एका सुचिन्तिता परिकल्पना आसीत्—या च तस्य वाण्या रचनावल्याश्चाभ्यन्तरेऽनुस्यूता परिदृश्यते। तस्य मते शिक्षाया भित्ति-र्भारतीयभाषा देववाणी चैव भवितुमर्हति। संस्कृतभाषाया अभ्यन्तरे सर्वाणि सत्यानि सन्निहितानि सन्ति। अतः तस्याः माध्यमेन अस्माकमानुष्ठानिकधर्म-संस्कृतिशिक्षणेन परिणामः शुभः सम्पत्स्यते।

वर्तमानशिक्षापद्धतेः दोषगुणान् विवेचयता तेन प्रोक्तम्—"अस्मिन् देशे प्रचलितशिक्षापद्धतौ केचन समीचीना विषया अवश्यमेव सन्ति, किन्तु तद-पेक्षया बहवोऽधिका भयङ्करदोषाश्च विद्यन्ते।·· शिक्षयैतया मनुष्या न प्रस्तू-यन्ते, यतोऽसौ सम्पूर्णरूपेण प्रतिषेधमूलकशिक्षा विद्यते, यस्या विषमयफलं मृत्युतोऽप्यधिकं भयजनकमास्ते। तेनान्यदपि प्रोक्तम् यत्—"वर्तमानशिक्षा-पद्धतिः केवलं कर्मकर (क्लर्क)-प्रस्तुतीकरणाय यन्त्र-रूपैव। केवलमिदमेव न हि, तस्याः शिक्षापद्धतेः कुफलं सुदूरं प्रसरति। तस्याः प्रभावतः मनुष्याणां श्रद्धाविश्वासयोः लोपः संजायते।" शिक्षायाः सम्बन्धे तेनान्यत्रापि प्रोक्तम्—"शिक्षा किं केवलं पुस्तकेन भवति? न। किमसौ विविधविषयाणां ज्ञान-सम्पादयित्री? न। एतदपि नैव।···यथार्थशिक्षापदेन बहुशब्दानां संग्रह एव नावधार्यते, बुध्यते मेधादि-मानसिक-वृत्तीनां विकासः।···मनुष्याणाम-भ्यन्तरे या पूर्णता विद्यते तद्-विकासस्य नाम शिक्षेति।···यस्याः माध्यमेन जीवनं संघटितं क्रियते, मनुष्यत्वस्य विकासो जायते, चरित्रस्य समुन्नतिः सिध्यति। इमे भावाः अस्माभिरवश्यं ग्राह्याः सन्ति। यथार्थतः केनापि ग्रंथागारस्य सर्वाण्यपि पुस्तकानि कण्ठीकृतानि, ततोऽप्यधिक-रूपेण त्वं शिक्षितो भवितुं शक्नोषि यदि केवलं पंचानां भावानां हृदये ग्रहणपूर्वकं तदनुसारेण

प्रायशः वर्षत्रयं यावत् स्वामिनो भारतभ्रमणस्य दिनानि अनेक-घटनापरिपूर्णान्यभूवन्। प्रत्येकं घटनायाश्च विशेष-तात्पर्य्यमप्यभूत्। स्थानाभावाद् तासु कासांचन घटनानां विवरणं दत्त्वैवास्माभिस्तृप्तैः भूयते। ··

*　　　*　　　*

अलवराज्जयपुरम्। मार्गे पाण्डुपोलस्थहनुमतो विख्यात-मन्दिरस्य, टाहलास्थ-नीलकण्ठमहादेवस्य प्राचीनमन्दिरादीनां दर्शनं कुर्वन्नसौ जयपुरमाजगाम। सर्वत्रैव तदुपदेशश्रवणाय अनेकेषां मानवानां समावेशोऽजायत। नीलकण्ठस्य मन्दिरं तत्पार्श्ववर्ति-स्थानं च तस्य समधिकं प्रीतिकरमभूत्। समुद्रमन्थनोद्भूतहालाहलपानेन महादेवस्य नाम नीलकण्ठो बभूव। तस्याः पौराणिकघटनाया व्याख्या-प्रसंगेन तेन प्रोक्तमासीत्—"समुद्रो मायारूपः। रूपरसगंधविशिष्टं विचित्रं जगदिदं माया-रचितमेव। अत्र इन्द्रियसुखजनकान्यनेकानि भोग्यवस्तूनि सन्ति। भोगपरिणामे तेभ्यो हालाहलं समुत्पत्स्यत एव, हालाहलं विषमिदमात्मज्ञानस्य परिपन्थि।·· भूमानन्दे निमग्नः देवादिदेवः शंकरः संसारसमुद्रसमुत्पन्नं हालाहलं स्वयं पीत्वा प्रजाभ्योऽमृतदानमकरोत्।···"

---

नैजं जीवनं चरित्रं च संघटितं कर्तुं शक्नुयाः।···शिक्षाशब्देन यथार्थकार्यकारिज्ञानार्जनमेव मयाऽवधार्य्यते।··· केवलं पुस्तकस्थविद्यया कार्यं न सेत्स्यति। अस्माकं प्रयोजनं तयैव शिक्षया वर्तते, यां द्वारीकृत्य चरित्रघटनं सम्भवेत्, मनोबलं वर्धेत, बुद्धिर्विकासमियात्, मनुष्याश्च स्वावलम्बिनो भवितुमर्हेयुः। पाश्चात्त्यविज्ञानेन सह वेदान्तस्य समन्वयः कर्त्तव्यः—यस्य ब्रह्मचर्यश्रद्धात्मविश्वासादयो मूलमन्त्रा भविष्यन्ति।···"

—:०-०:—

अलवरस्यानन्तरं जयपुरे सप्ताहद्वयं निवसता तेन एकस्मात् प्रसिद्धवैयाकरणात्पाणिनेरष्टाध्याय्या अध्ययनं प्रारब्धम्। दिनत्रयं व्याख्यां कुर्वन्नपि पंडितमहाराजः प्रथमसूत्रस्य भाष्यं स्वामिनमवबोधयितुं नाशक्नोत्। ततः हताशो भूत्वा सः प्रोवाच—"स्वामिन्, एतत्प्रतीयते मया यत् मत्तः भवतः कोऽप्युपकारः न संपत्स्यते।"

विशेषलज्जितो भूत्वा स्वामी स्वीयचेष्टया भाष्यार्थं हृदयंगमं कर्तुं दृढसंकल्पमादायाध्ययने समुपविष्टः। स्वल्पसमयाभ्यन्तर एव भाष्यमर्म तेनावगतम्। अनन्तरमसौ पंडितसमीपमुपस्थाय भाष्यस्य व्याख्यामश्रावयत्। तस्य सरलां सुचिन्तितां व्याख्यामाकर्ण्य पंडितः आश्चर्य्यचकितो बभूव। केवलं व्याख्यैव न, नूतन-प्रकाशेन सः पंडितमहाशयं मुग्धमकरोत्। तदनन्तरमसौ सूत्राणि अध्यायांश्च अत्यन्तसरलतया पठितुमारेभे। स्वामिना प्रोक्तम्—"संकल्प एव सर्वाभ्यर्हितः। प्रतिज्ञायां दृढतया किमपि कार्यं नावरुध्यते, अतः दृढसंकल्पः अत्यावश्यकः।..."

जयपुरस्य विभिन्न-स्थानेषु निवसतः तस्य संस्पर्शे अनेके मानवाः समागत्य धन्या बभूवुः। प्रधानसेनापतिः सरदारहरिसिंहः स्वामिनमवलोक्याऽत्याकृष्टो बभूव। तं स्वभवने नीत्वा धर्म्मालोचनाप्रबन्धस्तेन सम्पादितः। सेनापतिः मूर्तिपूजायां विश्वासं नैव करोति। स्वामिना सह तेनानेके तर्कवितर्काः समनुष्ठिताः। एकदा उभौ भ्रमणार्थं निर्गतौ। राजपथे भक्तमानवाः कीर्तनं कुर्वन्तः श्रीकृष्णमूर्तिमादाय महत्यां शोभायात्रायां प्रचलन्तोऽभूवन्। उभौ दण्डायितौ

बभूवतुः। एतस्मिन्नेव काले सहसा हरिसिंहं स्पृशन् स्वामी जगाद— "पश्यत इयं श्रीभगवतः जीविता मूर्तिः।"

स्वामिनः स्पर्शेन हरिसिंहस्य भावान्तरं जातम्। अश्रूणि विमुंचन्नसौ मन्त्रमुग्ध इव स्थितः मूर्तेर्दर्शनमकार्षीत्। तदनन्तरं गद्गदकण्ठेन स प्रोवाच—"स्वामिन्निदानीं यावत् तर्कयुक्ति-बलेन यन्नावधारयितुमशक्नवम्, अद्य भवतः कृपया तत्संभवमभूत्। प्रतिमायां श्रीभगवतो दर्शनं कृत्वा अद्य धन्योऽहमभवम्।"

जयपुरेऽन्यत्र च जनसाधारणानां दरिद्रताया असहायतायाश्च दशामवलोक्य स्वामिनो हृदयं वेदना-परिपूर्णं जातम्। इमे एव सन्ति जातेर्मेरुदण्डरूपाः, जातीयप्राणाः भविष्यद्-भारत-निर्माणकर्त्तारश्च। दुर्दशाग्रस्त-मानव - शोचनीयावस्था - प्रतिकारायासौ राज्ञः तत्कर्मचारिणश्च समुत्तेजितानकरोत्। स च जनजागरणस्य ऋषिः, आर्त्तबन्धुश्चासीत्। केवलं भारतस्यैव न हि, प्रत्युत सर्वदेशीयानां सर्वजातीयानां च निर्धनानां कृते तदीयं चित्तमरोदीत्। नासीत् तस्य विशाल-हृदये भौगोलिकसीमरेखा। तेन प्रोक्तम्—"भगवान् कुत्रान्विष्यते? दरिद्राः, दुःखिनो, दुर्बला, घृणिताः, अस्पृश्याश्च किं देवा न सन्ति? प्रथमं तेषामेव पूजनं किं न क्रियते?…वेदान्तस्य जन्मभूमौ भारतवर्षे जनसाधारणाः युगयुगम् अवहेलितास्सन्ति। तेषां स्पर्शः, सङ्गश्चापवित्र इति—उद्घुष्यते। निराशाया अन्धकारे तेषां जन्म। तत्रैव तैः निरन्तरं स्थीयते।…स्मर्य्यताम्—दरिद्राणां पर्णकुटीरेषु भारतीयजातेर्निवासः। परन्तु हन्त! तेषां कृते किंचिदपि केनापि न कृतम्।…भारतस्योपेक्षिताः कृषकाः, कुविन्दाः, उपानन्निर्मातारः, मार्जनी-जीविनश्चेत्यादयो निम्नश्रेणयो जना वैदेशिकानामुत्पीडनं स्वदेशवासिनामवज्ञां च सहमानाः स्मरणातीतकालात् शान्ताः कार्यं कुर्वन्तः सन्ति। कदापि च तैः तदर्थमुपयुक्तपारिश्रमिकं नाधिगतम्।"

भारतस्य जनसाधारण-दुर्गतिमवलोक्य तदीयविशालहृदयमत्यन्तं भाराक्रान्तमभवत्।* अतः कारणादसौ गणसंविदं जागरयितुं युवकानुत्साहयांचकार। दुर्दशाग्रस्तानां दरिद्राणामसहायदशाभिमुखं राजमहाराजानां दृष्टिं समाकर्षत्। आचण्डालं सर्वश्रेणीनां समुन्नयनार्थं स हृदयाद् रुधिरं दातुं प्रावर्तत। परन्तु केनोपायेन यथार्थतो जन-जागरणं भवेत् तं सोऽवगन्तुं नापारयत्। 'किमत्र विधेयम्?' इति बोधयितुं विनम्रेण विह्वलेन च हृदयेन करुणासागरं भगवन्तं प्रार्थयते स्म। वयं जानीमहे सेयं प्रार्थना वन्ध्या नाभूत्। इदानीं सर्वेष्वपि जनपदेषु जनजागरणं सम्प्रवृत्तम्—विविध-गणान्दोलनद्वारा साम्यवादादिरूपेण (सोशलिजम, एनार्किजम, नाइहिलिज्म अथवा कम्यूनिजम) सोऽवोचत्—"अधुना शूद्रशक्तेरभ्युत्थानम्" इति। तस्य भविष्यद्वाणी अक्षरशः तथ्या समपद्यत। सर्वत्र देशेषु श्रमिकाणां तथाकथितावरजातीनां संघटनस्य जागरणस्य च सूचना समन्तात् संलक्ष्यते।

आर्तमानवानां दुःखदारिद्र्यसम्पर्के स यावत् आयातः तावदेव तस्यान्तरंगे जनसेवाव्रतं साकारं संवृत्तम्। मानवानां दुःखवेदनां केन्द्रीकृत्य तस्य कृत्स्ना शक्तिः समग्राश्च चेष्टा मानुषरूपिणो 'नर-

* "वर्तमान-भारत" ग्रंथे स्वामिना सर्वदेशीयनिपीडितमानवार्थं स्वीया गभीरवेदनानुभूतिर्बहुषु स्थानेषु प्रदर्शिता। तत्र सविशेषम् अवधानं देयम्। एकस्मिन् स्थाने तेन लिखितम्—"येषां शारीरिकपरिश्रमेण ब्राह्मणानां प्रभुत्वं क्षत्रियाणामैश्वर्य्यम् वैश्यानां धनधान्यं संचितं, ते कुत्र सन्ति? समाजे ये सर्वत्र व्याप्ताः सन्तः सर्वेषु देशेषु सर्वस्मिन्काले च 'जघन्यप्रभवो हि स' इति रूपेणाभिहिताः सन्ति, तेषां को वृत्तान्तः? येषां विद्यालाभेच्छारूपगुरु-तरापराधेन भारते 'जिह्वाच्छेदनशरीरभेदनादयः' भयावह-दंडाः प्रचलन्ति स्म। भारतस्य 'जंगमश्मशानरूपा' भारतेतरदेशानां 'भारवाहिनः पशवो' ये सन्ति, तेषां शूद्रजातीयानां का गतिः?"

नारायण'स्य सेवायां संलग्नाः। सोऽप्यकथयत्—"अहमेकं तादृश-मेव धर्ममभिलषामि योऽस्मासु आत्मविश्वासजनने जातीयमर्यादा-बोधोद्भावने अकिंचनसाधारणजनानां क्षुधानिरसने शिक्षणप्रदाने तथाऽस्माकं चतसृषु दिक्षु मुखं व्यादाय प्रसृतायाः पीडावेदनाया दूरोत्सारणे च सामर्थ्यम् आदधीत।...यदि परमेश्वरं प्राप्तुमीहसे चेत्तर्हि मानवसेवां कुरुष्व।"

जनसेवाव्रते स समग्रां शक्तिं विनियोजयामास। कृत्स्नप्रपंचस्थ-दरिद्राणां हृदयविदारकस्यार्तनादस्य प्रतिध्वनिं स्वान्तःकरणे समा-कर्णयत्। अत एव स परितो नररूपिणो नारायणस्य सेवा-मन्त्रं श्रावयितुं प्रवृत्तः। भारतवर्षे प्रान्तात् प्रान्तान्तरं यावत् सर्वानपि जनान् नरनारायणसेवायामनुप्राणितान् कर्तुमैच्छत्। रवीन्द्रनाथ-चित्ते स्वामिनो वाणी कथंकारमनुरणति स्म? सोऽलिखत्—"विवे-कानन्दो जगाद—मानवेषु प्रतिव्यक्ति ब्रह्मशक्ति र्जागर्ति। दरिद्रनारायण-स्याभ्यन्तरे नारायणः अस्माकं सेवां लब्धुमिच्छति। अस्यैव नाम वाणी इति। इयं वाणी स्वार्थबोधाद् बहिः मनुजस्यात्मनेऽनन्तस्य मुक्तिमार्गस्य दर्शनमुपहरति। नायं कस्याप्याचरणानुष्ठानविशेषस्य उपदेशः तथा नापि व्यावहारिकस्य सङ्कीर्णानुशासनस्य। स्पृश्यास्पृश्य-विरोधः अत्रैव स्वयमेवायाति। तद्द्वारा राष्ट्रियस्वतन्त्रतायाः सुयोगः सुलभः भवेत् नैतदर्थमेव, प्रत्युत तद्द्वारा मानवमात्रस्यापमान-निरसनाय। सोऽयमपमानः अस्माकं सर्वेषां कृते न्यक्कारः।"

"स्वामिविवेकानन्दस्य वाणी सा मानवजातेः समुद्बोधकत्वादेव कर्माभ्यन्तरे मुक्तेर्विचित्रे मार्गेऽस्माकं यूनः प्रवर्त्तयति।" इति रामकृष्ण-मिशन-शिक्षण-मन्दिर-वेलुड़मठे १९६१ ईसवीये वर्षे प्रकाशिता 'सन्दीपन'-संख्या २,३२ पृष्ठे)।

स्वामी स्वयमन्यत्राकथयत्—भ्रमवशात् यान् लोका 'मनुष्याः' इत्यभिदधते तेषामेव नरनारायणानां वयं सेवकाः स्म।...सामाजिक-

राजनीतिक-आध्यात्मिक-प्रभृतिषु सर्वेषु क्षेत्रेषु यथार्थमङ्गलसाधनस्य सूत्रं एकमात्रमिदमेव वर्तते—मानवमात्रं नारायणोऽस्ति, 'अहं मम च भ्राता एक एव ।' सर्वेषां देशानां सर्वासां जातीनां च कृते इदं सत्यं समानरूपेण अन्वेति । स्वामिमहोदयस्येयं वाणी व्यावहारिकक्षेत्रे दैनिकजीवने प्रयुक्ता चेदेव तत्र सामूहिकैकतायास्तथा विपुलसम्भावना-पूर्णविश्वभ्रातृत्वस्य बीजं प्रतीयेत । तन्मन्त्रान्तरालादेव स भावि-भारतमाजुहाव ।

* * *

जयपुरात् स्वामिमहाशयः अजमेरं जगाम । तत्र मोगलसामन्तानां प्रासादान् विश्रुतान् 'दरगा' तथा 'फकीरचिस्ति'-महात्मनः समाधेः कारुकलां विलोक्य नितान्तं मुमुदे । तत्पश्चात् स 'आबू'-पर्वत-माययौ । पार्वतरामणीयकादतिरिक्तं परस्सहस्रमुद्राभिः निर्मितं त्रयो-दशशताब्द्याः प्रथितं जैनमन्दिरकामनीयकं तत्रत्यं शिल्पकौशलं च विशेषतस्तमाकृष्टमकार्षीत् । स एकां गुहामध्युष्य बहुदिनपर्यन्तम् "दिलवाड़ामन्दिरस्य अनितरसाधारणं स्थापत्यप्रावीण्यं सूक्ष्मेक्षिकया निरैक्षत । स्वामिमहोदयः स्थापत्यकलायाः स्वयं विशेषज्ञोऽवर्तत ।

स्वामिमहोदयः गुहावासस्य कतिपयदिनैरेव भूयसो मानवान् स्वाभिमुखमाकृष्टवान् । स्थानीयराज्यस्य कश्चिद् मुसलिमन्याय-व्यवसायी ( वकीलः ) स्वामिमहोदयस्य चुम्बकीयव्यक्तित्वेनैतावदा-कृष्टो बभूव यत् सः सादरं स्वामिमहोदयं स्वभवनमानाय्य, अभ्यव-हारादेः पृथक् प्रबन्धं कारयित्वा तं कांश्चिद् दिवसान् तत्र निवासया-मास । तदानीं स मोहम्मदीयगुरुः ( मोलविः ) अनेकान् उच्चपद-स्थान् अधिकारिणः श्रीस्वामिपार्श्वमानयामास । एतावन्तो मानवा आगन्तुं प्रववृतिरे, यत् तस्य अशनविश्रामार्थमपि समयो दुरासद आसीत् । तथैव स आतिथेयः एकदा 'खेतड़ी'-राजस्य वैयक्तिक-सचिवं मुंशीजगमोहनलालं स्वामिपार्श्वमानिनाय । एष सचिवः राज-

पुतानाप्रदेशे सविशेषमाद्रियमाण-ताजिमी-सरदारस्य वंशज आसीत्। तस्यान्ववायस्य एतावान् सम्मानः अवर्तत यत् कोऽपि ताजिमी-सरदारः कस्यापि राज्ञ आस्थानमण्डपमायातश्चेत् राजा स्वयम् सिंहासनादुत्थाय तं समाद्रियते स्म। कौपीनधारी स्वामिमहोदयस्तदैव विश्रामानन्दमन्वभवत्। जगमोहनलालः आलोचक-बुद्ध्या समायात आसीत्। स्वामिमहोदयेन साक्षात्कारे जाते स तमप्राक्षीत्—"यूयं हिन्दुसंन्यासिनः स्थ। मुस्लिमसदने कुतो निवसथ?"

स्वामिमहोदयोऽनुपदमेव उत्तरयांचक्रे—"महाशय! अहं संन्यासी किल, सामाजिका आचारनियमा मां नानुबध्नन्ति। अहं तावत् श्वपचेन सहापि भोक्तुं प्रवर्तेय। ब्रह्म सर्वत्र प्राणिषु विराजते। सर्वेऽपीश्वरमूर्तयः सन्ति। ब्रह्मविद्यायां कृतपदानां भेदः अभेदो वा, उच्चनीचता वा स्पृश्यास्पृश्यता च विलुप्यते। शास्त्रमपीदं समर्थयते—"निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः?" मुक्तिमार्गे संचरिष्णूनां त्रिगुणातीतपुरुषाणां कृते विधिनिषेधौ एकरूपौ। यूयं शास्त्रं भगवन्तं वा सोपेक्षमवहेलयथ।"

स्वामिमहोदयस्य तीक्ष्णेन प्रतिवाक्येन जगमोहनलालः जोषम्भावं नाभजत। स नानाविधान् तर्कवितर्कानुद्भावयति स्म। परन्तु स अचिरादेव मौनं भेजे। स मुग्धोऽजायत, तस्य हृदयं विलोडितमभूत्। नैष केवलो वार्तालापः! राजा एतेन महानुभावेन कृतपरिचयो विधेयः इति स निरणैषीत्। सचिव-मुखात् संन्यासिनो वृत्तमवगत्य राजा तद्दर्शनार्थमुद्यतोऽभूत्। इदं विज्ञायैव स्वामिमहोदयः राजसाक्षात्काराय स्वयम् अग्रेपदो बभूव।

राजा अभ्युत्थानपुरस्सरं परमश्रद्धया स्वामिमहोदयमासने समुपावेश्य स्वयमेवमुत्थित एव नानाप्रकारान् प्रश्नान् प्रष्टुम् प्रावर्तत—"किं तावद् जीवनम्? कोऽसौ धर्मः? का सा शिक्षा? नीत्यनुशासनं कीदृशम्?" इति सर्वेषां प्रश्नानामुपपन्नमुत्तरं लब्ध्वा राजा

स्वामिमहाशयस्य गम्भीरं शास्त्रज्ञानं विलक्षणविश्लेषणसामर्थ्यं तथा आध्यात्मिकानुभूतिञ्च विज्ञाय सुतरां मुग्धो बभूव। स एव प्राथमिकः संस्तवः क्रमशः गम्भीरेऽन्तरङ्गभावे परिणतोऽभूत्। अनुदिनं राजा स्वामितल्लजे एधमानश्रद्धः संवृत्तः। विविधाः समीक्षा जायन्ते स्म। धर्म-संस्कृति-सभ्यता-राष्ट्र-मानवजीवनोद्देश्यप्रभृतीन् विषयानधिकृत्य तयोर्गोष्ठी आलोचनाश्चाभवन्।

अधुना राज्ञः खेतडीपरावर्तनस्य समय उपस्थितः। धर्मप्राणो राजा अजितसिंह एकस्मिन् दिवसे नितान्तनम्रभावेन स्वामिसत्तमस्य समक्षम् आवेदितवान् —"स्वामिचरणाः! कृपया श्रीमन्तो मम राज्ये पदे निदधतु। अहं विशेषतो भवत्सेवायाम् अवधास्ये।" राज्ञो महता आग्रहेण स्वामी महोदयः तां प्रार्थनां स्वीकृतवान्। कतिपयदिवसानन्तरं राजा सचिवाद्यनुयायिभिः श्रीस्वामिमहोदयेन च साकं खेतडीं प्रातिष्ठत। धूमशकट्या जयपुरं यावदाजगाम। ततः नवतिक्रोशार्धान् राजशकटेषु सर्वेषां यात्रा समजनि।

स्वामिमहोदयः 'खेतडी'-नगरे राजानुरोधेन कतिचन सप्ताहानवसत्। राजप्रासादेऽपि सर्वत्यागिनः संन्यासिनो जीवनं निर्वहन्नेव आसाञ्चक्रे। 'खेतडी'-प्रवास-समयः साधनस्वाध्याय-शिक्षा-दानैरविच्छिन्न आसीत्। तस्याधिकः समयो ध्यान-साधने व्यतीयाय। विविधोपदेशस्तस्य नित्यकृत्याङ्गमेव बभूव। न केवलं राजा, अन्येऽपि प्रतिष्ठिता उच्चाधिकारिणो विशिष्टा नागरिकाश्च उपदेशं श्रोतुं तदन्तिकमायान्ति स्म। 'खेतडी'-राज उदाराशयो गुणग्राही चासीत्। तस्य आस्थानपरिषदि संस्कृतस्य प्राच्यप्रतीच्यदर्शनस्य चाभिज्ञा अनेके विद्वांसोऽवर्तन्त। राजसभा-पण्डितो नारायणदासः समस्ते राजपुतानाप्रान्ते अद्वितीयो वैयाकरण आसीत्। स्वामिमहोदयस्तदन्तिकं पातञ्जलं महाभाष्यमध्येतुं व्रजति स्म। द्वित्रदिनैरेव स्वामिचरणस्य अनितरसाधारणं बहुश्रुतत्वं विदित्वा नारायणदासपण्डितः प्रोवाच—

"स्वामिनः ! भवादृशा विद्यार्थिनः दुर्लभाः।" तदर्हम् अध्येतारमासाद्य पण्डितः सोत्साहमध्यापनं विदधे। परन्तु स्वामिमहोदय एतादृशान् कूटप्रश्नानुदभावयत्, येषां समाधानं सहसा पण्डितानां कृते दुष्करं समपद्यत।

राजसत्तमः स्वामिचरणस्य जीवनं दर्शं दर्शं श्रद्धान्वितो भूत्वा पर्यन्ते स्वामिमहोदयं गुरुत्वेनावृणोत्। स्वामिचरणः अपि राज्ञः श्रद्धाभक्ती समालक्ष्य तं शिष्यत्वेन स्वीचकार।

खेतडीराजः अनपत्यो बभूव। एकदा स स्वामिपादस्य पुरः नितान्तकातर्येण स्वान्तर्दुःखमावेदयत्—"अहमसन्तानोऽस्मि। भवान् आशिषाऽनुगृह्णातु, येनाहं पुत्री स्याम्। भवदाशीर्वादः कदाऽपि वैफल्यं नाप्स्यति।"

राज्ञः भक्तिप्रश्रयौ लोकं लोकं स्वामिनश्च चित्ते कारुण्यं संचचार। स राजानं आशिषाऽन्वगृह्णात्। सा चाशीरचिरादेव फलवती संवृत्ता। हायनद्वयाभ्यन्तर एव राज्ञः एकः पुत्रोऽजायत। राजा स्वामिमहोदये एतावदाकृष्टोऽजायत यत् स क्षणमेकमपि श्रीस्वामिचरणविश्लेषं नासहत। अयं भक्तिभाव एतावतीं भूमिं गतः यत् स निशीथेऽपि समुपेत्य श्रीस्वामिनश्चरणपरिचर्यां विदधाति स्म। एकदा स निजवयस्यैः सार्धं प्रमोदकाननं जगाम। गानगोष्ठ्यां गायिका वीणया सह मधुरं गातुं यदा उपचक्रमे तदा राज्ञ इदमस्फुरत् यत् अहह !! यदि श्रीस्वामी इदमाकर्णयिष्यत् नूनं प्रसन्नः अभविष्यत्। तदैव स स्वामिपादमामन्त्रयितुं स्वामात्यं प्राहिणोत्। श्रीस्वामी समाययौ। राजादेशेन एका नर्तकी गातुमुपाक्रमत, परन्तु स्त्रैगकण्ठात् गाने श्रुत एव स्वामिमहोदय आसनात् उदतिष्ठत्। राजा करौ बद्ध्वा निवेदितवान् "गुरुपाद ! एकं गानं श्रूयताम्।" राज्ञोऽनुरोधात् स्वामिना स्थातव्यम् आपतितम्। नर्तकी भक्तिस्निग्धं भक्तकविवर-सूरदासस्य एकं पदमगायत्।

"प्रभो ! मम अवगुणान् चित्ते मा कुरु
भवतो नाम समदर्शी अस्ति, कामं पारं प्रापय ।
एकं लौहं देवसदने, एकमस्ति व्याधागारे ।
स्पर्शमणेः मनः द्वेधा न भवति द्वे अपि
काञ्चनं करोति ।

* * *

एका माया एकं ब्रह्म उच्चैरुच्यते सूरदासेन—
अज्ञानेन भेदो भाति, ज्ञानी कुतो भेदं विदधीत ?"

अत्र व्यंजनाविधया ज्ञानं स्वामिनोऽन्तरं पस्पर्श । स निस्तब्धः अतिष्ठत् । 'सर्वं खल्विदं ब्रह्म'—इदं केवलं कथनमात्रं किम् ? संन्यासिनः समदर्शिनो भवन्ति । अनुतापतीक्ष्णशरेण विद्धोऽभवत् ।... पतितायाः गानेन तस्यान्तरम् आलोकचमत्कृतं संवृत्तम् । स तदानीमेव अंजलिमायोज्यावोचत् "मातः ! मां क्षमस्व,...भवत्यां घृणां कृत्वा प्रस्थातुमैच्छम् । श्रीमत्या गानेन मम चैतन्यमुज्जीवितमिव ।..." स तस्मिन् दिने महतीं शिक्षां प्राप्नोत्, व्यवहारभूमिकायां स सातिशयं समदर्शी समपद्यत ।

स्वामिपादः केवलं सौधमधिवसन्नेव नावर्तत । स प्रजाजनानां सुखदुःखयोः भागग्राही अप्यासीत् । राजपुतानाभागे अटाल्यमानः स निर्धनानां शोचनीयदशाया विशेषेण परिचयमवाप्य तत्प्रतीकारार्थमचेष्टत । स राजसु सामन्तेषु धनाढ्येषु च जनसेवाभाववीजम् उदवपत् । स्वामिपादस्य उपदेशानुगुण्येन खेतडीराजः निजराज्ये प्रजानामुन्नयनार्थं विविधान् प्रबन्धान् पर्यकल्पयत् । राज्ञां हस्ते सामर्थ्यम् अवर्तत । अस्मादेव कारणात् स्वामिमहोदयस्तैः सह सम्पर्कमभ्यलषत् । तेषां मनसि परिवर्तनमाधातुं स सचेष्ट आसीत् । भूम्ना साफल्यमपि तत्र समासादितम् । यत्र क्वापि स्वामिमहोदयोऽगमत् तत्र सर्वत्र धनाढ्यान् दरिद्राणां भरणार्थं आवेदयाञ्चकार । स इदम-

प्यवगच्छति स्म यद् द्वित्राणां राजमहाराजानां वदान्यतया सदाशयेन वा भारते प्रसृतस्य दुःखदारिद्र्यस्य लघूकरणं स्तोकमेव शक्यसम्भवम्। स्वामिनो बहिर्भारतं पाश्चात्त्यदेशेषु परिभ्रमणस्य कल्पनाऽपि भारतीयानां दुःखमोचनं लक्ष्यीकृत्यैव प्रवृत्ता। स चाकथयत्—"अहं समग्रं भारतदेशं पर्यभ्रमम्।...सर्वत्र भयावहं दुःखदारिद्र्यं निजलोचनाभ्यामवालोकयम्। अवलोक्य चाहं विक्षुब्धोऽस्मि। नयनाभ्यां बाष्पं धारासम्पातं निरन्तरं पपात।...तस्मादेव जनसाधारणस्य दुःखमुक्तेरुपायान्वेषणार्थमेव साम्प्रतमहम् अमेरिकां गन्तुं प्रवर्ते।"

स्वामिमहोदयो दारिद्र्यार्तायाः स्वाभिजनजनतायाः समुद्धाराय धनसाहाय्यप्रार्थी भूत्वा यद् भैक्षचीवरम् आदाय धनकुबेराणां देशं अयासीत्, तस्य चीवरस्य तदात्व एवापूरणेऽपि तेषामावेदनं बधिरकर्णजापो नाजायत। सः मानवात्मनः कोमलां हृदयतन्तुं स्पृष्टवान् एवासीत्। स मानवताया अन्तराले एकतायाः विश्वभ्रातृत्वस्य च सन्देशमुदबोधयत्। तस्य मुखात् मानवसमाजं प्रति दीन-हीनानां कृते सहानुभूतिः प्रार्थनात्मना निर्गता बभूव। अद्यत्वे प्राच्यानाम् अनुन्नतानां जातीनां कृते अपरिमिता सहायता यत् पाश्चात्त्यदेशेभ्यः समायाति तदिदं श्रीस्वामिचरणैस्तदानीं तत्र प्रकटितस्य वाक्पाटवस्यैव फलम्। दातृणां मनसि राजनैतिकं प्रयोजनं नूनं स्यादेव (सर्वथा निःस्वार्था सहायता खपुष्पायितैव) तथापि प्राच्या निरवधयो नार्यो नराश्च तेन धनेन सुष्ठु उपकृताः, इदमस्वीकर्तुं दुःशकम्। तेन मानवजातेः हृदयाभ्यन्तरे यद् विश्वमानवताबीजम् उप्तमासीत् तत् श्रीरामकृष्णदेवस्य जीवनसलिलेन सिक्तमभूत्। तस्मादेव कारणात् तद् बीजं कदापि शुष्कतां न व्रजिष्यति।

स्वामिमहोदयस्य कीदृग् जीवनव्रतमवर्तत तत् तस्यैकस्मात् पत्रात् आभासते—..."एकतस्तु भारतस्य तथा विश्वस्य भाविधर्मसम्बन्धे मामकीना परिकल्पना, अपरतस्तु येषामुपेक्षितानां परोलक्षाणां

नरनारीणां दिनानि दुःखान्धतमसे क्रमशो निमज्जन्ति। येषां साहाय्य-प्रदाता यद्वा येषां सम्बन्धे किमपि विचारयिता वा कश्चिदपि न विद्यते।...ये दीनहीनास्तथा पीडिता वर्तन्ते, तेषां प्रतिकारेषु सुखसौभाग्यस्य नीतिधर्मशिक्षायाश्च प्रापणं मदीयं व्रतं मनोरथो वा वर्तते। अस्याहं पुरश्चर्यामनुष्ठातुम् अभिलषामि, अथवा मृत्युं वरिष्यामि।" विश्वकल्याणवेदिकायां तस्य हृदयमुत्सृष्टमासीत्।

खेतडी-राजप्रासादेऽपि स्वामिमहोदयस्य हृदयं तेनैव भावेन पूरितमासीत्। तेषां प्रेरणया राज्ञस्तथान्यधनिकानां च धनराशिभिर्भूयांस अनाथालयाः, दातव्यचिकित्सालयाः, निःशुल्कविद्यासंस्थाः, आर्तत्राणपरायणानि जनहितावहानि संस्थानानि च प्रतिष्ठितानि।...

खेतडीराजस्य स्निग्धानुरोधे सत्यपि श्रीस्वामी ततः प्रातिष्ठतैव। ततः अजमेरं गत्वा अहमदाबादमयासीत्। कदाचित् तन्नगरस्य समृद्धिवैभवे एतावद् प्रसृते आस्तां यत् तस्य नगरस्य तुलना लन्दननगरेण क्रियते स्म। तत्रत्य-महार्हाणामार्हत-मन्दिराणां मोहम्मदीयानां प्रथितमस्जिदानां, तथा समाधिमन्दिराणां स्थापत्यकला वरिष्ठकीर्तिस्तम्भरूपेण राजन्ते।...स्वामिचरणः तस्मिन्नेव सन्दर्भे जैनविपश्चितां निकटे जैनधर्मसम्बन्धिज्ञानम् अर्जितवान्।

ततः परं वयं तं 'वादवान'-मार्गे अकिंचन-संन्यासिरूपेण समुपलभामहे। शरीरयात्रा भिक्षान्नेन निर्वहति स्म। अहनि अध्वचलनम् रात्रौ च तरुमूलावलम्बनम्, अथवा भगवन्मन्दिरे आश्रयग्रहणम्, तेषु दिवसेषु स 'विविदिषानन्दा'ख्यया यद् वा 'सच्चिदानन्द'-नाम्ना अभ्यधीयत। भारतवर्षे अगण्येषु संन्यासिषु मध्ये सोऽप्यन्यतम आसीत्। कम्बलमेकं, परिधानवासः, दण्डः, कमण्डलुः, गीता तथा 'ईशानुसरणम्' ( Imitation of Christ ) इतीयान् परिकरस्तदीय आसीत्। स सर्वत्र अधिकं निर्धनसम्पर्क एव दृश्यते। यतस्तदीयं सारल्यम् आस्तिक्यं च स्वामिचरणं विशिष्य निकटमाचकर्ष।

'लिमडी'-इत्यत्र स्वामिमहोदय-जीवनं विपदापन्नं संवृत्तम्। एकस्मिन् भीषणाग्निपरीक्षाभ्यन्तरे स संदानितः समपद्यत। चिरं नगरेषु स परिव्राजकरूपेण पर्यट्य नगरस्थानां केषाञ्चित् साधूनां 'अखाडे' गृहीताश्रयः समभवत्। तत्रत्याः साधवः सादरं तस्य स्वागताभिनन्दनं विदधाना विजने सदने निवासप्रबन्धं चक्रुः। अनुकूलस्थानं वीक्ष्य स्वामी तदध्यवसत्। परन्तु कतिपयदिनाभ्यन्तर एव तेनाभिज्ञातं यत् तत्स्थानम् समीचीनं नासीत् इति। तत्र नानाविधा महिला आगच्छन्ति, धर्मं व्यपदिश्य असत्कार्यमाचर्यंत। ते साधवः 'बीजमार्ग'-सम्प्रदायानुगामिन आसन्। ते ब्रह्मोपासनामनुतिष्ठन्ति स्म। मन्त्रोच्चारणस्य आडम्बरोऽप्यलक्ष्यत। वस्तुगत्या ते प्रजावृद्धिं विदधिरे। स्वामिनः शिरः प्रताडितमिव प्राकम्पत। कतिपयदिवसाभ्यन्तरे ततः पलायितुकामनया यदैव द्वाराभिमुखं गत्वा तदुद्घाटनाय निरीक्षितं तत्र द्वारं मुद्रितमवतिष्ठते बहिः। स्वामिचरणस्य दिनचर्यायां वैलक्षण्यमालक्ष्य मस्करिणस्ते तत्र सावधाना अवर्तन्त। तदा स्वामी महोदयोऽवागच्छत् यत् असौ कारागारे निगडित इति।

'अखाडाध्यक्षः' कदाचित् स्वामिपादमुपेत्येदं जगाद यत् "त्वं ब्रह्मचर्यम् अनुतिष्ठसि, महान् साधकोऽप्यसि। वयम् सम्भूय एकस्य व्रतस्य उद्यापनं करिष्यामः, त्वं स्वतपस्यायाः फलं नः प्रयच्छ, त्वया ब्रह्मचर्यस्य भङ्गो विधेयः।" इति। स्वामी जोषमवस्थाय सविशेष मुत्कण्ठया भगवत्सान्निध्ये कातरां प्रार्थनां वितेने।

एको बालकः स्वामिपादपार्श्वे अन्वहमायाति स्म। स स्वामिपादे समधिकं स्निह्यन् आसीत्। अन्येद्युः आगते तस्मिन् स्वामीमहोदयः स्वसङ्कटं विलिख्य तद्धस्ते निदधानः अब्रवीत्—"कथमपि त्वमिदानीमिदं पत्रं ठाकुरसाहब-( लिमडी-नृप )-हस्तं प्रापय। लिमडीराजस्य आस्थानं सर्वोऽपि अवारितं यातुमपारयत्। बालकहस्तात् तद् पत्रमासाद्य राजा स्वामिमहोदयसाहाय्याय कांश्चिदङ्गरक्षकभटान्

प्राहिणोत्। श्रीस्वामिपादः प्रासादमभ्येत्य समस्तघटनाया विवरण-माख्यातवान्।

राज्ञोऽनुरोधविशेषात् स्वामी लिमडीस्थानम् इतोऽपि कतिचिद् दिवसान् अध्यवात्सीत्। 'वीजमार्गसम्प्रदायस्य' विषये स्वामिना श्रुत-चरमासीत् यत् किञ्चित्। परन्तु तदनुगामिनः ईदृशं कुत्सितं कृत्य-माचरन्ति, नासीत् सम्भावितम्। भारते धर्मोपदेशेन ईदृशा आचार-भ्रष्टाः कति वा सम्प्रदाया जनिमलभन्त, ते सीमकल्पनातिगाः। ते धर्मं समाजं च कलंकांकितौ अकार्षुः। धर्मस्य छलेन भीषणान् अत्याचारान् प्रवर्त्य तेऽकृतविद्यान् सरलान् लोकान् विपथगान् वितेनिरे।...

स्वामिपादस्य प्रत्यागमेन ठाकुरसाहवः भृशं प्रासीदत्। स राज्य-प्रसिद्धान् पण्डितान् आमन्त्र्य सभामायोजयत्। स्वामी तत्र अध्यात्म-वादमालम्ब्य प्रवचनं चकार। तस्य व्याख्यानं चाकर्ण्य सर्वेऽपि जनाः एककण्ठेन स्वामिपादस्य वैदिकधर्मस्य व्याख्यातृवरिष्ठताम् उद्घोषयन्। ततः श्रीस्वामी प्रस्थाय 'जूनागढं' वव्राज। तस्य जीवनवृत्त-वैमल्यं समन्तात् प्रससार। सर्वत्र सर्वेऽपि तस्य स्वागतार्थं समुत्सुका आसन्। मध्ये पथि भावनगरसिहोरप्रभृतिषु स्थानेषु सर्वत्र राजा-भ्यागतरूपेण तस्य स्वागतसमारोहाः सविजृम्भणं समपद्यन्त।

०—

जूनागढस्य प्रधानामात्यो हरिदासविहारिदासः महत्या श्रद्धया सह स्वामिनं निजगृहमानयत्। स्वामिना सह वार्तालापं कृत्वा प्रधानामात्यः तस्य व्यक्तित्वं प्रति एतावदधिकं श्रद्धासम्पन्नः आकृष्टश्चाभवत्, यत् सः प्रतिदिवसम् उच्चान् राजकर्मचारिणः सभापण्डितान् तथा अन्यविशिष्टलोकांश्च स्वगृहे आहूय स्वामिनः धर्मालोचनस्य प्रबन्धमकरोत्। स्वामिनः मुखात् वैदिकधर्मस्य मौलिकीं व्याख्यां श्रुत्वा सर्वे मुग्धा अभूवन्। स्वाम्यपि तस्मिन्नवसरे जनसाधारणस्य उन्नतौ एव भारतस्य भविष्यं पूर्णतया निर्भरम्, इति सर्वेषां हृदयेषु गम्भीरमंकितमकरोत्।...

तदनन्तरं स्वामी हिन्दु-मुस्लिम-बौद्धानां तथा जैनानाञ्च सम्प्रदायस्य महापवित्रतीर्थं गिरिनारपर्वतं समागमत्। प्राचीनं स्थापत्यशिल्पं तथा धर्मभावातिरिक्ता तस्य स्थानस्य प्राकृतिकी शोभा एवं गाम्भीर्यं तस्य मनसि विशिष्टं प्रभावं अंकितमकुर्वन्। स ऋषेर्दत्तात्रेयस्य पदचिह्नं द्रष्टुं सर्वोच्चशिखरं (३३०० फुट) आरूढः। आनन्देन शान्त्या च तस्यान्तरम् आपूर्यत। भारतस्यातीतगौरवस्मरणं तदीयचित्तमालोडितमकार्षीत्।❀ स एकस्यां निर्जनगुहायां कतिचन

❀ तस्यान्तरे भारतस्य भविष्यविषये या कल्पना आसीत् तस्याः सम्बन्धे सोऽब्रवीत्—"...किन्तु भावि भारतं प्राचीनभारतात् उन्नतं भविष्यति। यस्मिन् दिने रामकृष्णः जन्म लेभे तस्माद् दिवसादेव वर्तमाने भारते सत्ययुगस्याविर्भावोऽभवत्। यूयमेव तस्य सत्ययुगस्योद्बोधनं करिष्यथ एवं विश्वासं मनसि निधाय कार्यक्षेत्रेऽवतीर्णा भवत।"

दिवसान् ध्यानमग्नतया व्यतीयाय। किन्तु तस्यां गुहायामपि भारतस्य दुःखदारिद्र्य-मोचन-चिन्ता तस्यान्तरं मथितमकरोत्। स ध्यानमग्नतया समधिकदिनपर्यन्तं स्थातुं नाशकत्।...जूनागढं परावर्त्य अनेकस्थानेषु प्रचारं कुर्वन् पोरबन्दरे उपस्थितो बभूव।

पोरबन्दरे अथवा सुदामापुर्यां स राज्ञोऽतिथिरासीत्। तस्य प्रधान-मन्त्री पूर्वमेव स्वामिनः सम्बन्धे विशेषरूपेणाश्रृणोत्।

पोरबन्दरे स्वामी कतिचनमासपर्यन्तं अवसत्।* तत्र प्रधानामात्यः शंकरपाण्डुरङ्गः अद्वितीयो विद्वानासीत्। तस्मिन् समये सः वेदस्या-नुवादं कुर्वन्नासीत्। स्वामी तस्यानुवादकार्ये सहायतां अददात् एवं तस्मात् पातञ्जलमहाभाष्यस्याध्ययनं समाप्तं चकार। पण्डितः उत्साहेन तं फ्रांसभाषामपि अपाठयत्। स्वल्पैरेव दिवसैः तस्या भाषाया यथेष्ट-मधिकारं प्राप्तं दृष्ट्वा पण्डितः प्रसन्नो भूत्वा अभाषत—"स्वामिन्! भविष्यति अस्या भाषाया ज्ञानं भवत्कार्ये विशेषतया सहायकं भविष्यति।"

वेदस्यानुवादसमये तस्यापूर्वां बुद्धिं तथा प्रतिभाञ्च विज्ञाय पंडितोऽवोचत्—"स्वामिन्! भवतः प्रतिभायाः शक्तेश्च सम्मानकर्ता मनुष्यः अस्मिन् देशे विरलः अस्ति।...ममैवं प्रतिभाति इदानीन्तने भारते भवतः योग्यं क्षेत्रं न वर्तते। भवान् पाश्चात्त्यदेशान् गच्छतु तथा तत्राग्निं प्रज्वाल्य आयातु, तदा द्रक्ष्यति भवान् यद् एतद्देशीया

---

* परिव्राजकजीवनेऽपि स्वामिनः प्रधानं कार्यमभवत्...'वाणीप्रचारः।' तस्यैकस्मिन् पत्रे लिखितमासीत्—"...मया जगते किंमपि सन्देष्टव्यमस्ति। तमहं निजभावेन वदिष्यामि। अहं स्ववक्तव्यानि हिन्दूरूपेण न प्रकटयिष्यामि, नापि ईसाईरूपेण, अन्यस्य वा कस्यापि रूपेण। अहं निजरूपेणैव प्रकट-यिष्यामि। मुक्तिरेव मम धर्मः—"...श्रीरामकृष्णस्य जीवनं तथा तस्य वाण्येव स्वामिनः वाणी आसीत्।

जना भवतः प्रत्येकवचनानुसारं उपविशन्ति तथा उत्तिष्ठन्ति। भवान् झंझावात इव पाश्चात्त्यदेशेषु आक्रमणं करोतु तथा तेषु देशेषु विजयं लब्ध्वा प्रत्यागच्छतु।"

स्वामी कतिचित् क्षणान् तूष्णीं स्थित्वा उवाच—"पण्डित-महोदय! एकस्मिन् दिने प्रभासस्य सामुद्रे तटे स्थित्वा क्षितिजोपरि दृष्टिं निधायाहं तरङ्गमालाया अनुपमां क्रीडां पश्यन्नासम्। सहसा मम तथाऽनुभवोऽभूत् अस्या विक्षुब्धतरङ्गमालाया अतिक्रमणं कृत्वा मया सुदूरदेशे गन्तव्यमस्ति, परन्तु कथमिदं सम्भवं भविष्यति इत्यहं ज्ञातुं नाशकम्।" यथासमयं पण्डितस्य भविष्यवाणी वास्तवरूपेण परिणता बभूव।...

तस्मिन् समये भारतस्योन्नतये तस्य मानसं कियदवधि व्याकुलं भवति स्म तत् कोऽपि राजपुरुषः किं वा शिक्षितव्यक्तिः तेन सह किंचित्समये वार्तालापं कृत्वैव ज्ञातुं प्राभवत्। तस्य हृदयस्य तन्त्र्यां सर्वदा एक एव स्वरः अवाद्यत—'भारतस्य कल्याणम्।'

आर्यसभ्यतायाः पुनरुत्थानस्य गम्भीरा चिन्ता तस्यान्तरं विक्षुब्ध-मकरोत्। पाश्चात्त्यसभ्यताया मोहपंकात् भारतस्योद्धारसाधनचिन्ता तम् इयदधिकं व्यथितमकार्षीत् यत् करुणाया आवेगेन समये समये स रुरोद। स अन्तरस्यान्तस्तले अनुभवमकरोत्—"भारतभूः संसारस्य धर्मजननी अस्ति तथा आध्यात्मिकभावस्य एवं मानवसभ्यतायाः आदिजन्मभूरपि विद्यते।" भारतं जगत्सभायाः श्रेष्ठे आसने उपवेश-यितुं तस्य हृदयं पर्याकुलमासीत्। पाश्चात्त्यदेशेषु गमनानन्तरं भारतस्य महत्त्वं स इतोऽपि गम्भीरतया उपलब्धं चक्रे। न्यूयार्कतः जनवरी-चतुर्विंशदिने (१८९५ ई०) स एकस्मिन् पत्रेऽलिखत्—"...परश्शतानाम् अपूर्णतानां सत्त्वेऽपि भारतभूमिरेव एकमात्रं स्थानमस्ति यत्र आत्मा मुक्तेः तथा भगवतः सन्धानं लभते। पाश्चात्त्यानां बाह्याडम्बरः सर्वथा-ऽन्तःसारशून्य एवम् आत्मनः बन्धनस्वरूपोऽस्ति।"...पाश्चात्त्यानां

वैभवान्तः स्वामिनो निःश्वासो रुद्धोऽभवदिव। सोऽलिखत्—"तत् कौपीनं, मुंडितो मस्तकः, वृक्षस्याधः शयनम् तथा भिक्षान्नभोजनम्—हा! इमानि सर्वाण्येव मदीयतीव्राकांक्षाया विपयस्वरूपाणि सन्ति।..."

भारत-महिमा स्वामिनोऽन्तरं परिपूर्णं कृत्वाऽस्थापयत्। अस्मात् कारणात् भारतभूमेः महत्त्वसम्बन्धे सः अनेकस्थानेष्वकथयत्—"अस्माकं पवित्रा मातृभूमिरेव धर्मस्य तथा दर्शनस्य देशो वर्तते, धर्मवीराणां जन्मस्थानम् एवं त्यागस्य क्षेत्रमस्ति। केवलम् अस्मिन्नेव देशे सुदूरातीतकालात् वर्तमानकालं यावत् मानवजीवनस्य महत्तमा आदर्शाः विद्यमानाः सन्ति। तत्त्वदृष्टेः भगवत्परायणतायाः तथा नीतिविज्ञानस्य प्रसूतिभूतमिदं भारतं माधुर्यस्य कोमलतायाः एवं मानवप्रीतेः खनिरस्ति। इदं सर्वम् अधुनाऽपि वर्तते तथा समस्त-संसारस्यानुभवबलेनाहं साग्रहं वक्तुं शक्नोमि यत् एषु विषयेषु भारत-मद्यापि संसारस्य सर्वासां उन्नतजातीनामग्रगामि अस्ति।...तादृशदेशस्य वयं सन्तानाः स्मः। यदा यूनानस्य जन्मैव नाभूत्, रोमस्य वार्ता केनाऽपि विचारिताऽपि नाभूत् तथा वर्तमानयुरोपनिवासिनां पूर्व-पुरुषाः विचित्रैरङ्गरागै रंजिताः केवलमरण्यवासिनः असभ्याः आसन्, तस्मिन् सुदूरे प्रागैतिहासिकयुगेऽपि भारतं स्वसंस्कृतेः साधनायां समुन्नतमवर्तत। ततोऽपि प्राचीनयुगेषु, येषामावरणस्यापसारणे जन-श्रुतिरपि संकुचिता भवति, तस्मात् कालात् वर्तमानसमयपर्यन्तं भारतात् अनेका उच्चभावानां शान्तेः तथा शुभेच्छाया वाण्यः संसारे प्रसरन्त्यः समायान्ति।

संसारस्येतिहासम् आलोचयता कुत्रापि कस्यापि सुमहत आदर्शस्य संकेते प्राप्ते एव दृश्येत यत् तस्य जन्मस्थानं भारतवर्षमेवास्ति।... यथार्थतः अस्मन्मातृभूमेः निकटे जगतः ऋणमसीमास्ति।...परस्स-हस्रवर्षेभ्यः विपत्तीनां तथा विदेशीयानां विधर्मिणामाक्रमणेषु

सत्स्वपि हिन्दुजातिः कथं मृता न जाता ?···तादृश्यपि धारणाऽत्र-स्थापनीया यत् विश्वसभ्यताया भाण्डागाराय किमपि दातुमेव भारतं साम्प्रतमपि जीवति ।

मनुष्याणां नवजीवनेन संजीवनम्, तथा पशुश्रेणीकानां मनुष्याणां देवमानवेषु परिणमनम् अनयोर्द्वयोर्महतोः जीवनव्रतयोः उद्यापनं कर्तुम् अस्माकमियं देशमाता सम्राज्ञीव धीरपदक्षेपेण अग्रगामिनी सती चलति । स्वर्गेऽथवा मर्त्यलोके तादृशी काऽपि शक्तिर्नास्ति या तद्गतिं रोद्धुं शक्नुयात् ।···मानवजातेः आध्यात्मिकभावेन प्रबोधनमेव भारतस्य मूलं जीवन-व्रतं तस्यास्तित्वस्य परमा प्रतिष्ठा तथा चरम-सार्थकता अस्ति ।···यथार्थतः यावत्पर्यन्तं भारतस्याध्यात्मिकदृष्टि-भङ्गी स्थिरा तिष्ठति तथा यावत्पर्यन्तं भारतनिवासिनः निजप्राण-स्वरूपं धर्मं स्वीकुर्वन्तः स्थास्यन्ति तावत्पर्यन्तं भारतीयजातेर्विनाशो न भविष्यति ।···"

तस्मिन् समये स निजहृदये एकस्याः प्रचण्डविस्फोटकशक्तेः अनु-भवमकरोत् । श्रीरामकृष्णदेवस्य भविष्यवाण्याः स्मरणं तस्या-जायत ।*

पोरवन्दरात् द्वारका । श्रीकृष्णस्य लीलास्थलभूता द्वारकाऽद्य समुद्रा-भ्यन्तरे अस्ति । शंकराचार्यप्रतिष्ठितस्य शारदामठस्यैकस्मिन् निर्जने प्रकोष्ठे आश्रयं गृहीत्वा स्वामी अधिकांशसमये ध्यानस्थः अतिष्ठत् । एकस्मिन् दिने समुद्रतीरे उपविश्य ध्यानं कुर्वतः तस्य भाविभारतस्योज्ज्वलं

---

* पोरवन्दरे तस्य गुरुभ्रातुः परमान्तरङ्गस्य स्वामित्रिगुणातीतस्य सहसा समागमे जाते विवेकानन्दोऽवादीत्—"भ्रातः ! शारद ! श्रीठाकुरः मत्सम्बन्धे यदपि वाक्यमूचे इयद्दिनानन्तरं सम्प्रति तस्य सत्यताया उपलब्धिः भवति ।··· एवं प्रतिभाति ममान्तः या शक्तिरस्ति तया समस्तं संसारम् अस्तव्यस्तं कर्तुं शक्नुयाम् ।"

चित्रं मानसपटे उदितं बभूव। आशया तथा आनन्देन च तस्य चित्तमपूर्यत।...

*  *  *

इतः परं माण्डवी। सः नारायणसरोवर-आशापुरी-कोटोघरप्रभृति-तीर्थस्थानानां दर्शनमकरोत्। तत्पश्चात् पालितानास्थाने अनेकजैन-मन्दिरदर्शनेन धर्मभूमेः भारतस्य महिम्ना स विह्वलोऽजायत। पालितानायाः शत्रुञ्जयपर्वतशिखरस्य प्राकृतिकं सौन्दर्यं तं मोदपरवशं चकार। तदनन्तरं बडोदां गत्वा खाण्डोआ-इत्यत्र समाजगाम। भ्रमणं कुर्वन् ईश्वरेच्छयेव वकील-श्रीहरिदासचट्टोपाध्यायस्य गृहसम्मुखे उपस्थितोऽभवत्। हरिदासः न्यायालयात् परावृत्य अपश्यत् यत् तस्य गृहसमक्षम् एकः संन्यासी तिष्ठति। साधारणवार्तया सोऽजानात् यत् अयं साधारणसंन्यासी नास्ति। आकृष्टो भूत्वा स निजगृहे वासार्थं तस्य सम्मुखे साग्रहप्रार्थनामकरोत्।

विवेकानन्दः खाण्डोआ-स्थाने प्रायः त्रीन् सप्ताहानवसत्। समस्त-नगरविशिष्टव्यक्तीनां समावेशः हरिदासबाबूगृहेऽजायत। तस्य मुखाद् उद्दीपनामयं धर्मप्रसंगं, शास्त्रस्य सरलां व्याख्यां तथा मधुरभजन-संगीतं श्रुत्वा सर्वेऽपि सविशेषं आनन्दिता अभूवन्। शिकागोधर्म सभावार्तां श्रुत्वा खाण्डोआयामेव तस्य मनसि सम्मेलने योगदानस्य इच्छा समजायत। हरिदासबाबूप्रश्नस्य उत्तरे तेन कथितम्—"यदि कोऽपि यातायातव्ययं दद्यात् तदा मम गमने काऽप्यापत्तिर्नास्ति।"

खाण्डोआनिवासिनाम् आदरं आतिथ्यं तथा सहृदयतां चोपेक्ष्य स मुम्बापुरीं जगाम। स रामेश्वरपथे अग्रेसरो भूत्वा प्राचलत्। हरिदास-महाशयः निजभ्रातृनाम्ना परिचयपत्रं दत्वा बम्बई-'टिकेट'मेकं क्रीत्वा दत्तवान्।

१८९१ ई० जुलाईमासस्यान्तिमे भागे विवेकानन्दः मुम्बापुरीं प्राप। हरिदासबाबूभ्रातुः सहायतया प्रसिद्धबेरिस्टर-छविलदासभवने निवास-

मकरोत्। अप्रत्याशितरूपेण एकस्मिन् दिने वम्बई-नगरे गुरुभ्रात्रा स्वामिनाऽभेदानन्देन तस्य सङ्गतिरभवत्। अनेकवार्तानन्तरं विवेकानन्दोऽवोचत्—"पश्य काली, मदन्तरे इयती शक्तिरुत्पन्ना वर्तते, भयं जायते, यदहं स्फुटितो भवेयम्।"

अभेदानन्दः विस्मितोऽभवत्। स्वामिनो हृदयस्था उत्कण्ठा तमप्यस्पृशत्। पश्चात् सोऽवदत्—"तस्मिन् समये स्वामिनोऽन्तरे वह्निः प्राज्वलदिव। भारतस्य प्राचीनस्य आध्यात्मिकभावस्य पुनः प्रतिष्ठायाश्चिन्ता तस्य सम्पूर्णे हृदयेऽधिकारमकार्षीत्। तस्य दर्शन एव प्रतीयते स्म यत् स नूनम् एकः प्रबलो झञ्झावातः अस्ति।"

छविलदासस्य भवने विवेकानन्दः पर्याप्तां वेदान्तचर्चामकरोत्। अनेके गण्य-मान्या एवं शिक्षिता जनाः तन्मुखात् वेदान्तव्याख्यां श्रुत्वा मुग्धा अभूवन्।* स कतिचन सप्ताहान् मुम्बापुरीमध्यवसत्। तस्मिन् स्वल्पे समये एव तस्य ख्यातिः समन्तात् प्रासरत्। तदनन्तरं स पूनां जगाम। तदानीं तस्य स्वास्थ्यं समीचीनं नासीत्। स शकट्या द्वितीय-

---

* विवेकानन्दस्वामी प्राच्य-पाश्चात्यदेशेषु यद् वेदान्तप्रचारं चकार तस्य संक्षिप्तः परिचयः तस्यैकस्मात् पत्रात् ज्ञायते। ६ मईमासे १८६५ ई० वत्सरे आलासिंगमालिखत्…"सर्वे धर्माः वेदान्ते निहिताः सन्ति, अर्थात् वेदान्तदर्शनस्य द्वैतम्, विशिष्टाद्वैतम्, एवं अद्वैतम्, इमानि त्रीण्यपि मतानि तिसृणां कक्षाणामथवा भूमिकानामन्तः सन्ति तथा एकस्मात् परमपरमायाति। इमानि त्रीण्यपि मनुष्यस्याध्यात्मिकोन्नतेः तिस्रो भूमिकाः सन्ति। एतेषां प्रत्येकस्य प्रयोजनं विद्यते। इदमेव धर्मस्य वक्तव्यम्। भारतस्य विभिन्नजातीयानाम् आचारव्यवहाराणामभ्यन्तरे प्रयोगफलस्वरूपतः वेदान्तदर्शनं यद् रूपमगृह्णात् तदेव यथार्थो हिन्दुधर्मः। (स्वामी हिन्दुधर्मशब्दस्य स्थाने वेदांतधर्मशब्दव्यवहारम् उपादिशत्)। वेदान्तधर्मस्य प्रथमं सोपानम् अर्थात् द्वैतवादः यूरोपजातीयानां भावान्तः ईसाईधर्मरूपेण परिणतो जातः। सेमिटिक-जातीयानां भावाभ्यन्तरात् मुस्लिमधर्मस्य रूपेण परिणतो बभूव। अद्वैतवादः योगानुभूतेः

श्रेण्यां यात्रामकरोत्। तस्यां कक्षायामन्येऽपि त्रयो माराठी-सज्जनास्तत्र आसन्। एकं पर्यटकं संन्यासिनं द्वितीयश्रेण्याम् आसीनं दृष्ट्वा ते अक्षुभ्यन् तथा परस्परं संन्यासिसम्प्रदायस्य आङ्गलवाण्यां कटुमालोचनां चक्रुः। एषु सहयात्रिकेषु अन्यतमः बालगङ्गाधरतिलकः आसीत्। यात्रिकाणां मनस्यासीत् यत् संन्यासी आङ्गलभाषां न जानातीति। तस्मात् ते संन्यासिनां चर्चां कुर्वाणाः मनसि प्रसन्ना अभूवन्। आत्मसुखाभिलाषिणाम् एषामकर्मण्यानां संन्यासिनां वृन्दमेव भारतवर्षस्याधःपतने कारणमस्ति। एतान् अस्माद् देशात् अनिष्कास्य देशस्य मुक्तिः न भवेत्, अस्मिन् विषये केवलं तिलकः विभिन्नं मतं प्रकटीकृतवान्।

स्वामी तूष्णीं शृण्वन्नवर्तत, किन्तु आलोचना सीमानं यदा प्राप तदा स तूष्णीं स्थातुं नाशकत्, आलोचना-वार्तालापे भागं गृहीतवान्।

---

रूपे बौद्धधर्मरूपे परिवृत्तो जातः इत्यादि। इदानीं 'धर्मः' इत्युक्ते वेदान्त एव प्रतीयते। विभिन्नजातीयानां विभिन्नप्रयोजनैः पारिपार्श्विकतया तथा अन्यान्यावस्थानुसारं तस्य प्रयोगः विभिन्नरूपे अवश्यमेव भविष्यति। यूयं जानीत यत् मूलं दार्शनिकं तत्त्वमेकमस्ति यद्यपि, तथाऽपि शाक्तशैवादिसाम्प्रदायिकाः स्वस्वविशेषधर्ममतस्य तथा अनुष्ठानपद्धतेः अभ्यन्तरे तस्मै ( वेदान्ताय ) रूपं प्रायच्छन्।...

अद्यावधि संसारे यावतां धर्माणामभ्युदयो जातः सर्वे वेदान्तधर्ममूलकाः, अथवा वेदान्तधर्मस्य विभिन्नाः शाखाः सन्ति। तेषां शाखाधर्माणां समष्टिरूप एव वेदान्तधर्मः अस्ति। भविष्यत्यपि कियतामपि धर्माणामभ्युदयः कुतो न भवेत्, सर्वे वेदान्तधर्ममूलका भविष्यन्ति। द्वैतं, विशिष्टाद्वैतम्, अद्वैतम्, इमानि त्रीणि मतान्यतिलंघ्य किमपि धर्ममतम् उत्पन्नं न भवेत्। श्रीरामकृष्णः तस्यैव वेदान्तधर्मस्य मूर्तिः अस्ति। स सर्वभावमयः तथा स्वर्वधर्मस्वरूपो वर्तते।

सोऽब्रवीत् "प्रत्येकयुगे संन्यासिन एव संसारस्याध्यात्मिकभावधारां सबलां तथा अक्षुण्णां व्यतन्वन्। बुद्धः क आसीत्? शंकरश्च कः अवर्तत? तेषामाध्यात्मिकमवदानं भारतवर्षम् अस्वीकर्तुं न प्रभवति।" अचिरादेव तस्य मुखात् गम्भीरस्य दार्शनिकतत्त्वस्य धर्म-क्रम-विकासस्य तथा देश-विदेशेतिहासस्य सम्बन्धे अनेकविधं वक्तव्यमाकर्ण्य सर्वेऽपि स्तब्धा अभूवन्। स्वामिनः विशुद्धाङ्गलभाषाया अद्भुत-प्रतिभायाश्च समक्षं श्रोतॄणां मस्तकं स्वयमेव विननाम। लोकमान्य-तिलकः स्वामिनो गम्भीरपाण्डित्येन सविशेषं मुग्धोऽभूत्। पूना-वाष्पयान-विश्रामालये अवतरणवेलायां सः स्वामिनं निजगृहं गन्तुं समामन्त्रयत। अस्मिन् समये विवेकानन्दः तिलकेन साकं कानिचन दिनानि पूनानगरेऽवसत्। तस्य पाण्डित्यं, गम्भीरा बुद्धिशक्तिः, स्वदेशानुरागः एवं दीनदुःखिषु समवेदना च तिलकस्य मनसि प्रगाढं प्रभावमापादयामासुः। देशमातुः मुक्तिसाधनस्य नूतनं मन्त्रं स स्वामि-मुखात् शुश्राव।

तस्मिन् समये लिमडीराजः महाबलेश्वरेऽस्तीति ज्ञात्वा स्वामी तेन सह सङ्गन्तुं ययौ। अप्रत्याशितरूपेण गुरुदेवं प्राप्य राजा सुतरामा-नन्दितोऽभूत्। स्वामिनं निजराज्यं नेतुम् इच्छायां प्रकटितायामेव स्वामी तं जगाद—'एका महाशक्तिः मां परिचालयन्ती वर्तते···मम गुरुदेवः ममोपरि यस्य महाकार्यस्य भारं न्यस्तवान् तस्य परिसमाप्ति-पर्यन्तं विश्रामग्रहणस्य नास्त्यवकाशः।···जीवने कदाऽपि विश्राम-ग्रहणस्यावकाशे प्राप्ते भवता सह निवासं करिष्यामि।" स्वामी निज-जीवने तादृशमवकाशं कदापि नैवाप। अन्तिमदिनपर्यन्तं स अवि-श्रान्तं कर्म कुर्वन्नेव न्यवसत्।···

* * *

अथ विवेकानन्दस्वामी क्रमशः कोल्हापुरं मरमागोवां तथा वेल-गाँवं गत्वा मैसूरराज्यान्तर्गतं बेंगलूरनगरं समाययौ। प्रच्छन्नरूपेण

कानिचन दिनानि तत्रावसत्। किन्तु स्वल्पैरेव दिनैः स अनेक-व्यक्तीनां दृक्पातपात्रतां जगाम। मैसूरप्रधानामात्यः सर के. शेषाद्री-अय्यर-महोदयः स्वामिना वार्तालापं विधाय आश्चर्यचकितः संवृत्तः। कोऽयं सौम्यः अस्ति? समस्तं शास्त्रम् अस्य रसनाग्रे नृत्यति, प्रतिभा-दीप्तं मुखमण्डलं, ज्योतिर्मये विशाले लोचने, कोऽपि देवलोकनिवासी भूमण्डलमवतीर्ण इवास्ति। स स्वामिनं निजसौधे सादरं निवासयामास। तत्समयावधि मैसोर-नगरस्यानेके शिक्षितास्तथा उच्चपदस्था अधि-कारिणश्चास्य तरुणयतेः ईश्वरीयशक्त्याऽऽकृष्टाः संवृत्ताः। क्रमशः विवेकानन्दस्य वार्ता श्रीचामराजेन्द्रवडियारमहाराजस्य कर्णान्तिकं प्राप। स स्वामिना साकं परिचितो भवितुं सविशेषमाग्रहं प्रकटी-चकार।

शेषाद्री-अय्यरः स्वामिनमादाय राजसभायामुपतस्थौ। स्वामिनं दृष्ट्वैव महाराज विशेषरूपेण मोहितो बभूव। भूरिपरिचये जाते स स्वामिनं राजातिथिरूपेण निजप्रासादे निवासयितुमिच्छां प्रकटीचकार। एवं तस्य निवासस्य कृते सौधस्यैकमंशं रिक्तमकार्षीत्। स्वामी सविस्मयं तमपृच्छत्—"एतावद्भिः प्रकोष्ठकैः किं स्यात्? भूमिशय्या-प्रसारयोग्यं स्वल्पं स्थानमेव पर्याप्तमस्ति।"

कतिपयदिवसाभ्यन्तरे एव घनिष्ठता ववृधे। महाराजः तादृश-त्यागस्य पवित्रतायाः एवं प्रेम-ज्ञानयोश्चापूर्वं समावेशं क्वाप्यन्यत्र नाद्राक्षीत्।

एकदा राजप्रासादे पण्डितमण्डल्याः सभैका समाहूता। प्रधान-मन्त्री सभापतिरासीत्। पण्डिता एकैकशः धर्मस्य तथा दर्शनस्य सम्बन्धे व्याख्यानं ददुः। विवेकानन्दोऽपि कृतेऽनुरोधे किञ्चिद् वक्तुं समुत्थितः। तस्य तेजोभासुरं वदनं विलोक्य सर्वे सभासदः स्तब्धा अभूवन्। स वेदान्तस्य जटिलतायामपतित्वा अन्यदार्शनिकमतैः सार्धं वेदान्तस्य समन्वये तथा वैयक्तिके जीवने वेदान्तस्योपयोगितां प्रयो-

गञ्चात्यन्तसारल्येन सर्वानवगमयामास। तदीयविचारस्य मौलिकता दृष्टेः प्रसारिता तथा प्रकटनशक्तिश्च सर्वेषामुच्चप्रशंसाया विषया बभूवुः।···

स्वामिनोऽद्भुतमपरिग्रहं विलोक्य जनाः चकिता जाताः। एकस्मिन् दिने प्रधानामात्यः निजसचिवमादिशत्—"स्वामिनमादाय विपणिं याहि। यद् यद् वस्तु तस्मै रोचेत, कियदपि तस्य मूलं भवेत्, तत् क्रोणीहि।" स्वामी विपणिमयासीत्। बालकवत् भ्रामं भ्रामं सर्वमपश्यत्, परं किमपि वस्तु स नाक्रीणात्। सचिवेन क्रेतुमाग्रहे क्रियमाणे सोऽवोचत्—"वरं, यदि भवान् न मुञ्चति, तदा एकां धूमवर्तिं (सिगरेट) क्रीणातु।"

महाराजः दिनानुदिनं स्वामिनं प्रति गाढश्रद्धासम्पन्नोऽभवत्। एकस्मिन् दिने स प्रधानामात्येन सह स्वामिनं निजकक्षामामन्त्र्य सादरमुपावेशयत् तथा न्यवेदयत् "यतिवर! अहं भवतः सेवां कर्तुमभिलषामि। तमधिकारं मह्यं दत्वा मां धन्यं करोतु।"

विवेकानन्दस्वामी स्वोद्देश्यं प्रकटयन् आह—"देशस्य कार्यमेव मम कार्यम्। अकिञ्चनानां सेवैव मामकीना सेवा अस्ति। श्रीमान् देशस्य सेवां तनोतु, देशं समुन्नतं तथा समृद्धं करोतु। तेनैवाहं प्रसन्नो भवेयम्। श्रीमान् राजा अस्ति, साधारणजनानां समुन्नयनस्य शक्तिः श्रीमति वर्तते। निर्धनानां दारिद्र्यम् एवमज्ञानञ्च विलोपयतु। सम्पत्तौ तथा शिक्षा-दीक्षायां देशवासिनां समुन्नतिं सम्पादयतु।···"तदनन्तरं स्वामी पुनरूचे—"अहं मन्ये यदस्माकम् आध्यात्मिकभावं—वेदान्तधर्मं पाश्चात्त्याः शिक्षणीयाः तथा तस्य विनिमये पाश्चात्त्येभ्यः कृषः शिल्पं विज्ञानं तथा ऐहलौकिकोन्नतये यदप्यावश्यकं भवेत् तत् सर्वं अस्माभिः शिक्षणीयं भविष्यति। एवं प्राच्य-पाश्चात्त्यसभ्यतयोः सम्मेलनेन नवीनायाः सभ्यताया उद्भवो भविष्यति। तेनैव संसारस्य

कल्याणं सम्पत्स्यते। श्रीरामकृष्णस्य जीवनादर्शेन प्राच्य-प्रतीच्य-सभ्यतायाः सङ्गमभूमिं प्रस्तोतुम् अहं निजजीवनं समापर्यम्।"

स्वामिना हृदयस्यावेगेन प्राच्य-प्रतीच्यसभ्यतयोः तथा भावयोः आदान-प्रदाने कर्तुं पाश्चात्यदेशेषु वेदान्तवाणीं वोढुम् इच्छायां प्रकटितायामेव * महाराजः सानन्दं सर्वं व्ययं दातुं प्रस्तावमुपस्थापितवान्। किन्तु स्वामी आवेदयत्—"अधुनैव सन्दर्भः नोपस्थितः। श्रीभगवतः आदेशस्य कृते मया प्रतीक्षा कार्या।"

मैसूरत्यागसमयः आसन्नः अस्ति। स्वामी रामेश्वरस्य दर्शनाभिलाषं प्रकटितवान्। महाराजः सविषादमवोचत्—"न हि स्वामिमहोदय! साम्प्रतं भवन्तं केनापि विधिना नाहं त्यक्ष्यामि। भवान् इतोऽपि कानिचिद् दिनानि निवसत्वत्र।"

किन्तु स्वामिनः संकल्पं दृढं दृष्ट्वा महाराजः सविनयमभ्यर्थयत्—"भवतः किमपि स्मारक-चिह्नं निधातुं वाञ्छामि। भवान् आज्ञां ददाति चेत् तदा भवतः कण्ठस्वरम् (रेकार्ड) अङ्कितं कृत्वा स्थापयामि, येन भवतः प्राणोन्मादो स्वरोऽस्मत्कर्णयोः परिगुञ्जतु।"

स्वामी सम्मतिं प्रादात्। अङ्कनकार्यं (रेकार्ड) संवृत्तम्। स चाङ्कितः स्वरः प्रासादे दीर्घकालपर्यन्तं निहित आसीत्।

महाराजः स्वामिनं गुरुवत् समाद्रियत। एकस्मिन् दिने स जगाद

---

* १८९२ ई० वर्षस्य सितम्बरस्य विंशे दिने लिखितादेकस्मात् पत्रात् स्वामिनः तदानीन्तनविचारस्य कश्चिद् आभासः मिलति—"...तस्माद् यूयं ज्ञातुं पारयथ यदस्माभिः विदेशगमनं करणीयमेव। अस्माभिः द्रष्टव्यं यत् अन्यदेशानां समाजयन्त्रं कथं परिचालितं भवति. एवं यद्यस्माभिः पुनरेकजातिरूपेण परिणतैर्भवितव्यं चेत् तदा अन्यजातीयानां विचारेण साकम् अबाधः सम्पर्कः स्थापनीयो भवेत्।...हे प्रभो! कदा एको मनुष्यः अपरं मनुष्यं भ्रातृसाम्येन पश्येत्?"

—"स्वामिन् भवच्चरणकमलयोरर्चनां करिष्यामि।" किन्तु स्वामी केनापि प्रकारेण नान्वमोदत। महाराजः महार्घान् उपहारान् दातुमैच्छत्, परन्तु स किमपि न प्रत्यग्रहीत्। स्वामी प्रावोचत्—"अहं प्रतिज्ञामकार्षम् यत् परिव्राजकावस्थायां धनस्य स्पर्शं न विधास्यामि—किमपि सञ्चित्य न स्थापयिष्यामि। अहं साधारणसंन्यासी अस्मि। उपहारं गृहीत्वा किं करिष्यामि? कुत्र निधास्यामि?"

परन्तु राजा नाङ्गीचकार, तदा स्वामी महाराजस्य संतोषार्थं प्राह—"वरम्, तदा धातुसम्पर्करहितां साधारण-धूम्रपाननलिकां ददातु महाराजः।" महाराजः 'रोज'-दारुनिर्मिताम् एकां धूम्रपान-नलिकां समानाय्य उपहारस्थाने स्वामिमहाभागाय प्रददौ।

गमनात्पूर्वं प्रधानमन्त्री स्वामिनो हस्ते एकं कर्गजमुद्राचयं (नोटबंडल) सनिर्बंधं प्रावेशयत्। परन्तु स्वामी तन्न प्रतिजग्राह। पर्यन्ते स्वामी प्राह—"कोचिनपर्यन्तमेकं वाष्पयानप्रवेशपत्रं (टिकट) क्रीत्वा दीयताम्। तत्र द्विचतुर्दिनानि कदाचित् निवत्स्यामि।"

एकं द्वितीयश्रेणीप्रवेशपत्रं तथा कोचिनस्य तात्कालिकप्रधानामात्यस्य श्रीशङ्करय्यरस्य नाम्ना परिचयपत्रमेकं मैसूरप्रधानमन्त्री स्वामिमहोदयाय प्रायच्छत्।

—:•:—

१८९२ ई० वर्षस्य दिसम्बरमासे कोचिनं गत्वा स्वामी त्रिवांकुर-राज्यस्य राजधानीं 'त्रिवेन्द्रं' समागच्छत्। तस्य स्थानस्यापूर्वं प्राकृतिक-सौन्दर्यं स्वामिनं सविशेषमाकृष्टं चकार। अत्रापि महाराजस्तथा प्रधानामात्यादयः भूयांसो विशिष्टाः पुरुषाः स्वामिन्यनुरक्ताः अजायन्त। भारतीयजातीयसमस्यैव तस्यालोचनायाः प्रधानो विषय आसीत्। स्वल्पैरेव दिनैः तत्रत्यशिक्षितानाम् एवं विचारशीलानां व्यक्तोनामुपरि तदीयवचसां विशिष्टः प्रभावः पर्यपतत्।

तस्मिन्नवसरे त्रिवांकुरस्य एस्० के० नायरः लिखितवान्—"⋯स्वामिना सह ये जनाः घनिष्ठभावेन सङ्गताः ते तस्यालौकिक-शक्त्याकृष्टाः अभूत्वा स्थातुं नाशक्नन्। युगपत् अनेकव्यक्तीनां प्रत्येकप्रश्नस्य उत्तरं दातुं तस्मिन् विशिष्टं सामर्थ्यमासीत्। स्पेन्सर-शेक्सपीयर्-कालिदासाः, डारविनस्य विकासवादः, यहूदीजातेः इति-हासः, आर्यसभ्यतायाः उत्पत्तिः तथा क्रमविकासः अथवा वेद-वेदान्त-मुस्लिम-ईसाई-धर्मशास्त्रं कस्मिन्नपि विषये पश्चादपसरन्तं तं नापश्यत् कोऽपि। कोऽपि प्रश्नः कुतो न भवेत् तस्य समुचितमुत्तरं तज्जिह्वा-संलग्नमिव प्रस्तुतमतिष्ठत्। तस्य मुखे सरलता तथा महत्ता स्पष्टलिखिता आसीत्। निर्मलं हृदयं, तपस्यापूतं जीवनम्, उदारा बुद्धिः, उन्मुक्तं चित्तम्, असंकीर्णा दृष्टिः, तथा सर्वेषु प्राणिषु सहानुभूतिः इत्यादीनि तस्य चरित्रस्य विशेषताः अभूवन्।"

स्वामी केवलं नवदिनानि त्रिवाङ्कुरे न्यवसत्। तदनन्तरं स रामेश्वरं प्रातिष्ठत। पथि मदुरा-नगरे रामनादराजेन भास्करसेतुपतिना

सङ्गतिर्बभूव। स्वल्पकैरेव दिनैः स उच्चैः शिक्षितो राजा स्वामिनि श्रद्धासम्पन्नो भूत्वा तस्य शिष्यः संवृत्तः। स्वामी राजसम्मानं प्राप्तुं तत्र गतो नाभूत्। स वर्तमानभारतस्य समस्याम् एवं तत्समाधानं चाभिलक्ष्य राज्ञो दृष्टिमकार्षीत्। जनसाधारणस्योन्नयनभारं राज्ञि विन्यस्तवान्। रामनादराजः स्वामिनः शक्तिविषये एतावदधिकं विश्वस्त आसीत् यत् स शिकागोधर्ममहासभायां योगदानार्थं स्वामिने प्रार्थनापूर्वकं धनसहायतादानस्यापि वचनं ददौ।

तत्सर्वं भविष्यद्गर्भे सञ्चितमतिष्ठत्। स्वामी रामेश्वराभिमुखमग्रसरो बभूव। रामायणे लिखितस्य श्रीरामचन्द्रस्य पुण्यस्मृतियुक्तस्य रामेश्वरतीर्थस्य दर्शनं कृत्वा स सविशेषमानन्दितोऽभवत्। विशालं मन्दिरं, यात्रिणां कलकल-घण्टातालादिभिः महताऽऽडम्बरेण पूजनम्—सर्वं सोऽद्राक्षीत्, किन्तु तस्य चिन्तायां न्यूनता नायाता। भारतस्य समुन्नतिः, भारतवासिनां सेवा—तदीयजीवनस्य ध्येयमवर्तत। अशान्तेः भारं वहन् भारतस्यान्तिमप्रान्ते स कन्याकुमारीमन्दिराभिमुखं जगाम। निष्किञ्चनपरिव्राजकरूपेण स मन्दिरे उपस्थित आसीत्। देवीदर्शनेन तदीयमन्तरं पुलकितमजायत। माता प्रसन्नाऽभूदिव, स भूमौ मस्तकं निधाय देव्याश्चरणौ अवन्दत। एकेनानिर्वचनीयेनानन्देन तस्य चित्तं सम्भृतं सवृत्तम्। माता तदन्तरस्य निखिलं भारं लघु चकारेव।

तुषारशिखरात् हिमालयात् स भारतस्य मृत्तिकां संस्पृशन् सर्वस्माद् दक्षिणं प्रान्तमवतरन् आगमत्। अखण्डे भारते सनातनवैदिकधर्मस्य विचारधारा समन्ततः लुप्तप्राया यदभवत् तत् सोऽजानात्। अनेकदेवदेवीनां तथा मन्दिराणां दर्शनमकार्षीत्, बहुभिः साधु-महात्मभिः परिचयं प्राप, राजप्रासादे उटजे च न्यवसत् तथा भूयसः स्तुति-निन्दा-तिरस्कारान् असहत, क्षुत्पिपासापरिक्षीणः पादपतले प्रपतितो न्यवसत्—सर्वमिदं स निर्विकारभावेन स्वात्मसादकरोत्। सर्वत्रैव अखण्डभारतस्य प्राणस्पन्दनमन्वभवत्। एवं सर्वत्र आर्यर्षीणां शाश्वतीं वाणीं शुश्राव।

सर्वाधिकतया परस्कोटिदरिद्राणां पददलितानां जातेर्मेरुदण्डरूपायाः साधारणजनताया भीषणाम् असहायावस्थां प्रत्यक्षीकृत्य तदीयं हृदयं दयया द्रवितमजायत। कोऽपि ऋषिस्तमभाणीदिव—"समाजजीवने सर्वेषां समानोऽधिकारः भवति। गुणानुसारिणो वर्णविभागस्य स्थाने कृत्रिमो जन्मगतजातिभेद उदपद्यत, येनास्या जातेः पतनमवश्यम्भावि। धर्मोच्चतत्त्वस्य साहाय्येन तद् दूरीकरणीयम्।"

अन्तरे परशताश्चिन्ताः समादाय स्वामिमहाभागो देवीमन्दिरस्य वेदिकाया एकप्रस्तरखण्डोपरि समुपविश्य गम्भीरे ध्याने न्यमज्जत्।* तस्य ध्यानावगाहिनि चित्ते अतीतभारतस्य उत्थान-पतनयोः तथा भविष्यद्भारतस्य सप्ताष्टशताब्दीनां समुज्ज्वलचित्राण्युदभासन्त। स नवीनं ज्योतिरद्राक्षीत् मार्गस्य सन्धानं प्राप, अन्तरे श्रीरामकृष्णस्य

---

* देवीदर्शनानन्तरं स मन्दिरात् निर्गत्य समुद्रे किञ्चिद् दूरे समुत्थितं पाषाणं विलोक्य तरन् तत्र गत्वा भारतस्यान्तिम-प्रस्तरखण्डोपरि उपविश्य ध्यानमग्नोऽभूत्। पश्चात् पाश्चात्यदेशात् स गुरुभ्रात्रे समलिखत्—…"कुमारिकान्तरीपे मातृ-कुमारीमन्दिरे भारतस्यान्तिमप्रस्तरखण्डे आसित्वाहं चिन्तितुं प्रवृत्तः—"वयमेतावन्तः संन्यासिनो भारतवर्षे सञ्चरामः तथा जनानां दर्शनस्य शिक्षां ददामः इदमुन्मादित्वमस्ति। 'क्षुधिताय धर्मो न रोचते' इति गुरुदेवोऽकथयत्? यदिमे निर्धनाः पशुवद् जीवनं व्यतियापयन्ति तस्य कारणं मूढतैव वर्तते " इत्यादि।

भारतस्य दुरवस्थाग्रस्तानां समुद्धारस्य शतशश्चिन्ताः तस्यान्तरे उदिता अभवन्। अन्नाभावात् शीर्णता, जीर्णानि वस्त्राणि, युगेभ्यः निराशव्यञ्जित-नरनारीणां बालकबालिकानां पाण्डुराणि वदनानि स्वामिनो मानसपटे जीवद्रूपाणि दृश्यन्ते स्म। अश्रु स्रावयन् स्वामी विवेकानन्दः देशमातुः पादयोः प्रणमन् संकल्पमकरोत्—"जननि! न त्वहं कामये मुक्तिम्। त्वदीया परिचर्यैव मम जीवनस्यैकमात्रं व्रतम् अस्ति।"

कण्ठस्वरमश्रृणोत्। लक्षाधिकानां दीनभारतवासिनां प्रातिनिध्येन स पाश्चात्त्यदेशगमनस्य संकल्पं चकार—"तत्र गत्वा विश्वमानवताया: तथा विश्वभ्रातृत्वस्य वाण्या: प्रचारं करिष्यामि। निद्रितं मानवात्मानं प्रबोधयिष्यामि" इति।

भारतमातु: सेवकरूपेण शान्तिस्नात: स्वामी ध्यानात् उत्तस्थौ। "मम भारतवर्ष ! मम प्रिया भारवासिन: !" साम्रेडं वदतस्तस्य नेत्राभ्यां अश्रुधारा प्रवहन्ती निर्गता। अव्यक्तेनानन्देन तदन्तरं अनृत्यत्। दैवबलेन स बलीयान् अभवत्।

* * *

कन्याकुमारीं विहाय रामनादान्तरात् स्वामी फ्राँसीसी-उपनिवेशभूतां पाण्डिचेरीं समाययौ। अचिरादेव केचित् शिक्षिता युवकास्तस्मिन् सविशेषमनुरक्ता अभूवन्। लोकनामाग्रहेण स तत्र कानिचन दिनानि विश्रामं चकार। पाण्डिचेर्याम् एकेन 'कट्टुतर'—('कट्टर') ब्राह्मणेन साकं समुद्रयात्राया: एवं समस्ते संसारे वैदिकधर्मस्य प्रचारस्य सम्बन्धे च नितान्तकौतुकप्रदा आलोचना समजायत। यदा स्वामी "समुद्रयात्राया: कोऽपि शास्त्रस्य निषेधस्तु न वर्तते" इत्यवादीत् तदा ब्राह्मण: क्रोधारक्तो भूत्वा उवाच—"कदाऽपि न. कदाऽपि न, कदाऽपि भवितुं नार्हति। म्लेच्छा * जना धर्मं किं जानन्ति ? प्रत्युत तेषां सम्पर्के समागतानामस्माकं जातेरेव नाशो भविष्यति।"

ब्राह्मणस्य अनुदारतया स्वामिन: कोऽप्यानन्दो जात:। स सहगामिनो युवकान् अब्रवीत्—"युष्माभि: किं न दृष्टम् ? हिन्दुधर्म: कुत्र गत्वा पतितोऽस्ति। सनातनवैदिकधर्मं साम्प्रतं व्यक्ते: सम्प्रदायस्य च संकीर्णाङ्गणात् मोचयित्वा अनावृते विश्वप्राङ्गणे तस्य प्रतिष्ठा

* स्वामिना कथितम्—"यस्मिन् दिने म्लेच्छशब्दस्याऽऽविष्कारो बभूव तथा विभिन्नजातीयै: सह सम्बन्धविच्छेदो जात:, तस्मादेव दिनात् भारतस्य भाग्यस्य विपर्यय: समारब्ध:।"

कार्या। प्रत्येकशिक्षितयुवकस्य उपरि अस्य गुरुणः प्रातिभवस्य भारः विन्यस्तः अस्ति।"

पाण्डिचेरीतो मद्रासगमनमार्गे मद्रास-शासनस्य उपसंख्यकाध्यक्षेण ('डेपुटी एकाउन्टेन्ट जनरल') श्रीयुतमन्मथनाथभट्टाचार्येण समागमः समभवत्। प्रागेव द्वयोः घनिष्ठः परिचयः आसीत्। मन्मथबाबू-महोदयस्य सविशेषाग्रहेण स्वामी तस्यातिथिरूपेण तेनैव साकं मद्रासमाययौ। स्वल्पैरेव दिनैः मद्रासनगराभ्यन्तरे महान् कोलाहलः संप्रवृत्तः। विश्वविद्यालयस्य अध्यापकाः छात्राश्च वृन्दशः समाययुः। सर्वेऽपि स्वामिनो ज्ञानगम्भीरतां समालक्ष्य स्तब्धा अभूवन्। वेदस्य वेदान्तानां च सिद्धान्ता वैज्ञानिकसत्यरूपेण प्रमाणिता भवितुमर्हन्ति इतीदं सर्वप्रथमं ते अन्वभवन्। वेदचतुष्टयादारभ्य वेदान्त-दर्शनस्य उच्चतमदार्शनिकविचारपर्यन्तं तथा आधुनिक-काँट-हेगेल-शिल्पकला-काव्य-सङ्गीतविद्या-नीति-शास्त्र-योगशास्त्राणि विज्ञानस्य नूतनतमा आविष्काराः राजनीतिः समाजनीतिः सर्वेषु विषयेषु स नवं प्रकाशं संचारयति स्म।

मद्रासनिवासिनामुपरि स्वामिनो विपुलप्रभावस्य सम्बन्धे एकः प्रत्यक्षदर्शी अलिखत्—"कलिकात्ता-विश्वविद्यालयस्य एकः स्नातकः, मुण्डितमस्तकः मनोहररूपसम्पन्नः गैरिकवसनधारी संन्यासी अंग्रेजी-संस्कृत-भाषयोरविच्छेदेन व्याख्यानेऽभ्यस्तः, प्रत्येकप्रश्नस्य समुचितोत्तरदानाद्भुतशक्तिशाली, सङ्गीतविद्यायां तथाऽभ्यस्तो यत्तस्य कण्ठात् अत्यन्तसहजतया एतादृशमधुरस्वरो निर्गच्छति यः समस्त-ब्रह्माण्डस्य अन्तरात्मना सह सम्मेलित इव। परन्तु अस्ति स सर्वत्यागी निष्किंचनः केवलं परिव्राजकः। बलिष्ठः, साहसी, उच्चाङ्गपरिहास-कुशलः पुरुषः, तथाकथितमहात्मनां पदानुसरणे प्रतिष्ठितालौकिक-क्रियानुष्ठानकारि-सम्प्रदायोपरि अत्यधिकघृणा-सम्पन्नः—स संन्यासी अनेकव्यक्तीनां हृदयेऽनश्वरं विश्वासानलं प्रज्वलितमकरोत्।..."

मन्मथबाबुभवने प्रतिदिवसं गोष्ठी समजायत। तत्र बालकाः

युवकाः वृद्धाः, पण्डिताः मूर्खाः, धनिनः निर्धनाः, उच्चपदस्था व्यक्तयः हिन्दवः ईसाई-सम्प्रदायाः नास्तिकाः—सर्वविधा अपि मनुष्याः समागच्छन्। स्वामिनो मुखात् वेदान्तस्य नूतनां वाणीमाकर्ण्य सर्वे लोकाः स्तब्धाः समपद्यन्त। एकस्मिन् दिने स्वामी आलोचना-प्रसंगे पाश्चात्त्यदेशगमनेच्छां प्रकटीचकार—"अधुना वैदिकधर्मस्य समस्ते संसारे प्रचार-करणस्यावसरः समुपस्थितः। ऋषीणामस्य धर्मस्य इदानीं संकीर्णावरणान्तः बद्ध्वा स्थापनेन कार्यं न सिध्येत्। तस्य पुनःसंस्कारं कृत्वा संसारस्य समक्षं समुपस्थापनं भवेत् एवं पूर्णनोद्यमेन अस्य धर्मस्य महिमा समन्तात् प्रसारणीयो भवेत्।" विवेकानन्दः तथैव समाचरत्। वेदान्तधर्मस्य रत्नमञ्जूषाम् उन्मुक्तां कृत्वा उदारतया तस्या रत्नानां वितरणमकरोत्। तेन पृथिव्या एकप्रान्तात् अन्याञ्चलपर्यन्तं वेदान्तमहत्त्वं घोषितम्।

मद्रासभक्ताः स्वामिनः पाश्चात्त्यदेशगमनस्य इच्छां विदित्वा धनसंग्रहे संलग्नाः। अचिरादेव पञ्चशतं रूप्यकाणि संगृहीतानि अभूवन्। स्वामी तानि रूप्यकाणि विलोक्य प्रफुल्लो नाजायत। तेन कथितम्—"मम प्रिया वत्साः! अहं अन्धकारे उत्पतनात् पूर्वं भगवत इच्छां ज्ञातुं वाञ्छामि। यदि मम गमनं तस्याभिप्रेतं भवेत् तर्हि धनं स्वात्मनैव समागमिष्यति। इदं धनं यूयं दीनेभ्यो वितरत।"

तदादेशः पालनीय एवाभूत्। तानि रूप्यकाणि निर्धनेषु विभक्तानि। स जगज्जनन्याः पादयोः प्रार्थनामकरोत्। लोकशिक्षायाः तथा धर्मप्रचारात् विरामो नासीत्। मद्रासनगरस्य शिक्षिताः तथा प्रतिष्ठिताः जनाः निरन्तरम् आगमन्। तस्य यशः समन्ततः प्रासरत्। हैदराबादवासिनस्तथा सिकन्दराबादवासिनश्च स्वामिनः स्वागतार्थं एकां समितिम् आयोज्य स्वामिनं हैदराबादम् आयातुं समामन्त्रयन्त। स्वामी अनुमतिं ददौ एवं फरवरीदशमदिवसे ( १८९३ ई० ) कमण्डलुं करे निधाय हैदराबाद-शकटीविश्रामालये अवतीर्णोऽभूत्। तत्र पञ्च-

शताधिका जनाः तस्य स्वागतार्थम् एकत्र समाययुः। महासम्भ्रान्ताः, अमीर-उमराहा, उच्चपदस्थाः राजकर्मचारिणः, राजपरिषदो वाक्कीलाः ( वकील ), अध्यापकाः, शिक्षकाः धनिनः, व्यापारिणः सर्वेऽपि समाजग्मुः। सर्वे राजसम्मानेन परिव्राजकाचार्यस्य स्वागतमाचरन्।

स्वामिनो निवासस्थाने अगणितमनुष्याणां सम्मर्द आसीत्। शतशो जनाः स्वामिनो दर्शनं तथा उपदेशं प्राप्तुं सलालसा बभूवुः। फरवरी-मासे एकादशदिवसे प्रातः नगरस्य एकशतं प्रतिष्ठिता नागरिकाः दुग्धं-फलं मिष्टान्नादि समादाय स्वामिनः स्वागतं कुर्वन्तः एकं भाषणं दातुमनुरोधमकुर्वन्। सर्वेषामाग्रहेण तेन सम्मतिः देया बभूव। १३ ता० दिने महबूबकालेजे सहस्रशो मनुष्याः समेता अभूवन्। अनेके आंगला अपि समाययुः। पण्डितरतनलालः सभापतिः अभवत्। स्वामिनां दर्शनमात्रेण सर्वेषां हृदि गाढा श्रद्धा उत्पन्ना। भाषणस्य विषय आसीत्—"My mission in the West"—'मम पाश्चात्त्य-देशगमनस्य उद्देश्यम्।' तस्य भाषणं श्रुत्वा सर्वे श्रोतारः आश्चर्यचकिताः समभूवन्। तस्य विशुद्धा आंगलभाषा, गभीरं पाण्डित्यम् तथा वक्तृत्वशक्तिः इति सर्वं लोकोत्तरमवर्तत। स हिन्दुधर्ममहत्त्वसम्बन्धे जगाद— हिन्दुसभ्यताया उत्कर्षदिवसे भारतस्य शिक्षा तथा साधना कियद्दूरं सर्वं समुन्नतमभवत् इदमपि प्रादर्शयत्। वैदिके युगे तथा तत्परवर्ति-युगे च उन्नत्यवनत्योः इतिहासं उदाहृत्य वर्तमानाधः-पतनस्य * चित्रमुपस्थापितं चकार। सर्वान्ते स पाश्चात्त्यदेशगमनस्योद्देश्यं प्रकटयन् अभाषत—यत् स सनातनवैदिकधर्मस्य विलुप्तगौरव-समुद्धार-संकल्पं गृहीत्वा धर्मप्रचारकरूपेण पाश्चात्त्यदेशान् जिगमिषति।

* भारतस्य जातीयजीवने वर्तमानाधःपतनकारणस्य सम्बन्धे स्वामिनोऽनेका उक्तयः प्राप्यन्ते। समाजस्य नेतृवृन्दस्य तथा राष्ट्रपरिचालकानां दृष्टिः तदभिमुखमाकृष्टा चेत् तदा जातीयजीवनं व्याधिमुक्तं सत् स्वस्थं तथा सबलञ्च भवितुं शक्नुयात्। अस्याधःपतनस्य वयमेव प्रतिभुवः। अस्माभिः स्वगौरवोज्ज्वलम्

सभाया अन्ते जनास्तस्मै रूप्यकाणि दातुमैच्छन्। परन्तु स तानि नागृह्णात्। भगवतः आदेशस्य कृते स प्रतीक्षामकरोत्। व्याख्यानानन्तरमपि त्रिचतुर्दिनपर्यन्तं अमीर–नवाब-उमराहेषु तथा सर्वश्रेणीकेषु लोकेषु धर्मस्य शाश्वतवाण्याः प्रचारमकरोत्। सर्वत्र समधिका उत्सुकता समुत्पन्नाऽभूत्। स आसीत् सत्यस्य पथिकः, ज्योतिषः साधकः, तथाऽमृतस्य अधिकारी। निजजीवनदीपेन सहस्रशो हृदयेषु स धर्मस्य

---

अतीतं समुपेक्षितम्। स्वामिना कथितम्—"अद्यत्वेऽनेके जना एवं कथयन्ति यत् अतीतं पश्यन्तो लोकाः महान्तं प्रमादं कुर्वन्ति।...परन्तु ममैवं प्रतिभाति यद् तस्य विपरीतैव धारणा तथ्यभूता अस्ति। हिन्दुजातिः यावन्ति दिनानि निजातीतां कीर्तिं विस्मृत्य स्थिता तावद्दिनपर्यन्तं तस्यास्तन्द्राच्छन्नेव दशा बभूव। अधुना यदैव तस्या दृष्टिः प्राचीनदिशं प्रसरति तदैव परितः नवजीवनस्य उद्दीपना दृश्यते।...भारतस्यास्या अवनतेः अन्यत् कारणम् अस्माकं संकीर्णा दृष्टिः तथा कर्मक्षेत्रस्य संकोचः।...ममायं दृढो विश्वासः यत् कोऽपि व्यक्तिविशेषो जातिर्वा अन्यसम्पर्कमकृत्वा स्थातुं न प्रभवति। समाजं परितः लोकाचाराणां दुर्लंघ्या भित्तिः निर्मिता। सा भारतस्य वर्तमानावनतेः अन्यतमं मूलकारणमस्ति एवमहं मन्ये। प्राचीनकाले परितः बौद्धसंस्पर्शात् हिन्दुजातिं परित्रातुं तथाकरणमावश्यकं बभूव।" स्वामिनो विचारेण 'गणदेवताया अनादरः तथा नारीजातेः अमर्यादाऽपि अस्याधःपतनस्य कारणमस्ति।' तेनोक्तम्—"...यावत्पर्यन्तं भारतस्यानभिजातो जनसमाजः समादृतो न भवति, यावत्पर्यन्तं तदुपयोगिनाम् आहारशिक्षादीनां प्रबन्धो न भवति, तावत्पर्यन्तम् अस्माकं समस्तो राजनैतिकः कार्यकलापः निष्फलो भविष्यति, एवमस्य देशस्योन्नतिः असम्भवा भविष्यति।...प्राचीनस्मृतिशास्त्रप्रणेता मनुरब्रवीत्—'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः' परन्तु अस्माकं विचारधारा इयन्मलिना अस्ति यत् वयं स्त्रीजातिं 'घृणित-कीटं' 'नरकद्वारम्' इत्यादिकं कथयामः।...वेदान्तस्य घोषणा अस्ति—'सर्वेषु भूतेषु एक एवात्मा विराजमानः वर्तते।' तथाप्यस्मिन् देशे पुरुषाणां नारीणाञ्च इयदन्तरं क्रियते यद् ज्ञातुं न शक्यते। स्त्रीजातेः

आलोकशिखां प्रज्वालितवान् । तस्य धर्मानुरागः, त्यागः तथा ज्वालामयी वक्तृता च हैदराबादनिवासिनाम् अन्तरे गभीरं प्रभावं निहितवन्तः । ··

फरवरीमासस्य सप्तदशे दिवसे स्वामी मद्रासं पराववृते ।* तेन प्रज्वालितं भारतप्रेम मद्रासवासिनाम् अन्तरे आकुलं प्रतिध्वनिमुद्भावयामास । तस्य प्रेम विपुलं बभूव । स्वामिनं केन्द्रीकृत्य मद्रासवासिभिः एकं बृहद् दलं संघटितमासीत् । ते जनाः स्वामिनो जीवनस्यान्तिमदिनपर्यन्तं तस्मिन् पूर्णरूपेण अनुरक्ता आसन् ।

---

समालोचना युष्माकं बद्धमूलोऽभ्यासः अस्ति । किन्त्वहं पृच्छामि तासामुन्नत्यर्थं युष्माभिः किं कृतम् ? परन्तु एवं मा विचारयत यत् जगज्जनन्या आद्याशक्तेः प्रतिमूर्तीनां नारीणामवस्थाया उन्नतिमकृत्वैव युष्माकमग्रगतेः कोऽप्यन्यः उपायः अस्तीति ।" शारीरिकदुर्बलता, आत्मविश्वासस्य अभावः, तामसिकता, कर्मविमुखता, तथा स्वावलम्बनम् आज्ञानुवर्तिता-मानवप्रीति-सङ्घटन-शक्तीनां नितान्ताभावः, एतदभिमुखं स्वामी देशवासिनां दृष्टिमाकृष्टां अकरोत् । स सखेदमभाषत "···वस्तुतो वयम् अलसाः, कर्मविमुखाः, संहतेः साधने असमर्थाः भ्रातृप्रेमवर्जिताः एवं स्वार्थान्धा मनुष्याः स्मः । वयं परस्परं घृणां हिंसां वा अकुर्वन्तः न्यूनातिन्यूनं त्रयोऽपि जनाः सम्मिलिता भवितुं न शक्नुमः ।··· संघटनशक्तिः अस्माकं प्रकृतौ सर्वथा नास्ति, किन्तु सा शक्तिः अस्माकं जीवने अनुप्रविष्टा कार्यैव ।"···

* "उद्बोधन-कार्यालयात् प्रकाशिते स्वामिनः पत्रावलीप्रथमभागस्य षष्टितमे पत्रे सन्दृश्यते यत् स फरवरीमासस्य-एकविंशे ( १८९३ ई० ) दिने हैदराबादतः सच्चिदानन्दनामकं निजमद्रासशिष्यमालासिंगं प्रत्यलिखत्—"कतिपयदिवसाभ्यन्तर एव द्वित्रदिनानां कृते मद्रासं समेत्य युष्माभिः सह सम्मिलिष्यामि । पुनस्ततः बेंगलूरं गमिष्यामि ।" एतेन प्रतीयते यत् स २१ फरवरीदिनात्परतः मद्रासं जगाम ।

महता उत्साहेन मद्रास-भक्ता 'दातव्य'-धनस्य संग्रहमकुर्वन्। तेन भाषितम्—"मम गमनं यदि भगवतोऽभिप्रेतं भवेत् तर्हि अहं जनसाधारणानां तथा दीनदुःखिनां प्रतिनिधितयैव गमिष्यामि। यूयं धनिकेभ्यः धनं मा संकलयत।"

मार्चमास एवमेवात्यगात्। प्रतिदिनं नवा नवा जनास्तदीयां वाणीं श्रोतुमागच्छन्। इतश्च तदीयमन्तरं श्रीभगवतः आदेशस्य कृते सातिशयं व्याकुलं बभूव। स श्रीश्रीमात्रे पत्रं विलिख्य तस्या आशीर्वादस्य प्रार्थनां कर्तुं संकल्पमकरोत्। एतस्मिन्नेव समये एकेनाचिन्तनीयेन उपायेन तेन श्रीरामकृष्णदेवस्यादेशः ज्ञातोऽभूत्। एकस्यां रात्रौ अर्द्धनिद्रितावस्थायां स स्वप्नमेकमपश्यत्—श्रीठाकुरः ज्योतिर्मयशरीरं धृत्वा समुद्रस्य तरङ्गमालोपरि अग्रेसरो भूत्वा व्रजति तथा स्वामिनं पृष्ठतोऽनुगन्तुम् इङ्गितं करोति। एतस्य दर्शनस्य पश्चात् एकेनानिर्वचनीयेन आनन्देन तदन्तरं सम्भृतं बभूव। सहैव दैवी वाग् 'गच्छ' प्रत्यभासत। श्रीरामकृष्णदेवस्य अभिप्रेतं मत्वा स पाश्चात्त्यदेशगमनस्य दृढं संकल्पमकरोत्।

परिव्राजकरूपेण निर्गमनसमये सः श्रीश्रीमातुः आशीर्वादं गृहीत्वा यात्रारम्भमकरोत्। समुद्रयात्रायाः पूर्वमपि स श्रीश्रीमातुराशीर्वादान् प्राप्तुमेकं प्रार्थनापत्रं प्रेषयामास। तस्मिन् पत्रे स श्रीठाकुरस्यादेशवार्तां न सूचितवान् तथा निजपाश्चात्त्यदेशयात्रां गोपयितुं मातुरनुरोधमकरोत्।

चिरकालानन्तरं प्राणप्रियस्य वत्सस्य नरेन्द्रस्य पत्रं प्राप्य श्रीमाता सुतरामानन्दिता बभूव। किन्तु सन्तानस्य विरहव्यथा तस्या अन्तरं विक्षुब्धमकरोत्। एकस्यां रजन्यां श्रीमाता तादृशमेव स्वप्नं दृष्टवती—श्रीठाकुरः समुद्रस्य उत्तालतरङ्गोपरि व्रजन् अस्ति, तथा नरेन्द्रं पृष्ठतोऽनुगन्तुं संकेतं करोति। श्रीठाकुरस्य संमतिम् अवधार्य श्रीमाता हार्दान् आशीर्वादान् सूचयन्ती उत्तरमलिखत्—"गच्छ वत्स! तव मुखे सरस्वती विराजमाना भवतु, त्वं सर्वत्र विजयी भूत्वा प्रत्यागच्छ।"

श्रीमातुः पत्रं लब्ध्वा स्वामी आनन्देनाधीरो भूत्वा शिष्यानाह—"हन्त ! अद्य सर्वं समीचीनं जातम् श्रीश्रीमातुरादेशः प्राप्तः ।" विद्युद्वेगेन स वृत्तान्तः समस्ते मद्रासनरे प्रसृतः तथा कतिपयदिवसाभ्यन्तरे एव समुद्रयात्रायाः सर्वा व्यवस्था सुष्ठु जाता। यात्राया दिनं ३१ मईमासे, प्रस्थानं बम्बईतः इति निर्धारितम् ।···

वर्षद्वयात् पूर्वं खेतडीराजाय स्वामी पुत्रलाभार्थमाशीर्वादान् दत्तवानासीत् । राज्ञः पुत्रलाभो बभूव। समस्ते खेतडी-राज्ये उत्सवः समाचरितः। राज्पुत्राय आशिषं दातुं स्वामिनमामन्त्रयितुं राजा निजसचिवं जगमोहनलालं मद्रासं प्राहिणोत्। जगमोहनलालस्य प्रस्तावमाकर्ण्य स्वामी जगाद—"दृश्यताम् जगमोहन ! ३१ मईमासे अमेरिकाप्रस्थानं निर्धारितम्। इदानीं कथमहं तत्रागन्तुं शक्नुयाम् ? त्वमेव तावद् वद ।" स्वामिनः कामप्यापत्तिम् अमानयन् सोऽब्रवीत्—"न्यूनातिन्यूनम् एकस्य दिनस्य कृते भवान् तत्र आगच्छतु। भवदनागमनेन राजा भृशं खिन्नो भवेत्। सम्भवतः स स्वयमागत्योपस्थितः स्यात् ! अमेरिकायात्रायाः सर्वं प्रबन्धं वयमेव करिष्यामः ।" स्वामी विवशो भूत्वा प्रययौ ।···

मद्रास-शिष्यान् आशिषा अभिनन्द्य तेभ्यः महता कृच्छ्रेण परिमुक्तः स्वामी खेतडीं प्रतस्थे। मार्गमध्ये बम्बई-नगरे तथा जयपुरे चावततार। 'आबूरोड्'-वाष्पयानविश्रामालये अप्रत्याशितरूपेण स्वामि-ब्रह्मानन्देन एवं स्वामितुरीयानन्देन च स्वामिनः समागमो जातः। स्वामी निजं पाश्चात्त्यदेशयात्रायाः संकल्पं विज्ञाप्य वार्ताप्रसङ्गे तुरीयानन्दं सम्बोधयन् प्राह—"हरिभ्रातः ! मम हृदयं भूरि विशालं संवृत्तम्। अहं स्वान्तरे जनतायाः कष्टं पीडां च सम्यगनुभवामि ।" इति वदन्नेव कम्पमानं निजकरमुरसि निधाय अश्रु मोचयितुमारभत ।

द्वौ गुरुभ्रातरावपि तस्य विशाल-हृदयं परिज्ञाय अभिभूतौ संवृत्तौ। स्वामिनोऽश्रुविसर्जनं विफलं न बभूव। संसारस्य दीनानां

कृते स यदश्रुमोचनं चकार तस्य प्रत्येकबिन्दुः सार्थको भविष्यति। अगणितहृदयानि स उद्दीप्तानि करिष्यति तथा शतशश्चित्तानि करुणाद्रुतानि विधास्यति। तेषां दरिद्रताया विमोचनं भविष्यति।···

स्वामी खेतडीं समाययौ। राज्ञो हृदये आनन्दतरङ्गा उत्तरला अजायन्त। सम्पूर्णे राज्ये आनन्दः प्रसृतोऽभूत्। स्वामी नवजाताय शिशवे आशीर्वादान् ददौ, तथा अन्येभ्यः सर्वेभ्योऽपि आशीर्वादान् व्यतरत्। खेतडीराज्ये कतिपयदिनान्यतिवाह्य स्वामी विदेशयात्रार्थं बम्बईनगरं प्रातिष्ठत* राज्ञः सचिवो जगमोहनलालः साकं समाययौ। स बम्बई-स्थाने समागत्य बहुमूल्यैः काषायवस्त्रैः स्वामिनं विभूषितवान् तथा यात्रायाः सर्वं प्रवन्धं कृत्वा किञ्चिद् वित्तमपि तद्धस्ते विन्यस्तवान्। स्वामिनः काऽप्यापत्तिः तस्य पुरः स्थातुं नाशक्नत्।

मद्रासतः स्वामिनः प्रियशिष्यः आलासिंगपेरुमलोऽपि आजगाम। पी० एन्ड ओ० कम्पनी-इत्यस्याः पेनिनसुलर-नाम्नि पोते प्रथमश्रेणी-प्रवेशपत्रं क्रीतमासीत्। १८९३ ई० मईमासे ३१ तारिकायां पोतः प्राचलत्।† जगमोहनलालस्तथा आलासिंगश्च स्वामिनं पोते आरोहयितुं

---

* स्वामिनः पत्रावल्यामेवं लिखितं—२७ अप्रैलमासे १८९३ ई० वत्सरे स्वामी खेतडीराज्यात् नञ्जुण्डरायाय पत्रं प्रेषितवान्। तेन प्रतीयते स ततः पूर्वमेव खेतडीं प्राप एवं पुनः १८९३ ई० वत्सरे २२ मईमासे बम्बईनगरात् प्रधानामात्याय पत्रं व्यसृजत्। अर्थात् ततः प्रागेव स बम्बईपुरं प्राप्त आसीत्। ३१ मईमासे सामुद्रपोतमारुह्य यात्रामकरोत्।

† स्वामिविवेकानन्दस्य समुद्रयात्रा एका विशिष्टा गुरुत्वपूर्ण-घटना आसीत्। अस्याः सम्बन्धे १९०९ ईसवीये 'कर्मयोगिन्' पत्रे श्रीमानरविन्द आलिखत्—"विवेकानन्दस्य विदेशयात्रया सर्वप्रथममिदमेव सुस्पष्टतया सूचितं भवति—भारतं केवलं जीवितुं न प्रबुद्धम्, प्रत्युत आध्यात्मिकभावधारया संसारं विजेतुं भारतेन प्रशंसनीया भूमिका ग्राह्या भविष्यति।"

समाजग्मतुः । द्वावपि क्रन्दितुमारेभाते । श्रीस्वामिनो नेत्रे अपि अश्रुपूर्णे जाते । मातृभूमेराकर्षणं तत्प्राणान् व्याकुलानकरोत् । अर्णवपोतोपरि स्थितः सन् द्वावपि हस्तौ वक्षसि निधाय स हृदयावेगावरोधं कर्तुं प्रायतत—"हा ! मम भारत !"

—::—

समुद्रवाष्पयाने बहिः प्रकोष्ठस्य ( डेक ) उपरि दण्डायमानः निर्निमेषनयनः स्वामिमहोदयो भारतस्य तीरभूमिमालोक्य स्थित एवासीत्। महिममयं भारतवर्षम्! अहो! पराधीनं परपददलितं भारतवर्षम्! भारतस्य चिन्ता शतधारया तस्यान्तरम् अधिकृतवती। सोऽधीरो बभूव। तस्य मनसि वराहनगरस्थस्य मठस्य गुरुबन्धूनामपि चिन्ता समुदियाय।

समुद्रगामिवाष्पीययानमपि मुम्बई-नगरात् बहिर्गत्वा सिंहल-पिनांसिंगापुर-हंकांग-नगराभिमुखं अग्रेसरमभवत्। ततः कैन्टन-नागासाकिओसाका-किओटो-टोकिओ-नगराणि अवलोक्य स्थलपथेन स्वामी योकोहामामाजगाम। सुदूरप्राच्यदेशेषु प्राचीनार्यसभ्यतायाः प्रभावः कियानपतत्, तत्सविशेषं लक्ष्यीकुर्वन्नगच्छत्। परञ्च एशियाभूखण्डस्य आध्यात्मिकीमेकतामालोच्य तत्रापि स्थिरतरसिद्धान्तेऽवस्थितोऽभवत्। जापानप्रदेशीया वर्तमानयुगोपयोगिनी सर्वतोमुखी समुन्नतिस्तस्य दृष्टिं विशेषरूपेण आकृष्टामकरोत्। कतिवर्षेषु एव स्वाधीनो जापानः अन्यैश्च पाश्चात्यजातीयैः सह स्पर्धां कृत्वा आश्चर्यान्वितामुन्नतिमकरोत्। तदा मुष्टिमितः स्वल्पसंख्यको जापानवासो चत्वारिंशत्कोटिसंख्यक-चीनदेशीयानां प्रतिद्वन्द्वी भूत्वा युद्धे जयलाभमकरोत्। तेनैव तेषाम् आत्मविश्वासस्य संहतिशक्तेश्च परिचयः प्राप्यते। संहतिशक्तेर्जयोऽपि घोषितः।* तदा चीनदेशे एकताया एकान्तोऽभावः, अन्तर्विप्लवश्चासीत्।

---

* स्वामिमहोदयस्तु अवदत् यत् सामयिकरूपेण जापानं निकषा चीनदेशीयेषु

तेन सह मातृभूमेः पराधीनतां परिचिन्त्य तस्य मनो विशेषतो भाराक्रान्तं जातम्। योकोहामातः स मद्रासदेशीयशिष्येभ्योऽलिखत् यत् "जापानीयानालम्ब्य मम मनसि भूयांसो विषयाः समुदिता भवन्ति, तेषामतिसंक्षिप्तपत्रेषु प्रकाशो न सम्भाव्यते। परन्तु एतन्मात्रं वक्तुमर्हामि, यत् अस्मद्देशीया युवानः संघबद्धा भूत्वा प्रत्यब्दं चीनदेशं जापानं च गच्छन्तु। जापानगमनं पुनर्विशेषतः समपेक्ष्यते। जापानीयानां कृते साम्प्रतिकं भारतम् उन्नतेः महतश्च आदर्शस्य स्वप्नराज्यस्वरूपम्। किन्तु यूयं किं कुरुथ? समग्रं जीवनं केवलं वृथैव वाग्व्ययं कुरुथ। आगच्छत, एतान् पश्यत। ततो लज्जया मुखमाच्छादयत। भारतस्य दशा जराजीर्णेव संवृत्ता। स्वदेशं हित्वा बहिर्देशान्तरं गच्छतां युष्माकं जातिः भ्रष्टा भवति, एतावत् मौर्ख्यम्।...

"आगच्छत, मनुष्या भवत। स्वेषां संकीर्णगर्त्ताभ्यन्तरात् बहिरेत्य पश्यत, सर्वे वर्णाः सर्वत्र कीदृशमुन्नतिपथमालम्ब्य चलन्ति। किं यूयं मानवेभ्यः स्निह्यथ? देशमपि स्नेहचक्षुषा पश्यथ? तथा यदि देशं वांछथ आगच्छत, उत्कर्षाय उन्नतये च, प्राणैः पणं कृत्वा चेष्टध्वम्।...

"जन्मभूमिर्भारतमाता अन्ततः सहस्रमपि युवकानां बलिमिच्छति, इदमेव स्मरत, मानवा एव अभिप्रेयन्ते न पशवः। प्रभुर्भगवान् युष्माकमीदृशीं प्राणस्पन्दहीनसभ्यतां भंक्तुमेव आंग्लराजशक्तिं अस्मिन् देशे प्रेरयामास। मद्रासदेशीया जना एव आदौ इंग्लण्डीयानस्मिन् देशे आश्रयप्रदानेन प्रतिष्ठितानकुर्वन्।

---

पराजितेष्वपि काले चीनदेश एवैक-विराट्-विश्वशक्तिरूपेण परिणतो भविष्यति। रूसदेशोऽपि प्रचण्डशक्तिशाली भविष्यति। चीनदेशस्य रूसदेशस्य च सम्बन्धिनी स्वामिमहोदयस्य भविष्यद्वाणी प्रत्यक्षरं सत्यैव भवितुमुपक्रान्ता। एवं यान्त्रिकी पाश्चात्त्यसभ्यता यत् समग्रमेव विश्वं विध्वंसपथमानेतुमुपक्रान्ता, तदपि स सुष्पष्टभाषया व्यक्तमकरोत्।

"सम्प्रति पृच्छामि, समाजस्य एतादृशीं नवीनां दशाम् आनेतुं सर्वान्तःकरणैः प्राणपणेन यतिष्यन्ते, एतादृशान् कति निःस्वार्थ-युवकान् मद्रासः उत्स्रष्टुं शक्तः? ये खलु दरिद्रान् प्रति सहानुभूति-सम्पन्ना भविष्यन्ति, क्षुधार्त्तानां तेषां मुखे अन्नं दास्यन्ति, सर्व-साधारणमानवेषु शिक्षाविस्तारं करिष्यन्ति, एवञ्च युष्माकं पूर्व-पुरुषाणाम् अत्याचारेण ये खलु पशुभावमाप्तवन्तः, तान् मानवत्वं प्रापयितुं चेष्टामामरणं करिष्यन्ति।"

अनेनैव पत्रेण स्वामिनो विवेकानन्दस्य * चिन्ताधारापरिचयं वयं प्राप्नुमः। भारतस्य कल्याणमेव तस्यैकः चिन्ताविषयः। भारतीयानामगणितदरिद्रनरनारीणां चिन्ता तस्य मनसि दृढतरवासस्थान-मकरोत्। त एव तस्य ध्यानविषया आसन्। योकोहामातः स्वामि-

---

* 'विवेकानन्द' इति नाम्न उत्पत्तौ नानासमालोचनानि अभवन्। सम्भावयामः, काशीपुरस्य उद्याने १८८६ खृष्टाब्दे फेब्रुअरी मासस्य कस्मिंश्चित् काले श्रीश्रीरामकृष्णदेवः नरेन्द्रनाथ-प्रमुखेभ्य एकादशशिष्येभ्यो युवभ्यो गैरिकवस्त्रं जपमालाञ्च दत्वा तेषु शक्तिसञ्चारं कृत्वा संन्यासदीक्षामददात्। तदा तु स शिष्येभ्यः किमपि आश्रमिकं नाम न ददौ।

श्रीठाकुरस्य देहत्यागानन्तरं वराहनगरमठे १८८७ खृष्टाब्दस्य प्रथमत एव नरेन्द्रनाथप्रभृतयः कतिचन श्रीरामकृष्णशिष्या विरजाहोमं सम्पाद्य आनुष्ठानिक-भावेनैव संन्यासाश्रमं तन्नामानि च गृहीतवन्तः। तदा रामकृष्णानन्द इति नाम-ग्रहणे नरेन्द्रनाथस्य वासना आसीत्। किन्तु तस्य अन्यतमस्य गुरुभ्रातुः शशिन एकनिष्ठादर्शभूतगुरुसेवाविषयं स्मृत्वा स शशिने एव तन्नाम अददात्।

फलतः शशी एव स्वामी रामकृष्णानन्द इति नाम्ना परिचितो जातः। तदा नरेन्द्रनाथः किमपि नाम अगृह्णात् न वा, तत्र किमपि प्रमाणं न लभ्यते। केऽप्याहुः तदैव स 'विविदिषानन्द' इति नाम गृहीतवान् इति।

महोदयः वाष्पीयजलयानेन प्रशान्तमहासागरमतीत्य गच्छति। प्राच्य-भूखण्डं पश्चात् त्यक्त्वा स प्रतीचीमेव दिशं प्रति अगच्छत्। किन्तु स प्राच्यदेशविषयिणीं चिन्तां न विस्मर्तुम् अशक्नोत्। इतः प्रशान्त-महासागरातिक्रमणकाले यानमध्यस्थ एव स शीतेन कातरोऽभवत्। जगमोहनलालः तस्मै प्रभूतं वस्त्रादिकम् अयच्छत् इति सत्यं, किन्तु तस्य तदा एकमपि ऊर्णावस्त्रं नासीत्। व्यवस्थापकाः शीतविषयं चिन्त-यितुमपि नालम्। तत् यानं कनाडान्तर्गते वँकूवरे उपस्थितम् अभवत्। तस्मात् स्थलीयवाष्पयानेन कनाडामध्यतः जुलाईमासस्य मध्यांश एव शिकागोनगरे अवततार स्वामिमहोदयः।

---

परिव्राजकजीवने स्वपरिचयं गोपयितुं स विविदिषानन्द-सच्चिदानन्दादि-नाम्ना स्वकीयं परिचयम् अददात्। तस्य स्वीयकराङ्किततत्कालीनपत्रेषु पूर्वोक्तनाम-द्वयस्यैव स्वाक्षरं प्राप्यते। अमेरिकागमनात् प्रागेव असौ परिचयपत्राय थियसाफिकल-सोसाइटीति ख्यातसमितेः सभापतिं कर्नल-अलकटं निकषा गतवान्। १८९३ ईसवीये अप्रैल—मासस्य २७ तारिकायां खेतड़ीस्थानात् डाक्टर-नञ्जण्डू-राव-महोदयं प्रति लिखिते पत्रेऽपि "एषैव सच्चिदानन्दस्य निरन्तरप्रार्थनेति" लिखितमस्ति। अमेरिकागमनात् पूर्वं मुम्बईप्रदेशम् उपगम्य तदैव वर्षे मई-मासस्य चतुर्विंशतितमदिने स श्रीमदिन्दुमती मित्रायै यत् पत्रमलिखत् तत्रापि सच्चिदानन्द इति नाम्नः स्वाक्षरं कृतवान्।

यद्यपि खृष्टीयषोडशशताब्द्यामेव "पासपोर्ट"-प्रथा प्रावर्तत, तथापि अमेरिका-गमनाय इंलण्डगमनाय च 'पासपोर्टस्य' 'विसा'याश्च कापि बाध्यता नासीत्। प्रथममहायुद्धसमयादेव पासपोर्टस्य विसायाश्च बाध्यतामूलकप्रवर्तनम् अभवत्। तेनैव मन्ये स्वामिमहोदयोऽपि पासपोर्टं न गृहीतवान्। तस्य विसायाश्च किमपि प्रयोजनं नाभवत्। अमेरिकामवतीर्य स्वामिमहोदयः किमेव नाम व्यवहरति स्म, तद् ज्ञातुं कोऽप्युपायो नास्ति। किन्तु "शिकागो"-धर्ममहासमितेः वक्तृ-रूपेण विवेकानन्द इति नाम प्रथममेव ज्ञायते। स भारतवर्षात् कस्यापि धर्मस्य

क्रिष्टोफर-कोलम्वसेन अमेरिकाविष्कारस्य चतुःशतवर्षाणां पूर्ति-मुपलक्ष्य तस्मिन्नेव वर्षे तत्र विश्वमेलनस्य आयोजनमासीत्। नाना-देशानां विशेषतः अमेरिकायाः शिल्प-विज्ञानयोः वाणिज्यस्यान्यस्या नानालौकिकविद्यायाश्च समुन्नतेः परिचयस्य जगद्वासिनां समीपे समुपस्थापनमेव तस्य सम्मेलनस्य मुख्यमुद्देश्यम् आसीत्। नारीप्रगतिः, चिकित्सा, वाणिज्यं, संगीतम्, अर्थनीतिः, विज्ञानम् एवमादिविभिन्न-विषयमवलम्व्य विंशतिः सम्मेलनानि आहूतान्यासन्। विश्वधर्म्म-सम्मेलनमपि तस्य विश्वसम्मेलनस्य अंशविशेष एवासीत्। स्वामि-महोदयोऽस्मिन् धर्मसम्मेलने समुपस्थातुमेव अमेरिकामगच्छत्। किन्तु तस्य तत्र कोऽपि परिचितो जनः परिचयपत्रं वा नासीत्। सुतरां शिकागो-नगरमभ्येत्योपायाभावात् एकस्मिन् होटलभवने आश्रयं गृहीत्वा द्वादश-दिनानि यावत् विस्मय-विह्वल-चित्तः परिभ्रम्य शिकागो-नगरस्य

---

निमन्त्रितः प्रतिनिधिः सन् शिकागोनगरं नागच्छत्। अध्यापको राइट-महोदयः शिकागो-धर्म-सम्मेलन-प्रतिनिधि-निर्वाचन-सभायाः सभापतये यदा इममेव स्वामिमहोदयं प्रतिनिधिरूपेण ग्रहीतुमनुरोधपत्रं दत्तवान्, तदा केनापि नाम्ना तं परिचाययितुं नूनमेव प्रयोजनमभवत्। एवं तदैव मन्ये स तस्य "विवेकानन्द" इति नाम अलिखत्।

सम्प्रति एषैव पृच्छा, तदेव नाम किं स स्वयमगृह्णात् अथवा कोऽपि तस्मै अददात्। अनेके वदन्ति, 'खेतडी' - महाराजः भारतत्यागात् पूर्वमेव तस्मै एतन्नाम ददौ। खेतड़ीस्थाने स सच्चिदानन्द-नाम्ना परिचित आसीदिति मन्ये।

किन्तु खेतडीनृपतिः गुरोर्नूतनं नामकरणं कथं कर्त्तुमुद्युंक्त, तस्य किमपि सन्तोषकरं कारणम् अन्विष्यापि न लभ्यते। श्रद्धेयगुरोर्नाम-परिवर्त्तनं शिष्येण अनेकांशतः अस्वाभाविकं, तस्य प्रयोजनमपि किमप्यासीदित्यपि न ज्ञायते। "सच्चिदानन्द" इत्यपि नाम अतीव सुन्दरम्। स्वयमेव स्वामिमहोदयः तन्नाम शुभं मत्वा गृहीतवान्।

विश्वप्रदर्शनीमेवापश्यत्। सोऽतीव सुमहान् व्यापारः। भूयांसो जनाः, केयं व्यग्रता! कीदृक् च चांचल्यम्! सर्व्वमेव नूतनमवधृतं जातम्। पाश्चात्त्यदेशस्य धनसम्पदां प्राचुर्यं यान्त्रिकं कलाकौशलं शिल्प-विज्ञानयोः समृद्धिरित्यादिविषये तदुद्भावन-शक्ति-विषये च तस्य धारणा स्वल्पा एवासीत्। विज्ञानस्य कियानभिनव आविष्कारः! कियान् वा विविध-यन्त्राणां पण्यसम्भारः! कुवेरोपम-धनवतां देशे शिल्पकलायाः कीदृशी समुन्नतिः! पाश्चात्त्यदेशस्य अपूर्वमेव गरिमाणमालोक्य विस्मयेनैव सोऽभिभूत आसीत्। तेनैव सह भारतस्य दैन्यविषयं स्मरतस्तस्य चित्तं दुःखवेदनया भाराक्रान्तं जातम्।

परिच्छदमधिकृत्य स्वामिमहोदयेन अनेकैव विडम्बना सहनीया जाता। युववालकसंघस्तस्य पश्चादनुसृत्य नानाभावेन तं विराग-भाजनमकरोत्। कोऽपि तस्य परिच्छदं विधृत्य आकर्षति स्म, कोऽपि वा करतालिकां ददाति। निरुपायः स सर्वम् असहत। शिकागोनगरे समुपस्थितेः कियद्दिनेभ्यः परमेव प्रदर्शन्या अनुसंधानागारं समेत्य तस्य मनः सम्पूर्णतया निरुत्साहं जातम्। सर्वैव प्रचेष्टा विफला। सोऽजानात् यत् सितम्बरमासस्य प्रथमसप्ताहात् प्राग् नारब्धमेव धर्मसम्मेलनं भविष्यति। एवं च उत्तमपरिचयपत्रादावसति कोऽपि सभायाः प्रतिनिधिरूपेण नैव निर्वाचितो भवितुमर्हति। अन्यश्च विषयः, प्रतिनिधिनिर्वाचनस्य अन्तिमो दिवसो व्यतीत एव।...

भारते एतत्सम्मेलनसम्वन्धिवृत्तं कोऽपि विशेषतो न जानाति स्म। स हि कस्याप्यनुमोदितधर्मस्य प्रतिनिधिरूपेण नागतवान्। इतश्च

---

स्वामिमहोदयः विभिन्नकाले नामपरिवर्त्तनं कृतवान्। एतदेव अतिशय-स्वाभाविकं मन्ये, यत् स्वामिमहोदयः स्वयमेव विवेकानन्द इति नाम गृहीतवान्। तत् अमेरिकामवतीर्यापि भवितुमर्हति, ततः पूर्वमपि वा।

सम्मेलनं यावत् तत्रावस्थानोपयोगि धनं च तस्य समीपे नास्ति। सर्वमेव नैराश्यव्यंजकं जातम्। वयन्तु स्वामिमहोदयस्य तदानीन्तनीं मनसोऽवस्थां ज्ञातुमेवार्हामः। सोऽभिभूत इव जातः। किंकर्त्तव्य-विमूढः सन् स मद्रासदेशीयशिष्यान् निकषा साहाय्याय समुद्र-तारं प्रेरितवान्, एवं सर्वामेवावस्थां विवृत्य पत्रमलिखत्। समन्तात् तमोभिरावृता दिक्—कुत्रापि आलोकः कियानपि नादृश्यत। तथापि स आशां न त्यक्तवान्। स्थिरं निरचिनोत् यत् येन रूपेणापि भवतु अन्तं यावत् यत्नः कर्त्तव्यः। स श्रीभगवतो निर्देशं लब्धवान्। शतशो नैराश्यमध्येऽपि स एव विश्वासः साहसञ्च तम् अनुप्रेरयतः स्म।

शिकागो-नगरीस्थे होटल-भवने व्ययोऽतीवाधिकः। स संवादमेतं प्राप्तवान् यत् वष्टननगरे व्ययोऽतिस्वल्पस्तदपेक्षया। स वष्टनाभिमुखं गतवान्। श्रीभगवान् उत्साहसम्पन्नानां चिर-सहायः। यत्रैव विवेकानन्दोऽगच्छत् तत्रत्यानामनेकेषां दृष्टिं स समाकर्षत्। वष्टन-गमन-पथे वाष्पीय-यान-मध्ये तस्याकृतिः संलापश्च एकां सहयात्रिणीं मोहयतः स्म। सहयात्रिणी त्रिजिसेडोज-जनपदस्य काचित् सम्भ्रान्ता महिला। सा हि स्वामिमहोदयमामन्त्र्य स्वस्य एव भवनमनयत्। एतेन तस्यानेकेषु विषयेषु परं सौविध्यमेवाभवत्। त्रिजिमेडोज-जनपदात् (अगस्त-मासस्य विंशे दिने १८९३ ईसाब्दे) स आलासिंगाम् अलिखत्, यत् "...अत्रावस्थानेन मम एतदेव सौविध्यं भवति, यत्मे होटलभवने प्रत्यहव्ययितम् एकं पाउन्डमितं धनं न व्ययितम् भवति। एवञ्च तस्या महिलाया एष एव लाभः यत् सा स्वीयवन्धूनामन्त्र्य भारतात् आगतम् एकमद्भुतं जीवमदर्शयत्!!! एताः समस्ता यन्त्रणाः सहनीया एव। मया तु सम्प्रति अनाहारः, शीतं, ममाद्भुतपरिच्छदस्य कृते यथागच्छतां लोकानामुपहासः एवमादिभिः सह संग्रामं कृत्वेव गन्तव्यम्। प्रिय वत्स! एतत् ज्ञातव्यं, यत् किमपि महत् कार्यं गुरुतर-परिश्रमं विना, क्लेशस्वीकारं वा विना न सम्पद्यते। एकस्तु विषयो

मम दृष्टिपथमायाति, यत् एते मदीयं हिन्दूधर्मसम्बन्धीयमुदारमतं दृष्ट्वा नाजाराथस्यावतारं प्रति मम प्रेम संवीक्ष्य च आकृष्टा जाताः।…”

तस्या एव भद्रमहिलायाः परामर्शेन स्वामि-महोदयः तद्देशीय-पाद्रीणां परिच्छदवत् एकं परिच्छदं निर्माति स्म।…स एकस्यां वृहद्-महिला-सभायां वक्तृता-करणाय आमन्त्रणं प्राप्तवान्। क्रमशः शनैः बहुभिर्विशिष्टलोकैः सह तस्य परिचयोऽपि जातः।*

---

* तादृशीमनिश्चितावस्थां प्राप्य विपन्नस्यापि स्वामि-महोदयस्य मनः स्वदेश-वार्तां न व्यस्मरत्। एवं दरिद्राणां चिन्ता तस्य मनो व्याकुलितं चकार। आला-सिङ्गां प्रति लिखिते पूर्वपत्र एव एकत्रास्ति—

“…दुःखितानां व्यथामनुभव, तत्साहाय्याय भगवन्तं प्रार्थयस्व च। नूनमेव साहाय्यमागमिष्यति। द्वादशवर्षाणि यावत् अहं मनसा एतावत् भारवहनं कुर्वन् स्वशिरसि ईदृशीमेव चिन्तामादाय व्यचरम्।…हृदयस्य रक्त-मोक्षणं कुर्वन्नेवाहं पृथिव्यर्द्धमेवातिक्रम्य देशान्तरे साहाय्यं प्रेप्सुरुपनीतोऽ-भवम्। अनन्त-शक्तिमांस्तु भगवान्, स मत्साहाय्यं विधास्यति, इत्यहं जाने। एतस्मिन् देशे अनाहारेण शीतेन वा अहं विगतजीवनोऽपि भवितुमर्हामि। किन्तु भोः! मद्रास-देशवासिनो युवानः! युष्मभ्यम् एतेभ्यो दरिद्रेभ्यो-ऽज्ञेभ्यश्च एवमत्याचारपीडितेभ्यः सहानुभूतिं तदर्थमीदृशीं प्राणपणचेष्टां दाय-स्वरूपामर्पयामि।

गच्छत, अस्मिन्नेव मुहूर्ते तस्यैव पार्थसारथेर्मन्दिरं गच्छत, यः खलु गोकुलस्य दीन-दरिद्रगोपानां सखा आसीत्, यः खलु गुहकचंडालमालिङ्गितुमपि न संकुचितो जातः, यः खलु तस्य बुद्धावतारे राजपुरुषाणामामन्त्रणं तुच्छीकृत्य कस्याश्चित् वेश्याया निमन्त्रणं स्वीकृत्य तामुद्धधार। गच्छत, तमेव निकषा साष्टांगं प्रणिपत्य तस्मै आत्मानं महाबलिं दत्त। बलिः, जीवनबलिस्तेषामेव कृते, येषां कृते प्रतियुगं स अवतरति, येभ्य एव स सर्वमपेक्ष्य समधिकं स्निह्यति, तेषामेव दीनदरिद्राणां पतितानामुत्पीडितानां कृते। यूयं समग्रमेव जीवनं

सैव भद्रमहिला तं हार्वर्ड-विश्वविद्यालयस्य ग्रीक-भाषायाः जे० एच्० राइट्-नाम्ना प्रसिद्धाध्यापकेन सह परिचितमकरोत्। प्रथम-दिवसस्य चतुर्घटिकां व्याप्य संलापेनैव अध्यापको राइट्-महोदयः भारतीयस्यैकस्य तरुणसंन्यासिनः प्रतिभया एतावान् मुग्धो जातः, यत् सः स्वतःप्रणोदित एव स्वामिमहोदयाय सर्वस्मिन्नेव विषये साहाय्यं कर्तुमभिलाषं व्यक्तमकरोत्। धर्ममहासभायां हिन्दूधर्मस्य प्रतिनिधिरूपेण योगदानार्थमनुरोधं चकार च। किन्तु यदा स्वामि-महोदयोऽवदत्, यत् तस्य किमपि परिचयपत्रं नास्तीति, तदा राइट्-महोदयः हसन्नवदत् यत् "भवतां समीपे योग्यताया निदर्शनस्य अनुसंधानं, एवं किरणं वितरितुं सूर्यस्याधिकारोऽस्ति न वेति जिज्ञासा तुल्यैव कथा।"

स हि प्रतिनिधि-निर्वाचन-समितेः सभापतये पत्रमलिखत्—"असौ एतादृशो विज्ञो जनो, यत् सर्वेषामेवास्माकमध्यापकानां पांडि-त्यस्य एकीकरणेनापि अस्य पाण्डित्यस्य सदृशं न स्यात्।" न केवलं तन्मात्रं, स शिकागो-पर्यन्तमेकं पाथेयशुल्कपत्रं क्रीत्वा स्वामिमहोदयाय प्रायच्छत्। एवं च धर्मसम्मेलनस्य प्रतिनिधि-व्यवस्थापक-समितौ अपि एकं पत्रं प्रेरयामास। एतत् सर्वं पूर्वत एव श्रीभगवन्निर्धारित-व्यवस्थया तुल्यमिति मनसि प्रतिभाति।

नवीनामाशामादाय स्वामीमहोदयः शिकागोस्थानं प्रतियातुं प्रवृत्तः।

---

यावत् त्रिंशत्कोटि-भारतवासिनां समुद्धाराय व्रतं गृहीत—ये प्रतिदिनमेव निमज्जन्ति।

एतदेकेनैव दिनेन न साध्यते। पन्थाः भयंकरः कण्टकपूर्णश्च। किन्तु पार्थ-सारथिरस्माकं सारथिरपि भवितुमिच्छुस्तत् वयं जानीमः। तस्यैव नाम्ना तं प्रति अनन्तं विश्वासं संस्थाप्य भारतस्य शतशतयुगात् संचिते अनन्तदुःखराशौ अग्निसंयोगं कुरुत, तत्सर्वं दुःखं भस्मसात् भवत्येव।..."

रात्रौ वाष्पीययानं तत्रोपातिष्ठत। कुत्र यामि, किं करोमि इत्येवमचिन्तयत्। व्यवस्थापक-समितेः कार्यालयस्य चिह्नितपत्रमपि तेन हारितम्। न स श्वेताङ्गः, अनेकेषां श्वेताङ्गानां दृष्टौ कृष्णवर्णो मनुष्यः, अस्पृश्येभ्योऽपि घृणास्पदम्। निरुपायः सन् वाष्प-यानविश्रामस्थानस्य (स्टेशन) एकस्मिन् प्रान्ते काचित् बृहद्रिक्ता पेटिका आसीत्, तन्मध्ये आश्रयम् उपलभ्य येन केन प्रकारेण दुर्जय-शीतकवलात् अतिकृच्छ्रेण आत्मरक्षामकरोत्। प्रभातायामेव रात्रौ स पन्थानमनुसंधातुं बहिरभवत्। सर्वत्रैव स प्राप्तवान् अवमाननं लांछनाञ्च। भारवाहिनोऽपि तं प्रतारितम् अकुर्वन्। कियत्सु स्थानेषु तु स कर्कशभावेनैव विताडितोऽभूत्। बहुष्वेव भवनेषु भृत्यैः स अवमानितोऽक्रियत। कुत्र वा, तत्-समक्षमेव सशब्दं द्वारमवरुद्धं चक्रे, 'निग्रो' इति मत्वा तमवमानितं बहु चकार।*

अनेनैव विधिना बहुकालं यावत् इतस्ततो भ्रमणात् परं क्लान्तः स पथपार्श्वे उपविष्ट एव जातः। तस्मिन्नेव काले स्वर्गीया दूती इव काचित् भद्रमहिला वर्त्मनोऽन्यपारस्थित-भवनात् बहिरेत्य सुस्वरेण तमपृच्छत्, "महाशय! किं भवान् धर्म्ममहासभायाः प्रतिनिधिः?"

---

* विवेकानन्दस्य दुःसाहसिक-पाश्चात्याभियानमादितोऽन्तं यावत् अतीव विपत्संकुलमासीत्। प्रतिपदमेव सुदीर्घ-चतुर्वर्षाणि प्रत्यहम् बहूनेव बाधाविघ्नानतीत्य तैः सह विरोधितां कृत्वैव सोऽग्रेसरोऽभूत्। सम्प्रति प्रायशः सप्ततिवर्षेभ्यः परं सर्वत्रैव स्वामिमहोदयस्य विजयगीतिः श्रूयते। किन्तु एतस्यैव विजयस्य मूल्यरूपेण तेन सोढव्यमासीत् आघातबहुत्वं, निर्यातनं, उत्पीडनञ्च। सोऽरोदीत् क्षतविक्षतो भूत्वा मनःक्षोभेण मृतप्रायोऽभवत्। किन्तु तस्य अश्रुजलं पाश्चात्यभूखण्डमेव (उर्वरं) अंकुरजननोपयोगि चकार। स रणे आहूतो जातः। किन्तु न अम्रियत, अन्तं यावत् स विजयी संजातः। देवानां विशेषाशीर्वादस्तस्मिन्नासीत्।

प्रत्यवदत् स्वामिमहोदयः "अथ किम्, तदेव सत्यम्। किन्तु अहं तद्-भवनस्य परिचय-चिह्नं हारितवान्, अतोऽतीव दुर्दशामध्ये निपतितः।"

तदाकर्ण्य सा सदाशया महिला परमसमादरेण संन्यासिनमेनमतिथिं स्वगृहं नीत्वा तस्य आवासस्थानं कृतवती। सेवाया आन्तरिक-श्रद्धा-भावस्य च सीमा नासीत्। नियतिस्तमनेनैव पथा एतादृशेन एकेन जनेन सह परिचितमकरोत्, यः खलु तस्यातिविश्वस्तभक्तानामन्यतमः। अस्या महामाननीयरमण्या नाम मिसेज हेल इति। स एव भक्तपरिवारः स्वामि-महोदयाय नानाभावे सहायतामकरोत्। तस्यैव 'हेल्-परिवार'स्य गृहमेव स्वामिमहोदयस्य अमेरिकायां स्व-भवनमिवासीत्। स्वामिमहोदयस्तामेव महिलां मातरमाह्वयति स्म।

आहारान्ते विश्रामात् परं सैव महिला स्वामिमहोदय-सहगामिनी महासभायाः कार्यालयमगच्छत्। तत्र स प्रतिनिधिरूपेण गृहीतोऽभवत्। परञ्च प्राच्य-प्रतिनिधिवृन्दैः सह अवस्थानव्यवस्था तस्य संजाता।...

—:*:—

१८९३ ईसाब्दीय-सितम्बरमासस्य एकादशदिनं सोमवासरो जगतो धर्मेतिहासस्य एकं स्मरणीयं दिनम्—प्राच्यप्रतीच्ययोर्मिलनदिनम्—सर्वस्मिन्नेव जगति विश्वभ्रातृत्व-प्रतिष्ठायाः सूत्रपातनम्। स्वामिविवेकानन्दं यन्त्ररूपेणावलम्व्य विश्वस्य धर्ममहासम्मेलने प्राचीन-भारतस्य वेदान्तधर्म्मः सर्वोच्चे आसने प्रतिष्ठितो जातः। विश्वस्य शान्तेः मैत्र्यस्य च पन्थाः संस्थापितो बभूव।

पूर्वाह्णे दिवा दशवादनसमये नव-निर्मिते 'आर्ट-इन्स्टिट्यूट' नाम्नः प्रतिष्ठानस्य कोलम्बस्-नामक-प्रशस्तप्रकोष्ठे यथाविधि स्वस्तिवाचनादिना संगीतादिभिश्च धर्मसम्मेलनस्य उद्बोधनं जातम्। * तस्य दिनस्य इत्थं कार्यपद्धतिक्रम आसीत्—प्राथमिकी विज्ञप्तिः, प्रति-

* स्वामीविवेकानन्दो कञ्चित् मद्रासदेशीयं शिष्यमलिखत्, "महासभाया आरम्भ-दिवसे प्रातः सर्वे वयं 'शिल्पप्रासाद'-भवने समवेता भवामः।…अत्र तु सर्वजातीया एव लोकाः समवेताः।…कल्पयत, निम्ने एकमेव प्रकोष्ठं, तत्परं प्रकाण्डं गैलरीति उपवेशन-स्थानम्, तत्र तु अमेरिकावासिनः श्रेष्ठा एव सहस्राणां षट् सप्त वा सुशिक्षित-नर-नार्यः समवेताः, मञ्चोपरि पृथिव्याः सर्वजातीयपण्डितानां समावेशश्च। सभा समारब्धा जाता। तदा सभासमीपे एकमेकं प्रतिनिधिं परिचितं कर्तुं समयः समारब्धः। ते प्रतिनिधयोऽपि अग्रेसरन्तः किञ्चित् किञ्चिदवदन्।…सर्वेऽपि वक्तृतायै वक्तृता-विषयं स्थिरीकुर्वन्तः सज्जीभूताः समायाताः। निर्बोधोऽहं किमपि न निश्चयं कृत्वा समागतः। केवलं देवीमहं सरस्वतीं प्रणम्य अग्रेसरोऽभवम्। ब्यारोज-महोदयो मे परिचयं विवृणोति स्म। गैरिकवसनेन मे सर्वे श्रोतारः समाकृष्टा जाताः।…"

निधिवर्गस्य अभ्यर्थना, तस्य प्रत्युत्तरदानञ्च । मञ्चमध्यस्थले सभापतिः कार्डिनल गिबन्स्-महोदय आसीत्। तमेव केन्द्ररूपं विधाय दक्षिणे वामे च विभिन्नधर्मीय-प्रतिनिधयः समुपविष्टाः। खृष्टीय-धर्मस्य प्रधानभूतशाखानां प्रतिनिधयस्तत्र आसन्नेव, पृथिव्या अन्यान्याधर्माणां, यहूदी-धर्मस्य, हिन्दू-धर्मस्य, जैन-धर्मस्य, बौद्ध-धर्मस्य, चीनदेशीयकान्फ्युसियान-धर्मस्य, जापानदेशीयशिन्टो-धर्मस्य, इस्लाम-धर्मस्य, जरथुष्ट्र-धर्मस्य च प्रतिनिधयः स्वस्वजातीय-परिच्छदं दधानाः समुपविष्टाः। ब्राह्म-समाजस्य प्रतिनिधिः प्रतापचन्द्रमजुमदारः, जैन-सम्प्रदायस्य प्रतिनिधि-रूपेण मुम्बइप्रदेशीय-नागरकरः वीरचाँदगान्धी-महोदयश्च समुपविष्टाः। एनिबेसेन्ट-महोदया ज्ञानचक्रवर्ती च थियोसफिस्टानां प्रतिनिधि-द्वयम्। सिंहल-प्रदेशात् धर्मपाल एव बौद्धानां प्रतिनिधिरूपेण समागतवान्। स्वामि-विवेकानन्दो न कस्यापि धर्मसम्प्रदाय-विशेषस्य, किन्तु स एव समग्रभारतवर्षस्यैव सनातन-धर्मप्रतिनिधिरासीत्।

प्रतिनिधीनामाह्वानमात्रेणैव समागत्य क्रमशः सर्वे एव स्व-स्व-धर्मस्य परिचयं विवृत्य पूर्वमेव प्रस्तुतवक्तृतां संक्षिप्तभावेन विवव्रुः। स्वामिमहोदयस्तु प्रथमं न किमपि लिखित्वा सज्जीभूय समागच्छत्। एतादृशि महति सम्मेलने इतः पूर्वं स कदापि वक्तृतां नाकरोत्। यदा यदा तस्य आह्वानं जातं तदैव स कतिवारान् "पश्चात् वदिष्यामि" इत्युक्त्वा कालं निनाय। अवसाने यदा कालक्षेपो न युक्तस्तदा स्वामि-महोदयो दण्डायमानः प्रथममेव—"भोः! अमेरिकावासिभगिन्यः भ्रातरश्च" इत्युक्त्वा सभायाः सम्बोधनम् अकरोत्। एतत्सम्बोधन-वचनमध्ये एतादृशी विपुला शक्तिरासीत्—या सर्वेषामेवान्तःकरणम-स्पृशत्। तद्वचनश्रवणमात्रेणैव शतशः श्रोतारः स्वकीयमासनं युगपत् परित्यज्य दण्डायमाना अभवन्। कियतो निमेषान् व्याप्य चतुर्दिक्षु महान् करतालिका-ध्वनिः समुदतिष्ठत्। सैव उद्दीपना ताश्च करतालिकाः न पुनर्विरमन्ति स्म।

सर्व एव प्राचीनविधिमनुसृत्य श्रोतृणां सम्बोधनं चक्रुः। केवलं विवेकानन्द एव सम्बोधनमकरोत्—"भगिनी भ्राता च" इत्युक्त्वा मानवजातिम्। वक्तुः अन्तःस्थितं भ्रातृभावस्य स्पन्दनं सर्वाण्येव हृदयानि झंकृतानि अकरोत्। प्रत्येकोऽन्वभवत् यत् विवेकानन्दस्य मुखनिःसृतां युगस्य कल्याणवाणीमिव सर्वे अशृण्वन्। क्षणादेव समग्र-मानवजातीनामैक्यं सहस्र-सहस्र-नर-नारीणामन्तःकरणे अनुभूतमिवाभवत्।*

स्वामिमहोदयः कियतो निमेषान् भूयो भूयो यत्नेनापि श्रोतृवृन्दस्य उत्साहं आनन्दञ्च मन्दीभूतं कर्तुं नाशकत्। अभिभूत इव स दण्डायमानोऽतिष्ठत्। यदा सभा स्तब्धा जाता, तदैव स संक्षिप्तमेकं भाषणं कृतवान्। संक्षिप्तमपि तस्य भाषणम् उदार-विश्वजनीनभावेन पूर्णमासीत्। स पृथिव्याः प्राचीनतमसंन्यासि-सम्प्रदायस्य नाम्ना, सर्वधर्मस्य प्रसूतिरूपो यः सनातनो वैदिकधर्मः तस्य प्रतिनिधिरूपो भूत्वा, पृथिव्याश्च यावतां हिन्दू-जातीयानां सर्वेषां हिन्दुसम्प्रदायानां कोटि-कोटि-संख्यकनराणां नारीणाञ्च मुखस्वरूपो भूत्वा आर्य-ऋषीणां नाम्ना सभामभ्यर्थयामास। स जगतां सर्वधर्मस्य जननीरूपेणैव सनातन-हिन्दू-धर्मं सभायामुपास्थापयत्। एवञ्च अवदत्, "यो धर्मः

---

* स्वामिमहोदयस्य तत्सम्बोधन-वाक्यमध्ये विश्व-भ्रातृत्वस्य बीजं निहितमासीत्। अपि च विश्वमानवताया झंकारः, वैदिकऋषीणां वाणी, सौभ्रात्रस्य च स्पर्शोऽपि आसीत्। द्वि-सहस्र-वर्षेभ्यः प्राक् "यीशु" अपि अवदत्—"भगवान् यदि मानव-जातीयानां पिता स्यात् तदा वयं तस्य सन्तानाः।" खृष्टानस्य देशे खृष्टीयान् प्रति स्वामिमहोदय-कण्ठात् निःसृता सैव विश्वभ्रातृत्वस्य मानव-कल्याणस्य च वाणी ध्वनिता आसीत्। सर्वे एव तस्य परम-पितुरेव अपत्यानि, मानवो मानवानां भ्राता, एका अखण्डा मानवजातिः। "रोमाँ रोलाँ" नामदार्शनिकोऽवदत्, यत् "अयमेव श्रीरामकृष्णस्य निःश्वासः।...सर्वां बाधामतिक्रम्य तस्य महतः शिष्यस्य मुखान्निर्गतो जातः।"

पृथिवीं चिरं समदर्शनं सर्वविध-मतवादग्रहणं च शिक्षयति, अहं तस्यैव धर्मस्यान्तर्वर्त्तीति स्वं गौरवान्वितं मन्ये। वयन्तु न केवलं भिन्न-धर्मावलम्बिनं समदृष्ट्या पश्यामः, अपि तु सर्वमेव धर्मं सत्य-रूपेण वयं विश्वसिमः। या एव जातिः पृथिव्याः सर्वस्यैव धर्मस्य जातेश्च उपद्रुतं, त्रस्तम्, आश्रयलिप्सुं जनगणं चिरम् अकातरम् आश्रयदानमकरोत्, तस्या एव जातेरन्तर्भुक्तोऽहमिति आत्मानं गौरवान्वितं मन्ये। यस्मिन् वत्सरे रोमकानां भयंकरोत्पीडनात् यहुदीजातीयानां पवित्रो देवा-लयश्चूर्णीकृतो जातः, तस्मिन्नेव वत्सरे तेषां कतिपयेषु आश्रयलाभाय दक्षिणभारतमागतेषु ममैव जातीयास्तेषां सादरं हृदयमध्ये धारणं अकुर्वन्। तदर्थमपि अहं स्वात्मानं गौरवान्वितं मन्ये। जोरायास्त-रानुगामिनः सुवृहत्-पारसीकजातेरवशिष्टांशान् य एव धर्म्म आश्रय-दानमकरोत्, अद्यावधि यो धर्म्मस्तान् प्रतिपालयति तस्यैव धर्म्म-स्यान्तर्भुक्तोऽहम्।"

ततः परं स्वामिमहोदयो विभिन्नधर्माणां गन्तव्यस्थानमेकमेवेति गीतायाः प्रसिद्धश्लोकमुद्धृत्य तददर्शयत्—"ये यथा मां प्रपद्यन्ते, तांस्तथैव भजाम्यहम्। मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ! सर्वशः॥" अर्थात् यत्किमपि धर्ममतमाश्रित्य कोप्यागच्छतु, तद्भावेनैव अहं तमनुगृह्णामि। भो अर्ज्जुन! मनुष्याः सर्वतोभावेनैव मन्निर्दिष्ट-पथ-मेवानुसरन्ति। ततः परं शिवमहिम्नस्तोत्रस्य एकांशमुद्धृत्य अवदत्, यत् "रुचीनां वैचित्र्यात् ऋजुकुटिलनानापथजुषां नृणामेको गम्य-स्त्वमसि पयसामर्णव इव।"

अर्थात् हे प्रभो! नानापथगामिनीनां नदीनां सागर इव विभिन्न-रुचिवशात् सरल-कुटिलादिनानापथचारिणां जनानां त्वमेव एकं गन्तव्यस्थानम्।

श्रीरामकृष्णपदप्रान्ते समुपविश्य स्वामिमहोदयो "यावन्ति मतानि तावन्त एव पन्थानः" एवं यां समन्वयवाणीमश्रृणोत्, उदात्तकण्ठः

स्वामिमहोदयस्तामेव वाणीममेरिकायामघोषयत्। विभिन्न-धर्म्म-मध्यस्थित-द्वन्द्वस्य संघर्षस्य च विषमयफलं चित्रैरुपस्थाप्य सोऽवदत् "साम्प्रदायिकताः, संकीर्णता एवम् एतासां फलरूपा धर्म्मोन्मत्तता एतां मनोरमां पृथिवीं बहुकालं यावत् आयत्तामकुर्वन्। एषैव धर्म्मोन्मत्तता जगति महान्तमुपद्रवनिचयमुत्पादयामास। कतिवारान् इमामेव पृथिवीं नरशोणितैः पंकिलामरंजयत्, सभ्यतायाश्च निधनं चकार। समग्रामेव जातिं कदा कदा हताशाम्बुधौ प्लावयामास। अयमेव भीमः साम्प्रदायिकता-पिशाचो यदि नाभविष्यत्, तदा मानव-समाजोऽद्य पूर्वमपेक्ष्य कतिगुणामधिकतरामुन्नतिमलप्स्यत। किन्तु एतस्य विनाशसमयः समागतः। अहमपि सर्वतोभावेन एतामेवाशां दधामि, यत् अस्याः धर्मसमितेः सम्मानार्थं य एव घण्टाशब्दः अद्य कृत आस्ते, स एव घण्टानिनादः धर्मोन्मत्ततायाः करवालात् कुतर्कादिभ्यश्च उत्पन्नं विविधं दौरात्म्यं एवञ्च एकमेव चरमलक्ष्यमुपलक्ष्य अग्रेसरतां जनानां मध्ये सर्वविधानामसद्भावानां समूलघातं विनाशं प्रचारयतु।*

पञ्चमदिनस्य अधिवेशने स्वामि-महोदयस्तु विभिन्न-धर्मावलम्बिनां मध्ये मतद्वैधस्य मनोमालिन्यस्य च कारणं वोधयितुं कूपवासिनः समुद्र-वासिनश्चेति द्वयोर्भेकयोरुपाख्यानमवातारयत्। ततोऽवदच्च— "अयि भ्रातरः! एतादृशः संकोर्णभाव एव अस्माकं मतवैषम्यस्य कारणम्। अहमेको हिन्दूधर्मावलम्बी, मदीयक्षुद्रतमे कूपमध्ये अहं उपविशामि, एवं एतमेव कूपं समग्रभुवनं मन्ये। खृष्टीयधर्मावलम्बी

* स्वामिमहोदयो धर्मसम्मेलने विभिन्नदिने याः सर्वाः वक्तृता अकरोत्, तासां सर्वासाममूल्यवक्तृतानां मध्ये ग्रंथेऽस्मिन् स्थानाभावात् एकस्या अपि वक्तृतायाः पूर्णरूपेण सन्निवेशनं न सम्भावितं जातम्। ताः सर्वा एव उद्बोधन-कार्यालयात् "स्वामि-विवेकानन्दस्य शिकागोवक्तृतेति" शिरोनाम्ना प्रकाशिताः जाताः।

च तस्य क्षुद्र एव कूपे उपविष्टोऽस्ति, एवं तमेव समग्रां पृथिवीं मन्यते। मोहम्मदीयोऽपि तस्य क्षुद्रमेव कूपमध्यासीनः समस्तामेव धरणीं तमेव मन्यते। भोः अमेरिकावासिनः! भवन्तोऽस्माकमेतत् क्षुद्र-क्षुद्र-जगतामवरोधं भंक्तुमेव विशेषरूपेण यत्नवन्तो जाताः, तदर्थमहं भवद्भ्यो धन्यवादं ददामि। आशां च पोषयामि, ईश्वरो भविष्यति काले युष्माकमेतन्महदुद्देश्यसाधने साहाय्यं करिष्यतीति।..."

एकैकश एव वक्ता स्व-स्वसम्प्रदायमधिकृत्य भगवतो महिमानमकीर्तयत्। केवलो विवेकानन्द एव सर्वेषां धर्माणां वचनं भगवतः कथा, तस्यैव विराजः पुरुषस्य कथैव इत्यवदत्। तमेव विराजं पुरुषमधिकृत्य यः खलु सार्वभौमो विश्वधर्मो निर्मितः प्रतिष्ठितश्च भविष्यति, तद्धर्मसम्बन्धे तेनोक्तम्—"स एव धर्मो यमनन्तं भगवद्विषयमुपदेक्ष्यति, स एव तादृशोऽनन्त एव भविष्यति। स एव धर्मसूर्यः कृष्णभक्तं प्रति, खृष्टधर्मं प्रति, साधुम् असाधुं वा प्रति, सर्वान् प्रति समभावेन तुल्यं किरणजालं प्रसारयिष्यति। स धर्मः केवलो ब्राह्मण्यधर्मः बौद्धधर्मो वा खृष्टीय-धर्मो वा मुस्लिम-धर्मो वा न भविष्यति, किन्तु सर्वेषामेव धर्माणां समष्टिरूपो भविता। अथ च तस्मिन्नेव धर्मे उन्नतेरनन्तपथो मुक्त एव स्थास्यति। स धर्म एतावान् सार्वभौमो भविष्यति, यत् संख्यातीतैः सर्वतः प्रसारितहस्तैः पृथिव्याः सर्वानेव नरान् नारीश्च सादरमालिंगिष्यति। एवं तस्य समस्तैव शक्तिः सर्वेषां सर्वजातीयानां मनुष्याणां स्व-स्व-देवत्वोपलब्धये साहाय्यं कर्त्तुमेव नियुक्ता स्थास्यति। 'प्रत्येकधर्म एव ईश्वरोऽस्ति।' सर्वस्मिन्नेव जगति एतत्सत्यघोषणाभारः अमेरिकावासिनां कृते आसीत्।"

स कस्यापि धर्मस्य निन्दां तत्समालोचनं वा न कृतवान्। कमपि धर्मं न हीनमवदत्। सोऽब्रवीत्—"खृष्टीयैर्न हिन्दुभिः बौद्धैर्वा भाव्यं, अथवा हिन्दुधर्मीयैः बौद्धधर्मावलम्बिभिर्वा न खलु खृष्ट-धर्म-

परैर्भाव्यं, किन्तु प्रत्येकधर्मीयैर्निजस्वातन्त्र्यं वैशिष्ट्यं च स्थिरमक्षुण्णं संरक्ष्य अन्यधर्मभावो हृदयेन ग्रहीतव्यः, क्रमशश्च उन्नतैर्भवितव्यम्। उन्नतेर्विकासस्य च एष एव पन्थाः।"

धर्ममहासम्मेलनं तं तरुणं संन्यासिनमभिनन्दितं चकार। एकेनैव दिनेन तस्य यशः समस्तायामेवामेरिकायां प्रसारितं जातम्। अमेरिकासंवादपत्राणि धर्मसम्मेलने समागतेषु जनेषु विवेकानन्दमेव सर्वश्रेष्ठमघोषयत्। अपि च तान्यवदन्, यत् "तस्य वक्तृता-श्रवणात् परं भारततुल्यज्ञानवृद्धे देशे इतो धर्मप्रचारकप्रेषणं कीदृशं मौढ्यं, वयं विशेषभावेन तदनुभवामः।"*

'दि प्रेस आव् अमेरिका'-नाम्नी पत्रिका अलिखत् "हिन्दू-दर्शने विज्ञाने चातिपण्डितः प्रियदर्शनः तरुणवया विवेकानन्द आचार्यो धर्म-महासभायां यदेव वक्तृताप्रदानमकरोत्, तेन समग्रा सभ्यमण्डली स्तम्भिता मुग्धा च जाता। तत्र बहवो विशपाः खृष्टधर्मप्रचारकाश्च एवं प्रायशः यावत्खृष्टीयधर्मसम्प्रदायस्य धर्मोपदेष्टारः उपस्थिता आसन्, ते सर्व एव विवेकानन्दस्य प्रभावेण विस्मयाभिभूता जाताः। अस्यैव महापुरुषस्य वाग्मितासमन्वितं तस्य ज्ञानदीप्तं सौम्यं मुख-मण्डलम् एवं तस्य चिरसम्मानित-धर्मस्य माधुर्यवर्णनाय यदतिरम्यां अंग्रेजी-भाषामवदत् सा भाषा, एतत् सर्वमेकीभूय श्रोतृवृन्दमनसि एकं गभीरं दिव्यभावं सञ्चारयामास।"

'दि इन्टीरियर शिकागो'-नाम-पत्रमलिखत् यत्, "असौ एव स महापुरुषः, यस्य प्रशंसाध्वनिभिः सर्वमपेक्ष्य अधिकः कोलाहलो महासभायामुत्थितो जातः। एवं श्रोतृमण्डलीनामाग्रहातिशय्येन स भूयो भूयः सभामध्ये प्रत्यावर्त्तत।"

---

* यद्यपि धर्मप्रचारकप्रेरणं नावरुद्धं तथापि स्वामिना विश्वधर्ममहासम्मेलने हिन्दुधर्मस्य यत् श्रेष्ठत्वं प्रतिपादितं तन्न कदापि म्लानतां गमिष्यति।

'दि न्यूयार्क क्रिटिक'-नाम-पत्रिकाया उद्धृतिः—"संक्षिप्तवक्तृतासु अनेका वक्तृता विशेषवाग्मितापूर्णा जाता इति सत्यं, किन्तु हिन्दूधर्मीयः संन्यासी धर्ममहासभाया मौलिकनीतेस्तस्याश्च सीमाबद्धभावं यादृशेन रुचिरतरभावेन व्याख्यातवान् अन्यः कोऽपि तत् कर्तुं नाशक्नोत्। तस्य वक्तृतायाः सर्वांशमेव उद्धरामि, एवं श्रोतॄन् प्रति तस्याः प्रतिक्रियाया विपयिणीं कथामेतावतीमेव वक्तुमर्हामि, यदयं दैवशक्तिसम्पन्नो वक्ता इति। तस्य अकृत्रिमवक्तव्यनिवहं यादृश्या माधुर्यमयभाषया स प्रकटयामास सा तस्य गैरिकवसनस्य बुद्धिदीप्तात् सौम्यात् सुदृढाद् मुखमण्डलादपेक्ष्य स्वल्पतरमाकर्षणीया नासीत्।···

तस्य शिक्षा, वाग्मिता, अपूर्वं व्यक्तित्वमपि अस्मत्समीपे हिन्दूसभ्यताया एकं नूतनं स्रोतः प्रकटयामास। तस्य प्रतिभादीप्तं वदनमण्डलं गम्भीरः सुललितश्च कण्ठस्वरः स्वत एव मानवान् तमनुसमाकर्षतः। एवं विधातृदत्तसम्पद्भिः एतद्देशीयबहु'गोष्ठी'-गृहेषु 'गिरजा'सु च स्वमतं तेन प्रचारितम्। तत्फलेन वयमद्य तस्य मतवादेन सह सुपरिचिता अभवाम। केनापि प्रकारेण विषय-सारांशमभिलिख्य तत्साहाय्येन न स भाषणं दत्तवान्। किन्तु स्वकीय-वक्तव्यविषयान् धारावाहिक-भावेन प्रकाशमानोऽय अपूर्वसर्वनैपुण्येन ऐकान्तिकतया च सिद्धान्ते उपनीतो बभूव। परञ्च सुगभीरा धर्मप्रेरणा तस्य वाग्मितामपूर्वसम्पच्छालिनीमकरोत्।" (स्वामी महोदयो १८९४ ईसवीयनवम्बरपञ्चदशदिने शिकागोनगरात् "श्रीहरिदासबिहारीदासदेसाई" इति जनं प्रति यत् पत्रमलिखत्, तस्मादेव एषोंऽशः समुद्धृतः)।

तस्मिन्नेव धर्ममहासम्मेलने स्वामि-महोदयो विभिन्नदिनेषु द्वादश-संख्यकवक्तृता अददात्। वक्तृतादानार्थं स्वामि-महोदयाय अन्येभ्योऽपि वक्तृभ्योऽधिकसमयदानस्य व्यवस्था कृता। स एतादृक्

लोकप्रियो वक्ता आसीत् यत् मंचस्य एकस्या दिशो यदि अन्यस्यां दिशि सकृत् अगच्छत्, तेनैव श्रोतारः करतालिकानादैर्दिगन्तं परिपूर्य तमभिनन्दितवन्तः।

नीरस-वक्तृतामाकर्ण्य, रसहीन-प्रबन्धं वा श्रुत्वा श्रोतॄणां यदि धैर्यच्युतिरभवत् तदा सभापतिरुत्थाय अघोषयत्—"सभाकार्यावसानात् कियत्पूर्वं स्वामि-विवेकानन्दः काञ्चित् स्वल्पामेव वक्तृतां दास्यती"ति। स्वामि-महोदयस्य मुखात् काञ्चिदेव कथां श्रोतुं श्रोतारः शान्तचित्ताः सन्तो घण्टाद्वयमपि प्रतीक्षन्ते स्म।

एवम्प्रकारेण सप्तदशाधिवेशनानि जातानि। तत्र सहस्राधिकप्रबन्धानां पाठो वक्तृताश्च बह्व्यः अभवन्। स्वामिविवेकानन्देनापि बहूनि भाषणानि दत्तानि! तेषां सर्वेषामेव भाषणानां सारांश एव ज्ञातुं शक्यः। स हि मानवात्मनो महिमानं समुद्घोष्य अब्रवीत्—सर्व एव "अमृतस्य पुत्राः" "ज्योतिर्म्मयस्यैव तनयाः।"

स खलु नवमदिवसीयाधिवेशने हिन्दू-धर्मसम्बन्धिनीं यां वक्तृतामददात्, तत्र स अघोषयत् "···अमृतस्य अधिकारीति कियन्मधुरं वचः, कीदृशञ्च आनन्दवर्द्धकम्। अयि भ्रातरः! अनेनैव सुमधुरनाम्नाहं युष्मान् सम्बोधयितुमिच्छामि। यूयम् अमृतस्यैवाधिकारिणः। हिन्दू-जातीया युष्मान् 'पापिनः' इति वक्तुं नैव पारयन्ति। यूयं परमेश्वरस्य पुत्राः, अमृतस्य अधिकारिणः। यूयमेव पवित्राः पूर्णाश्च, अस्या मर्त्यभूमेर्देवा इति। यूयं पापिनः इति तु न सम्भाव्यते, मानवान् प्रति पापीति कथनमेव महापापम्।"

दशमदिवसीयाधिवेशने सोऽवदत्, "धर्मो भारतस्य तत्त्वतो नाभाव-विषयः" इति शीर्षक-लघु-भाषण-प्रसंगेन स्वल्पयैव भाषया प्रकटीचकार, यद् भारते धर्मस्याभावो वस्तुतो नास्ति—तात्त्विकोऽभावः अन्नवस्त्राणामेव। सोऽब्रवीत्, "·· निःस्वानेव पौत्तलिकान् उद्धर्तुं यूयं बहुलक्षसंख्यकमुद्राव्ययेनापि खृष्टधर्म-याजकान् प्रेरयथ। तेषां

भारतीयनिःस्वानां देहरक्षार्थै मुष्टिमेयान्नस्य व्यवस्थां किं कर्तुं शक्ताः ? भारते भयङ्कर-दुर्भिक्ष-काले सहस्रशो विधर्माणः ( हिन्दवः ) क्षुधया मृत्योः कवलत्वमापतन्ति। किन्तु भोः खृष्टीयधर्मावलम्बिनः ! यूयं तद्विषये पूर्णमुदासीना एव। यूयं समग्र एव भारते खृष्टस्य धर्ममन्दिरं निर्मातुमेव दत्तचित्ताः। किन्तु भारतवासिनां धर्मो बहुलो वर्त्तते, ते शुष्ककण्ठाः केवलमन्नेभ्य एव दीनाः प्रार्थिनः। ते अन्नं याचन्ते किन्तु प्राप्नुवन्ति प्रस्तर-खण्डानि।...अहं ग्रासाच्छादनहीनेभ्यः स्वदेशीयेभ्य एव युष्मत्सकाशे भिक्षार्थं समागतः। किन्तु खृष्टीयानां सकाशे पौत्तलिकेभ्यः साहाय्यलाभः कीदृशो दुरूहव्यापारः विशेष-भावेन तदुपलभ्यते।"

स एकदा वक्तृता-प्रसंगेन विश्वस्यैव शान्तिलाभाय सर्वेषामेव धर्माणामीश्वरं प्रार्थयामास—"यत् खलु हिन्दूजातीयानां ब्रह्म, य एव जरथूस्त्रपन्थिनां अहुर-मजदा नाम, य एव बौद्ध-धर्माणां बुद्धः, मुसलमानस्य अल्लेति, यहूदीनाम् जिहोवा नाम, य एव खृष्टीयानां स्वर्गवासी पिता, स एव भवताम् एतत् महदुद्देश्यं सफलयितुं शक्तिं वो ददातु।"

धर्ममहासभाया अन्तिमे दिने सितम्बरमासस्य सप्तविंशतितमे तिथौ स सर्वोच्चस्तरमारुह्य सभां श्रावयामास—"...धर्ममहासभा यदि भुवनं किञ्चित् दर्शयति स्म, तदेतत्, यत्—पवित्रता, चित्त-शुद्धिः, दया, दाक्षिण्यं, महानुभावता च एतदखिलं कस्यापि धर्म-सम्प्रदायस्य नैव निजस्वम्। प्रतिधर्म एव उन्नतचरित्रा नरा नार्यश्च अवतीर्णा जाताः। सत्स्वपि एषु प्रमाणेषु यदि कोऽपि स्वप्रदर्शनमिव पश्यति, चिन्तयति च, 'सर्व एव धर्मा विलुप्ता भवन्तु, केवलं ममैव धर्मश्चिरं जीवतु' इति—तर्हि तं करुणा-पात्रं मन्ये। तदर्थमहमतीव दुःखितः। एवमिदमपि वच्मि, यत्, आशु एव भवन्तो द्रक्ष्यन्ति, सत्यपि भवतां विरुद्धाचरणे सर्वधर्माणां पताका-शिरसि एतदेव

लिखितं भविष्यति—यत् नैष समरभावः, सहायता एव, नैष विनाशः, ग्रहणमेव, नापि द्वन्द्वं, परन्तु मेलनं शान्तिश्च।"

विवेकानन्दस्य महतोऽस्य वाक्यस्य फलं विपुलं जातम्। स वेदान्तस्य सार्वभौमामेव वाणीं प्रचारयामास। नैव तत् केवलमावेदनरूपेण, उच्चतरसत्यरूपेणैव। तस्मादेव तत् सर्व-प्रतिनिधिषु श्रोतृमण्डलीषु च अमोघप्रभावं विस्तारयामास। फलतः आर्य-धर्मः, आर्यजातिः, आर्यभूमिश्च जगति सर्वेषां नयनेषु पूजास्पदरूपेण प्रतिष्ठिता अभवन्। पदविदलिता अपि हिन्दूजातीया नैव घृणास्पदं, दीना दरिद्रा अपि अमूल्यपारमार्थिकसम्पदामधिकारिणः। धर्म-जगति विश्वस्यैव गुरुपदमधिष्ठातुं ते योग्याः। शतश एव शताब्दीतः परं विवेकानन्दो हिन्दूजातीयानामात्ममर्यादाबोधं प्रबोधयामास। घृणावमाननापङ्कराशितः समुद्धृत्य स एव हिन्दूधर्मं जगत्सभायां सर्वोच्चमासनमधिरोहयामास। शिकागो-धर्मसम्मेलने स्वामि-महोदयः यदेव महासत्यं प्रचारितवान्, यामेवाशावाणीमश्रावयत्, तत् भविष्यति काले सर्व-जागतिकस्यैवाध्यात्मज्ञानस्य प्रशस्यतम-मवलम्बनं भविष्यति।

विवेकानन्दस्य विजयेन समग्रमेव भारतम् उल्लसितं प्रदीप्तं च जातम्। दैन्येन लाञ्छनया च अवनते भारते आनन्दमन्दाकिनी एव अवातरत्। अतीतं भस्मस्तूपं श्यामयितुं सुरनदी प्रादुर्बभूव। स्वामि-महोदयस्य विजयप्रभावो भारतीयजातीयजीवनस्य प्रतिकर्मसु प्रति-प्रचेष्टास्वेव न्यपतत्। न केवलं धर्मविषये, न वा आत्मिकभूमौ, किन्तु राष्ट्रियार्थनैतिकानां सामाजिकानां च जीवने, किं बहुना जाती-यानां सामग्रिकजीवनेऽपि शिशिरसम्पातनमिव तत् कार्यकारि जातम्।

"रोमाँ रोलाँ" तज्जागरणविषये समलिखत् "…इयमेव सर्वतः प्राक् भारतस्य अग्रगतिः समारब्धा, तदेव दिनमारभ्य अतिकायस्यैव

कुम्भकर्णस्य निद्राभङ्गः प्रारभत। ...विवेकानन्दस्य मृत्योर्वर्षत्रयादूर्ध्वं तस्य वंशीया यदि वंगानां विद्रोहं, तिलकस्य गान्धिमहात्मनश्च आन्दोलनस्य सूचनां प्रत्यक्षं पश्यन्ति, भारतं यदि जनसाधारणानां संघबद्धकर्मसु स्वीयं सुनिर्दिष्टमंशं गृह्णाति, तत् सर्वं विवेकानन्दस्यैव शक्तिपूर्णस्य आह्वानस्य फलम्।" विवेकानन्दो भारतीयगणजागरणस्य ऋत्विक् आसीत्, स्वाधीनता-संग्रामस्य च अग्रवर्त्ती दौत्यनिष्णातः।

विवेकानन्दस्य प्रभावविषये धर्ममहासभाया अङ्गीभूताया विज्ञान-सभायाः सभापतिः मि० स्नेल अलिखत् "· अन्यः कोऽपि धर्मो धर्म-महासभायां हिन्दूधर्मवत् प्रभावविस्तारे न समर्थो जातः। एवमस्यैव धर्मस्य प्रतिनिधिः स्वामी विवेकानन्द एव। महासभायामस्य प्रभावः समादरश्च सर्वस्मादेव समधिकः संवृत्त आसीदिति न सन्देहलेशः। स प्रायश एव भाषणमददात्--महासभासु एवं तस्य वैज्ञानिकशाखा-नामाधिवेशनेषु च (यस्य सभापतिपदस्य सम्मानं लब्धवानहम्)।

"प्रतिभाषणे खृष्टधर्मीयात् तदन्यधर्मीयेभ्यश्च वक्तृभ्यो जनाः सर्वे तमेव विवेकानन्दं विशेषसमादरसहकारेण अभ्यर्थितवन्तः। यामेव दिशं सोऽगच्छत्, तत्रैव जनसंमर्दः समधिकभावेन सञ्जात आसीत्। एवञ्च तस्य मुखनिःसृतां वाणीं श्रोतुमेव जनाः समुत्कण्ठिता आसन्। खृष्टीयेषु ये अतीव प्राचीनभावपराः, तेऽपि अवदन् 'तत्त्वतोऽयमेव नरकुलस्य भूषणस्वरूपः।'

"देशेऽस्मिन् हिन्दुत्वस्य कार्यकारिशक्तिः स्वामिनो विवेकानन्दस्यैव परिश्रमेण विशेषतः प्रेरणामलभत। हिन्दूधर्मस्य एतादृशः सुविश्वस्तः कोऽपि प्रतिनिधिरितः प्राक् अमेरिकायाः तत्त्वानुसन्धित्सूनामग्रे नैव समुपस्थितो जातः। न केवलं सामयिकोत्तेजनावशात् वस्तुतश्च अमेरिका-वासिनः सत्यमेव स्वामि-महोदयस्य प्रस्थानात् परं तस्य पुनरभ्यु-दयाय साग्रहमपेक्षिष्यन्ते। प्रोटेस्टन्ट्-खृष्ट-धर्मीयेषु ये खल्वतीवप्राचीन-पथानुगाः, तेषु अतिशयस्वल्पसंख्यका एव स्वामिमहोदयस्य साफल्येन

ईर्ष्यापराः सन्तस्तत्सम्बन्धे विरुद्धमतम् अब्रुवन्। किन्तु एतादृशो विचारः अप्रचलितधर्ममतावलम्बिनां सकाशादेव समागतः। भारत-भूमेर्गैरिकवसनधारि-संन्यासिनः सर्वजनीन-महानुभावता-फलेन, ज्ञान-गौरव-फलेन, व्यक्तिगतचरित्र-माधुर्यस्य पाकतश्च अत्रत्य-साम्प्रदायिक-विद्वेष-भावा अन्तर्हिता जाताः। स्वामि-महोदयस्य प्रतिनिधित्वेन प्रेषणार्थम् अमेरिकावासिनो भारताय धन्यवादं विज्ञापयन्ति।"

अख्यातः अज्ञातः स्वामी विवेकानन्दः विश्ववरेण्योऽजायत। तस्य शतशः पूर्णाकाराणि चित्राणि शिकागो-नगर्यां विभिन्नस्थानेषु शोभायमानानि बभूवुः। तेषां चित्राणामधः लिखितमासीत्—"भारतस्य हिन्दुसंन्यासी स्वामी विवेकानन्दः।" मार्गे चलन्तो जनाः स्थित्वा सश्रद्धं शिरोवेष्टनमवतार्य तस्य पूजनीयस्य सम्मान-सूचनामकुर्वन्। अमेरिकायाः योरपस्य च समाचारपत्राणि अनुदिनं तत्प्रशंसाभिः पूर्णानि दृश्यन्ते स्म। तात्कालिकानां तद्देशीयानां समाचारपत्राणाम् उद्धरणैः एको महान् ग्रन्थः प्रस्तुतो भवितुं शक्नोति।

'दि बोस्टन इवनिंग ट्रांसक्रिप्ट'-पत्रेण लिखितमासीत्—"स्वामि-विवेकानन्देन प्रचारितभावानां महत्त्वस्य कारणात् एव तस्य सुदर्शन-मूर्तिप्रभावेण च स धर्मसभायां सविशेषं स्नेहपात्रमासीत्। यदि स केवलं मञ्चोपरि चलति तदा करतलवादनध्वनिरभवत्। परन्तु परस्सहस्राणां विदुषाम् एनं समादरं तथा सम्मानम् एषः सर्वथा बालक-वत् सरलभावेन प्रतिजग्राह। तस्मिन् अभिमानस्य लेशमात्रमपि नावर्तत।"

धर्ममहासम्मेलनानन्तरं स्वामी निजमद्रासशिष्याय पत्रं लिखित-वान् "अत्रत्यधर्ममहासभाया उद्देश्यं सर्वधर्मापेक्षया ईसाई-धर्मस्य श्रेष्ठतायाः प्रमाणीकरणमासीत्। किन्तु तस्यायोजकानां दुर्भाग्यात् तस्य फलं विपरीतमभूत्।…" अस्माकमेवं प्रतिभाति श्रीरामकृष्णस्य वाण्याः तस्य प्रधानशिष्यमुखात् समस्ते संसारे

प्रचारायैव तस्य धर्ममहासम्मेलनस्य आयोजनाऽजायत, एवं दैवप्रेरित एव स्वामी विवेकानन्दः समुद्रपारं गत्वा अमेरिकामवाप।

महासभायाः साधारणसमितेः सभापतिः रेवरेंड वेरोंजमहोदयोऽपि जगाद—"स्वामी विवेकानन्दः निजश्रोतॄणामुपरि अत्याश्चर्यं प्रभावं निहितवान्।"

समाचारपत्राणामेतादृशानि शतश उद्धरणान्युदाहर्तुं शक्यन्ते। किन्तु एतं विजयं स्वामी केन भावेन गृहीतवान्?

तं बहुसम्मानितं भारतीयसंन्यासिनम् अमेरिकाया एकः सम्पन्नः पुरुषः सादरं निजभवनमनयत्। सेवाया आदरस्य तथा ऐश्वर्यस्य प्राचुर्यं स्वामिनश्चित्तं व्यथितं चकार। इन्द्रपुरीसदृशे सौधे दुग्धफेनतुल्यशय्यायां शयित्वा स रोदितुं प्रावर्तत। अश्रुभिः उपधानमार्द्रं बभूव। स मनोवेदनया अधीरो भूत्वा तले प्रपत्य विलपितुमुपाक्रमत—"हन्त! मम दुःखिनि भारतभूमे! तव तु तादृशी दुर्दशा, एवं मम कृते ईदृशः सुखभोगः। अहं भोगमैश्वर्यं तथा नाम यशो गृहीत्वा किं करिष्यामि?..." स समस्तां रजनीं रोदं रोदमेव व्यत्ययापयत्। स्वामी विवेकानन्दः निजनाम-यशसोः कृते पाश्चात्यदेशभ्रमणार्थं न ययौ।

धर्ममहासभायां समाप्तायामेव स्वामी अनेकेषु स्थानेषु भाषणदानार्थम् आमन्त्रितो बभूव। अनेके विशिष्टाः नागरिकाः तं निजनिजं सदनमानीय विविधा आलोचनासभाः प्राबध्नन्। तस्मिन् समये एका व्याख्यान-समितिः तं 'जनप्रियवक्तारं' संयुक्तराष्ट्रस्य विभिन्नेषु स्थानेषु भाषणदानार्थम् आजुहाव। अमेरिकाजनतया परिचितो भवितुमेष अवसर इति मत्वा स्वामी सम्मतोऽभूत्। तस्याः समितेः प्रबन्धानुसारं संयुक्तराष्ट्रस्य एकाञ्चलात् अन्याञ्चलपर्यन्तं स भाषणं प्रददौ। सर्वत्रैव स सविशेषम् अभिनन्दितः तथा सम्मानितश्चासीत्।

स केवलं वेदान्तस्य धर्मस्य वा विषये एव प्रवचनं नाकरोत्, आर्यसभ्यता, भारतीयसंस्कृतिः, समाजव्यवस्था, मूर्तिपूजा, सामाजिकरीतिनीतिः, आचार-व्यवहारः, नारीजातेरादर्शः एवमादिषु विभिन्नविषयेषु भाषणमकरोत्। तेन मिशनरीजना यान् भारतवासिनः "नग्नाः, मनुष्यभक्षकाः, असभ्याः, वर्वराः, विधर्मिणः, धर्मविश्वासरहिताः, मूर्तिपूजकाः" आदिकं कथयित्वा प्रचारमकुर्वन्, सा धारणा मनुष्याणां मानसात् परिमार्जिता। यस्यां जातौ स्वामिविवेकानन्दसदृशा व्यक्तयः जन्म ग्रहीतुं शक्नुवन्ति तस्याः जातेः सम्बन्धे तादृश्याः दूषितायाः धारणायाः कृते अवकाश एव नावशिष्टः।

अनया रीत्या तस्याः व्याख्यानसमितेः प्रबन्धेन स शिकागो-आइवासिटी - डेसमयेनिस - सेन्ट - लुई-इन्डियाना - पोलिस-मिनिया-पोलिस-डेट्रएट-हार्टफोर्ड-बाकेलो - बोस्टन - केम्ब्रिज - बाल्टिमोर-वाशिंगटन-ब्रुकलीन-न्यूयार्कप्रभृतिषु स्थानेषु भ्रमन् बहूनि व्याख्यानानि प्रददौ। परन्तु स्वल्पदिवसानन्तरं कतिपयकारणैः स रूप्यकाणां विनिमये व्याख्यानदानं निरुद्धमकरोत्।* किन्तु तादृशेन व्यापकेन भ्रमणेनामेरिकावासिनां सम्बन्धे सोऽधिकं ज्ञातुं सन्दर्भानपि प्राप्नोत्।

१८९४ ई० जूनमासस्य २३ तारिकायां शिकागोतः स्वामी मैसूरमहा-

---

* स्वामी तदानीमेकस्मै मद्रासिशिष्यायालिखत्—"...डेट्रिएट-भाषणे अहं २७०० रूप्यकाणि प्राप्तवान्। अन्यभाषणेषु एकस्मिन् एकघण्टायां ७५०० रूप्यकाणि लब्धवान्। परन्तु समितिः मह्यं केवलं ६०० मुद्राः प्रादात्।... एका वञ्चकसमितिः मया सह कूटकार्यं चक्रे। अहं तत्संपर्कं पर्यत्यजम्।" भाषणदानेन स्वामी यानि रूप्यकाणि प्राप्नोत् तानि प्रच्छन्नरूपेण भारतस्यानेकजनहितकर-शिक्षासम्बन्धिप्रतिष्ठानेभ्यः तथा महिलासंस्थादिभ्यः दत्तवान्। अनेकदुःखिव्यक्तीनाम् अनेन सहायता जाता।

राजाय तेषु दिवसेषु अमेरिकावासिनां धर्मभावस्य अभावसम्बन्धे एवं व्यलिखत् "…(ईसाई) मिशनरीजनाः भारतवर्षे निजदेशवासिनां धर्मप्रवणताविषये कियन्तमपि प्रलापं कुतो न कुर्वन्तु, यथार्थतः अत्रत्यानां षट्कोटि-त्रिंशल्लक्षमनुष्यान्तः अधिकाधिकं एककोटि-नवतिलक्षा जना यत्किञ्चिद् धर्ममाचरन्ति। अन्येषां मस्तके तु पानं भोजनं तथा रूप्यकार्जनम्—एतदतिरिक्तं न किमप्यन्यत् आगच्छति। पाश्चात्त्या जना अस्मदीयजातिभेदस्य सम्बन्धे भूयसीः तीव्राः समालोचनाः कुर्वन्तु नाम, तेषु अस्मदपेक्षया अतिजघन्या जातिभेदप्रथा अस्ति—अर्थनैतिको जातिभेदः। अमेरिकानिवासिनः कथयन्ति—'सर्वशक्तिमान् डालरः' अत्र सर्वं कर्तुं शक्नोति। परन्त्वत्र निर्धनानां पार्श्वे रूप्यकाणि न वर्तन्ते। दक्षिणभागे वसतां हब्शीनामुपरि एषां व्यवहारविषये इदमेव वक्तव्यं यत्—तत् पैशाचिकमस्ति। साधारणेऽप्यपराधे विचारं विना जीवितावस्थायां तेषां शरीरात् चर्म विदार्य मारयन्ति। अत्र देशे यावन्तो विधयः सन्ति, तेषाम् अत्रत्या जनाश्च इयतीं न्यूनां मर्यादां निधाय व्यवहरन्ति, न तावदन्यस्मिन् देशे।

साधारणतया अस्मद्देशे दरिद्रहिन्दवः एभ्यः पाश्चात्त्यदेशवासिजनेभ्यः अधिकनीतिपरायणाः सन्ति। एषां धर्मः पाखण्डः, यद्वा 'कटुतरता'…; इमे जनाः नवीनप्रकाशार्थं भारताभिमुखं अनिमेषपातदृष्ट्या विलोकयन्ति। महाराज! श्रीमान् अदृष्ट्वा न ज्ञातुं प्रभवति। एते जनाः पवित्रवेदस्य गम्भीरचिन्तानां साधारणमप्यंशम् अत्यन्तादरेण सह स्वीकुर्वन्ति। यतः विज्ञानं धर्मस्योपरि वारं वारं यादृशं तीव्रमाक्रमणं करोति केवलं वेद एव तद् रोद्धुं शक्नुयात् एवं धर्मेण समं विज्ञानस्य सामञ्जस्यं विधातुं शक्नुयात्। एतत्प्रचारितं मतम्—शून्यात् संसारस्य सृष्टिः, आत्मा सृष्टः पदार्थः, स्वर्गनामके स्थाने सिंहासनोपरि एको महान् निर्दयी तथा अत्याचारी ईश्वर उपविष्टोऽस्ति, अनन्ता नरकाः इत्यादिमतोपरि सर्वे शिक्षिता व्यक्तयो रुष्टाः सन्ति। किञ्च

सृष्टेः अनादित्वं, आत्मनः तथा आत्मन्यवस्थितस्य परमात्मनः सम्बन्धे वेदस्य गम्भीरम् उपदेशं येन केनापि प्रकारेण इमे जनाः अतिशीघ्रं गृह्णन्ति। पञ्चाशद्वर्षाभ्यन्तरे संसारस्य सर्वेऽपि शिक्षिता लोकाः अस्माकं पवित्रवेदस्य शिक्षानुसारं आत्मनि तथा सृष्टौः, द्वयोरपि अनादित्वे विश्वासं करिष्यन्ति। एवम् ईश्वरमात्मन एव सर्वोच्चां पूर्णावस्थां स्वीकरिष्यन्ति। अद्यप्रभृत्येव एतेषां सर्वे विद्वांसः पुरोहिताः अनयैव विधया बाईबल-व्याख्यां कर्तुमुद्यताः। भारतवर्षे यान् मिशनरीयान् यूयं पश्यथ, ते केनापि प्रकारेण ईसाईधर्मस्य प्रतिनिधयो न सन्ति। ममैष सिद्धान्तः यत् पाश्चात्त्यानाम् इतोऽप्यधिका धार्मिकी शिक्षा अपरिहार्या अस्ति तथा अस्माकम् इतोऽप्यधिकायाः ऐहिकोन्नतेरावश्यकता अस्ति।…”

———

## १७

सम्मेलनात्पश्चादेव अमेरिकायां स्वामी सम्यक्प्रकारेण कार्यारम्भमकरोत्। प्रथमं भूमिकर्षणम्, पश्चाद् बीजवपनम्।

किन्तु स्वामि-विवेकानन्दस्य अनेन विराट्सम्मानेन एवं साफल्येन तद्देशीयाः प्रतिनिधयः अत्यर्थम् ईर्ष्यान्विता अभूवन्। ते स्वामिनः यशः हीनं कर्तुं कीदृशीमपि चेष्टाम् अनर्हां नामन्यन्त। ते मिशनरीजनैर्मिलित्वा मिथ्याप्रचारमकुर्वन्। परन्तु स्वामी तत्र ध्यानं न दत्तवान्। स निजमार्गे अग्रेसरन् अवर्तत। तदानीं स एकस्मै सतीर्थ्यायालिखत्—"भयं कस्मात्? केषां भीतिर्जायते? भ्रातः! इमे मिशनरीजना उद्घुष्योद्घुष्य तूष्णीं जाताः, अनेनैव क्रमेण समस्तः संसारोऽपि भविष्यति।" ईसा-रुधिरं धरित्रीमुर्वरां चकार। बाधामत्याचारं च स्वामी सहर्षं स्वीचकार।

स्वामि-विवेकानन्दस्य ये जना विरोधमकुर्वन् ते न केवलं दयापात्राणि, अपि तु धन्यवादपात्राण्यपि सन्ति। तेनैव संसारोऽजानात् यत् स्वामी विवेकानन्दः 'भगवत्प्रेरितो दूतोऽस्ति' इति।* सोऽजानात् यत्—"पूर्णं मौनमेव योग्यः प्रतिवादोऽस्ति।" "झञ्झावेगशाली

---

* स्वामिनः एकस्मिन् पत्रे संदृश्यते—"···इदमस्ति चरित्रस्य माहात्म्यम्, पवित्रतायाः प्रभावः, सत्यस्य प्रभावः तथा व्यक्तित्वस्य प्रभावः, यावत्पर्यन्तम् इमे मन्निकटे निवसन्ति तावत्पर्यन्तं···कोऽपि ममानिष्टं कर्तुं न शक्नोति।···प्रभुः मया सह सदा निवसन् अस्ति।···निश्चितरूपेण ज्ञायतां यत् प्रभुः मम हस्तं गृहीत्वा नयन् गच्छति।"

हिन्दुः" सर्वमुद्घाययन् अग्रेसरो भवति। 'उपेक्षा, उपेक्षा, उपेक्षा'—इदमेवासीत् तस्य सफलताया मूलमन्त्रः! सः अन्यदप्यवोचत् 'न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति।' एकस्मिन् पत्रे स इमं श्लोकमप्युद्धार "निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु, लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्। अद्यैव वा मरणमस्तु युगान्तरे वा न्याय्यात् पथः प्रविचलन्ति पदं न धीराः॥" (भर्तृहरिः)

स्वामी विवेकानन्दः तस्या व्याख्यानसमितेः (कम्पनी) सम्पर्कमत्यजत्, किन्तु अमेरिकावासिनः तमितोऽपि घनिष्ठतया प्राप्तुं तथा ज्ञातुं साग्रहा बभूवुः। अनेकेषु प्रतिष्ठानेषु, सभा-समितिषु, 'गिरजासु', महिलासंसत्सु चरित्रशोधनागारेषु, शिक्षा-संस्थासु विश्वविद्यालयेषु तथा विशिष्टव्यक्तीनां भवनेषु तस्यामन्त्रणानि समाययुः। स भारतीयप्रथानुसारेण प्रतिफलाशां त्यक्त्वा धर्मदानं कर्तुमारभत। तस्मिन् समये तेन प्रतिसप्ताहं १२–१४ भाषणानि यद्वा ततोऽप्यधिकानि अदीयन्त, येषां प्रभावतः समस्तस्य पाश्चात्त्यजगतः धर्मचिन्तायां युगान्तरमुपस्थितम्। वेदानां वेदान्तानां तथा हिन्दूधर्मस्य सम्बन्धे तस्य मौलिकचिन्तनेन एवं व्याख्यया च सनातनहिन्दूधर्मस्य नूतनं रूपं समभवत्। स सर्वत्रैव अनेकव्यक्तीनामन्तरे यथार्थधर्मलाभस्य स्पृहाम् उद्बोधयामास। अनेकमनुष्याणां हृत्सु स्वामिनश्चरणसान्निध्ये उपविश्य धर्मशिक्षां प्राप्तुं वाञ्छापि समुत्पन्ना बभूव।*

इतस्तु धर्ममहासभायां तथा संयुक्तराष्ट्रे स्वामिविवेकानन्दस्य विजयवृत्तान्तः भारतवासिनां हृदयम् आलोडयामास। आहिमाचलात्

---

* तदानीं स्वामिन एकस्मिन् पत्रे लिखितमस्ति—"अस्मिन् देशे मया एकं बीजमुप्तम्, तस्मात् अङ्कुरोऽपि स्फुटितः—···मया परश्शता अनुरक्ताः शिष्याः प्राप्ताः। ··प्रत्येककार्यं अवस्थात्रयाभ्यन्तरे गन्तव्यं भवति उपहासः, विरोधः, पर्यन्ते स्वीकारः।···आगामिनि वर्षे तान् तेन विधिना संघबद्धान् करिष्यामि येन ते कर्मक्षमाः भवेयुः! तस्मिन् समये कार्यं विधिवत् प्रचलिष्यति।"

कन्याकुमारीं यावत् सर्वत्र पल्लीषु, ग्रामेषु, नगरेषु, शाला-महाशालासु, पथि, हट्टे तथा विपण्याञ्च स्वामी विवेकानन्द एव आलोचनाविषयो जातः। अस्य वीरसंन्यासिनः विजयेन भारतवासिनामन्तःकरणं गर्वस्फीतं संवृत्तम्।

रामनादस्य तथा खेतडीस्थानस्य च राजानौ आस्थानमण्डपे महता समारोहेण विशेषसभामायोज्य प्रजानां सन्निकटे भारतस्य मुखमुज्ज्वलयतः स्वामिनो विवेकानन्दस्य विजयवार्तायाः घोषणामकुरुताम्। दक्षिणभारतस्य विभिन्नस्थानेषु तथा मद्रासपत्तने प्रसिद्धव्यक्तिभिः विराट्सभा आयोज्य तत्र स्वामिनो विजयस्य तथा प्रचारस्य च अभिनन्दनप्रस्तावाः पारिताः। वङ्गेष्वपि यथेष्टं जागरणं समजायत। कलिकात्तायाः शिक्षितेषु विशिष्टनागरिकेष्वपि महानुत्साहः समुत्पन्नोऽभूत्। समाचारपत्रेषु भाषणेषु तथा आलोचनासु स्वामिन उच्चा प्रशंसा घोषिता बभूव। कलिकत्ताया नगरभवने राज्ञः प्यारीमोहनमुकर्जी पी० एस० आई० महाभागस्य सभापतित्वे एका विशाला जनसभा हिन्दूजातेः प्रातिनिध्येन स्वामिविवेकानन्दस्य एवं अमेरिकावासिनां चाभिनन्दनस्य तथा धन्यवादस्य प्रस्तावं पारितमकरोत्। सभापतिमहोदयः शिकागो-धर्ममहासभापतेः तथा स्वामिनः पार्श्वे धन्यवाददानपुरस्सरं पत्रमलिखत्।

तस्य पत्रस्योत्तरे डाक्टरवैरोजमहोदयः राज्ञे प्यारीमोहन-मुकर्जीमहोदयाय पत्रमलिखत्—"प्रिय महाशय! कलिकत्तायाः नगरभवने विराट्सभाया विवरणसहितं यत् पत्रं श्रीमान् मह्यं प्रेषयत् तद् इदानीमेव सम्प्राप्तम्। तेन समाचारेणाहं सुतरां हर्षमनुभवामि। शिकागो-धर्म-महामण्डल्यां युष्मत्सुहृत् स्वामी विवेकानन्दः सम्मानपुरस्सरं गृहीतोऽभूत्। स वाग्मिताशक्त्या चुम्बकस्य आकर्षणवत् सर्वान् आकृष्टान् अकार्षीत् एवं निजं व्यक्तिगतं प्रभावं सम्यग्रूपेण विस्तारयितुं समर्थो बभूव। तस्य प्रयत्नेन अत्रत्यजनानां

विचारस्य एवं धर्मानुशीलनस्य चाग्रहः सविशेषमुद्‌बुद्धोऽभवत्। प्रधानप्रधानविश्वविद्यालयेषु तदीयभाषणस्य तथा आलोचनायाः प्रबन्धः जायते। अमेरिकाजनमात्रं भारतवर्षसम्बन्धे गाढां प्रीतिं तथा कृतज्ञताञ्च प्रकटयति। अस्माकं विश्वासः जायते यत् युष्माकं सुप्राचीनपवित्र-धर्मग्रन्थेभ्यः अस्माभिरनेके विषया ग्रहीतव्याः।"

ये सभायामुपस्थातुमसमर्था अभवन् तादृशा दूरवर्तिग्रामक्षेत्र-निवासिनोऽपि भारतमातुः श्रेष्ठसन्तानं प्रति आन्तरिकीं श्रद्धां विज्ञापितवन्तः। एकदैव ऐन्द्रजालिकस्य शक्त्या भारतवर्षस्य त्रिंशत्कोटि-स्त्रीपुरुषा आनन्दकोलाहलं कुर्वन्तः प्रबुद्धा इवाभूवन्। भारतस्याकाशः तथा वायुमण्डलं स्वामिविवेकानन्दस्य गौरवमयजयगानेन व्याप्ते जाते।

स्वामी विवेकानन्दः तस्मिन् समये पाश्चात्त्यभूखण्डे यद् बीजमवपत् तस्यैवांकुरोद्‌गमस्य परिवेषरचनामप्यकरोत्। सन् १८९५ ई० वर्षस्य फरवरीमासतः न्यूयार्कनगरे स धारावाहिकं भाषणं दातुमारभत तथा तस्यावशिष्टसमयः कतिपयसत्यनिष्ठानां धर्मानुरागिणाम् उत्साहिस्त्री-पुरुषाणां धर्मशिक्षणे व्ययितोऽभवत्। ज्ञानयोगस्य एवं राजयोगस्य च भाषणानां फलमियत् सुन्दरमभवत् यत् स्वल्पदिवसाभ्यन्तर एव अनेके जना योगसाधनस्य शिक्षां ग्रहीतुं तत्समीपे समवेता अभूवन्। ते योगशास्त्रनियमानुसारं ब्रह्मचर्यव्रतं पालयन्तः पद्मासनं बद्‌ध्वा योग-साधनव्रतिनो बभूवुः! स्वामिनः राजयोगस्य भाषणं यदा ग्रंथरूपेण प्रकाशितमभूत् तदा अमेरिकायाः शिक्षितेषु एवं विचारशीलव्यक्तिषु इयानधिक आग्रहः समुत्पन्नः यत् स्वल्पसप्ताहाभ्यन्तरे तस्य ग्रंथस्य त्रयाणां संस्करणानां प्रकाशनस्यावश्यकता अभवत्।

इयति समये अमेरिकाया अनेके प्रसिद्धाः स्त्रीपुरुषाः तस्यानु-रागिणः पृष्ठपोषकास्तथा शिष्याः संवृत्ताः। तेषु मैडम-मेरी-लुई, मिसेज उलिवुल्, डा० एलान् डे, मिस वाल्डो, प्रो० वाइनमैन, प्रो० राइट,

डा० स्ट्रीट, मैडम कालवे, श्रीमती तथा श्रीमान् लेगेट्, मिस मैक्लाउड-आदीनां नामानि सविशेषमुल्लेखमर्हन्ति। एषु केचित् जनाः स्वामिनः शिष्या भूत्वा परवर्तिजीवने वेदान्तप्रचाराय आत्मनियोगमकुर्वन्।*

* * *

पाश्चात्त्यविजयेन मत्तो भूत्वा स्वामी निजदेशं न व्यस्मरत्। पाश्चात्त्यदेशेषु स 'भारतस्य हिन्दुसंन्यासी' तथा तस्य वाण्यासीत् धर्मस्य वाणी, वेदान्तवाणी एवं भारते स आसीत् भारतस्य देशप्रेमी साधुः देशप्रेमिकः तथा स्वाधीनताया ऋत्विक् स्वामी विवेकानन्दः! प्राच्यदेशस्य कृते धर्मवेदान्तवाण्या अतिरिक्ता तस्य स्वतन्त्रताया वाणी, उद्बोधनस्य कर्मणः एवं संघटनस्य वाणी आसीत्, दुःस्थानां पद-दलितानां प्रपीडितानां रुग्णानां तथा मूर्खाणामुद्धारं कृत्वा मनुष्यत्वे प्रतिष्ठानकारिणी वाणी आसीत्।

अतः स पाश्चात्त्यदेशेभ्य एव समस्ते भारते विभिन्नकेन्द्राणि तथा शाखाकेन्द्राणि च स्थापयित्वा जनसाधारणस्यान्तरे जातीयताबोधं जागरयितुं निजशिष्यान् तथा सतीर्थ्यान् आह्वयत्। ग्रामेषु गत्वा जनहितकार्यं कर्तुं तथा अकिञ्चनानां तथाकथित-निम्नश्रेणिकानां जनानां प्रतिगृहं शिक्षाविस्तारार्थम् आत्मोत्सर्गं कर्तुं तान् उपादिशत्। सोऽलिखत्—" अहं ब्रवीमि—'दरिद्रदेवो भव। मूर्खदेवो भव।' दरिद्राः मूर्खाः तथा अज्ञानिनः कातराः—एते एव तव देवता भवन्तु; एषां सेवामेव परमं धर्मं जानीहि।"

---

* स्वामी १८९६ ई० मार्चमासे अमेरिकातः आलासिंगायालिखत्—"...इयता समयेन मम द्वौ संन्यासिशिष्यौ तथा शतशो गृहस्थशिष्याः संजाताः, परन्तु वत्स! कतिपयान् विहाय सर्वेऽपि निर्धनाः सन्ति। कतिचनातीव सम्पन्नाः। एनं वृत्तान्तं इदानीं मा प्रकाशय।..."

स्वामिनो मनस एकस्मिन् गम्भीरे पर्वणि भारतस्य चिन्ता स्थानं प्राप्तवत्यासीत्। अमेरिकायाः स मद्रासि-तरुणशिष्येभ्यः यान्युद्दीपना-पूर्णानि पत्राण्यलिखत् तेषु 'भारतीय-जनताया जागरणस्यैव' स्वरः विशेषरूपेण झंकृतोऽजायत तथा तेषु देशसेवायाः तथा जातीयता-बोधस्य उद्बोधन-तूर्यध्वनिः आसीत्।

१८९३ ई० अगस्तमासस्य २० तारिकायाम् अमेरिकायाः आलासिंगाय लिखितात् पत्रात् स्वामिनो हृदयवेदनाया गभीरता अस्माकं हृदयं स्पृशति। स्वामिना लिखितम्—"...गतदिने स्त्रीकारागारस्याध्यक्षा मिसेज् जानसन् अत्रायासीत् ( अत्र 'कारागारम्' इति नोच्यते, एतस्य नामास्ति 'चरित्रशोधनागारम्' )। अमेरिकायां मया यदपि दृष्टं तत्रेदं एकमपूर्वं वस्तु विद्यते। अपराधिभिः साकं कीदृशो हार्दव्यवहारः क्रियते, कथं तेषां चरित्रं संशोधितं भवति, पुनस्ते जनाः परावृत्य कथं समाजस्यावश्यकाङ्गरूपेण परिणता भवन्ति— सर्वाणीमानि कियदद्भुतानि एवं सुन्दराणि सन्ति! स्वयमदृष्ट्वा तव विश्वास एव न भवेत्। इदमवलोक्य निजदेशस्य दशाया विचारेण मम हृदये महान् खेदः समुत्पन्नोऽभूत्। भारते वयं अकिञ्चनान् साधारणजनान् तथा पतितान् कया दृष्टया पश्यामः? तेषां कोऽप्युपायो नास्ति, पलायनस्य कोऽपि पन्था न दृश्यते। उत्थानस्योपायो न वर्तते। भारतस्य दरिद्राणां पतितानां तथा पापिनामवलम्बदाता कोऽपि सुहृद् न वर्तते।...राक्षसवन्निष्ठुरः समाजः तेषु निरन्तरमाघातं कुर्वन् अस्ति। शृणु मित्र!.. हिन्दुधर्मः शिक्षां तु ददाति—विश्वस्मिन् यावन्तः प्राणिनः सर्वेऽपि त्वदात्मनः केवलम् अनेकानि रूपाणि; परन्तु समाजस्य ईदृश्या हीनावस्थायाः कारणानि सन्ति—केवलमस्य तत्त्वस्य कार्यरूपे परिण-मनाभावः, सहानुभूतेः हार्दिकतायाश्च अभावः।...हिन्दुधर्मातिरिक्तः कोऽपि धर्मः ईदृशेन उच्चस्वरेण मानवात्मनः महिम्नः प्रचारं न करोति। पुनः स एव हिन्दुधर्मः येन प्रकारेण पैशाचिकतया दीनानां

तथा पतितानां कण्ठं निष्पीडयति संसारेऽन्यः कोऽपि धर्मस्तथा नाचरति। भगवान् मह्यं प्रादर्शयत् यदत्र धर्मस्य कोऽपि दोषो नास्ति ···।"

अपरस्मिन्नेकस्मिन् पत्रे स आलिखत्—"···आगामिपञ्चाशद्वर्ष-पर्यन्तमन्यान् सर्वान् देवी-देवान् मनसो निष्कासयत। एकमात्रो जाग्रद्देवः अस्माकं जातिः।···अस्य विराड्देवस्य पूजैवास्माकं प्रधाना पूजा भवेत्।···सर्वतः प्रथमं वयं यां देवतां पूजयेम साऽस्ति अस्माकं देशवासी।"

स देशस्य दरिद्रताया दूरापसरणार्थं कार्यकारिशिक्षायाः योग्यं प्रबन्धं कर्तुं देशवासिन उद्बुद्धानकरोत्। सार्वभौम-वेदान्तवाण्याः प्रचारस्य कृते मद्रासिशिष्येभ्यः 'ब्रह्मवादिन्'-पत्रिकायाः प्रकाशनार्थं रूप्यकाणि सम्प्रेष्य तान् उत्साहितान् अकरोत्। स्वामिन उद्बोधन-वाणी आकाशे विलीना नाभूत्, प्रत्युत भूयसां हृदयेषु दुर्जयानुप्रेरणा-रूपेण प्रविष्टा बभूव। रोमाञ्चितभारतं तदीयोदात्ताह्वानस्य समीचीन-मुत्तरं ददौ। मद्रासे कलिकत्तायामिति केन्द्रद्वयं स्थापितमभवत्। अन्यच्च अन्यैः अनेकप्रकारैः तस्य गुरुभ्रातरः संघटनमूलकप्रचार-कार्ये व्रतिनो बभूवुः। स्वामिनो मनसि एकं महाशक्तिशालिनं संघं स्थापयितुं परिकल्पनाऽऽसीत्। जातीयोन्नतये संघशक्तेः कियत् प्रयोजनमस्ति इति स पाश्चात्त्यदेशेषु गत्वा सम्यग्रूपेण अजानात्। स एकस्मै गुरुभ्रात्रे लिलेख "····तावकीनायां जातौ संघबद्धतया कार्य-करणस्य शक्तेर्नितान्ताभावोऽस्ति। सः अभाव एव सर्वानर्थस्य मूलमस्ति। पञ्च मनुष्याः सम्भूय एकं कार्यं कर्तुं सम्मता न भवन्ति। संघटनार्थमावश्यकता अस्ति आज्ञाकारितायाः।···" अनयैव शैल्या स्वामी अमेरिकायामुपविश्यैव भारते निजकार्यक्षेत्रं प्रस्तोतुं संलग्नः।

अत्यधिकपरिश्रमात् तथा दुश्चिन्ताभिश्च स्वामिनः शरीरम् इय-

दधिकं दुर्बलमभवत् यत् शिष्याः अतीव चिन्तिताः संवृत्ताः। किञ्चि-द्विश्रामस्य आवश्यकता प्रत्यभासत। अवसरोऽपि लब्धः। एका शिष्या 'सेन्टलारेन्स'-नद्या मध्यस्थिते 'थौजन्ड् आइलन्ड पार्क' इत्यस्य निजगृहे विश्रामार्थं स्वामिनमामन्त्रयत। इदं स्थानं नितान्तनिर्जनं तथा तरुवनस्पतिभिरावेष्टितमासीत्। विशालाया नद्या मध्ये अने-कानि क्षुद्राणि महान्ति च द्वीपान्यासन्। स्वामिनः स प्रस्ताव ईश्वर-प्रेरितरूपेण प्रतिभाति स्म। सः द्वादश-स्वशिष्यैः सह सार्धमासपर्यन्तं तस्मिन्नेकान्तस्थाने वासमकरोत्। सः अधिकांशसमयं ध्यानेन व्यति-यापयामास। अयं तस्य सर्वाधिकानन्दप्रदो विश्राम आसीत्। अव-शिष्टः समयः शिष्याणां धर्मजीवनघटनस्य कार्ये व्यतीतोऽभवत्। सायं तथा प्रातः शिष्यानादाय स ध्यानस्य तथा शास्त्रचर्चायाः कक्षा-मकरोत्।

प्रथमे दिने 'बाइबलस्य' 'जान'-लिखित-सुसमाचारमवलम्ब्य आलोचना प्रारभत। तदनन्तरं वेदान्तसूत्राणि गीता उपनिषद् योग-दर्शनं नारदभक्तिसूत्रम् अवधूतगीता इत्यादिग्रंथा अपि आलोच्याः तथा अध्याप्यविषयाश्च बभूवुः। स यादृशेन विधिना प्राणस्पर्शिनमुप-देशं प्रादात् तस्यैवालम्बनेन मिस-वाल्डोनामिका एका शिष्या 'देव-वाणी'-नामकं ग्रंथं व्यरचयत्। ये द्वादश शिष्याः स्वामिनं तस्मिन् परिवेशे प्राप्तुं सौभाग्यवन्त आसन् तेषु द्वौ स्वामिनः संन्यासदीक्षां अगृह्णीताम् तथा इतरे पञ्च ब्रह्मचर्यव्रतं गृहीतवन्तः। अन्येऽपि तं गुरुं कृतवन्तः। वृक्षलताशोभिते द्वीपस्य निर्जने स्थाने स्वल्पदिनवासं कृत्वा स्वामी अत्यन्तमानन्दितो बभूव। मध्ये मध्ये स निजहस्तेन भोजनं पाचयित्वा शिष्यान् भारतीयखाद्यमभोजयत्। तथा साकमेव पुराणादिग्रंथेभ्यो नीतिपूर्णां कथामश्रावयत्।

स्वामी न्यूयार्कं परावृत्य पुनः प्रचारकार्ये संलग्नः। नियतरूपेण कक्षाकार्यम् अचालयत्। विभिन्नस्थानेषु भाषणं दातुं स निमन्त्रितो-

ऽभवत्। ततस्तु ईश्वरेच्छया योरोपदेशे श्रीरामकृष्णदेवस्य वाण्याः प्रचारक्षेत्रं प्रस्तुतमभवत्। अनेके सुहृदः स्वामिनमिंग्लन्डदेशे समागन्तुं वारं वारं प्रार्थनां कुर्वन्तः पत्राण्यलिखन्—'अत्र वेदान्त-प्रचारार्थं विस्तृतं क्षेत्रं रिक्तं पतितमस्ति। श्रीमत आगमनेनैव सर्वः प्रबन्धः सम्पत्स्यते।" एतन्निमन्त्रणाभ्यन्तरे स्वामिनः भगवत इङ्गितं प्रत्यभासत। तस्मिन्नेव समये न्यूयार्कतः एको धनिकः सखा पैरिसमार्गेण इंग्लन्डं गच्छति। सः स्वामिनं सहगामी भवितुमनुरोधमकरोत्। स्वामी तेन सह अगस्तमासमध्ये प्रस्थितः। पैरिसे स नैपोलियनस्य समाधिस्थानं चित्रशाला-गिरजा-म्यूजियम-(अपूर्व-वस्तुसंग्रहालय)-इत्यादिकानि द्रष्टव्यस्थानानि विलोक्य सविशेषमानन्दितो बभूव। स्वामी कुत्रापि अज्ञातः नावसत्। अत्रापि तस्य कैश्चिद् विद्वद्भिः साकं परिचयोऽभूत्।…

—:-०-:—

इंग्लन्डसनाथनात् पूर्वम् आंग्ला विजितजातेः एकं हिन्दुप्रचारकं केन भावेन ग्रहीष्यन्ति इतीदं तस्य चिन्ताविषय आसीत्। परन्तु कतिपयदिनाभ्यन्तरे एव तस्य मनः विगतसंशयमभूत्। सः मिस-मूलर-मिस्टरहार्डीप्रभृतिमित्राणां निमन्त्रणेन लन्दनं गत आसीत् तथा तेषां भवने स्थित्वैव मध्याह्ने लन्दनस्य दर्शनीयानि स्थानानि द्रष्टुं प्रावर्तत। सायं प्रातः आलोचनाकक्षा प्राचलत् तथा ये जनाः सन्द्रष्टुमागच्छन् तैः सह वार्तालापमकरोत्। एवमत्रैव लेडीमार्जेशन-भवने एकस्मिन्सभाप्रकोष्ठे भगिनी निवेदिता ( मिस मार्गरेट नोबल ) स्वामिनः सम्पर्कं लभमाना तस्य शिष्यत्वमङ्गीचकार।

महान् तेजस्वी स तरुणसंन्यासी स्वल्पैरेव दिनैः अनेकव्यक्तीनां दृष्टिमाकृष्टां चकार। तस्य नाम समन्ततः प्रासरत्। सप्ताहत्रयाभ्यन्तरे एव संघाः समित्यादयः तस्मै निमन्त्रणं प्रैषयन्। उच्चवर्गस्य तथा शिक्षितसमाजस्य अनेके स्त्री-पुरुषाः, धर्मप्रचारका लोका अपि तं प्रत्याकृष्टा अभवन्। समाचारपत्राणि तत्प्रशंसया पूर्णान्यभवन्।*

१८९५ ई० अक्टूबरमासस्य २२ तारिकायां 'पिकाडिली'-स्थिते 'प्रिन्से-पहाल'शालायां स्वामी आत्मज्ञानविषये यद् भाषणमकरोत् तस्य प्रभाव-

---

* ...."आङ्गलजातिः सहजतया कमपि नूतनं भावं ग्रहीतुं न वाञ्छति। परन्तु तस्या मनसि एकवारं नवीनो भावः प्रवेशयितुं यदि शक्येत तर्हि सा तं कदापि न परित्यजति।"—आङ्गलेयानाम् एतं विशिष्टं गुणं स्वामी प्राथमिकेषु कतिपयदिवसेष्वेव आविरकरोत्।

सम्बन्धे 'स्टैन्डर्ड'-पत्रिका अलिखत्—"···तस्मिन् दिने एको भारतीय-युवकसंन्यासी प्रिन्सेपहाले व्याख्यानमददात्। राजाराममोहनरायात् परमेकस्मात् केशवचन्द्रादतिरिक्तेपु भारतवासिपु तादृश उत्तमो वक्ता कदाऽपि इङ्गलन्ड-व्याख्यानमञ्चे नादृश्यत।···व्याख्यानदानसमये स महात्मनो बुद्धस्य तथा ईसामसीहस्य त्रिचतुराणां वचनानां तुलना अगणितयान्त्रिकनिर्माणशालाभिः विविधवैज्ञानिकाविष्कारैः यन्त्रादिभिः मानवजातेः कियान् साधारण उपकारः भवति—तस्य सम्बन्धे स तीव्रं मन्तव्यं प्राकटयत्। व्याख्यानदानावसरे सः कस्या अपि स्मारकलिपेः सहायतां नागृह्णात्। तस्य कण्ठस्वरो मधुरः एवं भाषणे एकमपि वचनं वैरस्यापादकं न बभूव।···"

राममोहनरायः तथा केशवचन्द्रसेनश्च दीर्घकालपर्यन्तं प्रचारस्य फलरूपेण यस्मिन् स्थानेऽधिकारं प्रापतुः, स्वामी विवेकानन्दः एकेनैव भाषणेन तस्मिन् स्थानेऽधिकारं प्रतिष्ठापितवान्। तस्य प्रत्येकं व्याख्यानम् अनेकसमाचारपत्रेषु उच्चां प्रशंसामलभत। स्वल्पैरेव दिनैः तस्य यश एतावत् अधिकं प्रासरत् यत् अनेके समाचारपत्रसम्पादकाः तेन सह मिलितुं समागच्छन्। अक्टूबर-मासस्य २३ तारिकायां 'वेस्ट मिनिस्टर-गजट'-संवाददाता व्यलिखत्—"··स्वामी यदा वार्तालापं करोति तस्य मुखं बालकमुखवत् उज्ज्वलं भाति। तत् अतीव सरलं निष्कपटं तथा सद्भावपूर्णं प्रतीयते।····यावद्भिर्जनैरद्य यावदहं सङ्गतोऽभूवं तेषु स्वाम्येव एकोऽपूर्वमौलिकभावपूर्णः पुरुषः अस्ति। इदमहं निस्संदेहं वक्तुं शक्नोमि।"

* * *

स्वामी आङ्गलजातेः विशिष्टं गुणमाविष्कृत्य तेषां मनसि अधिकारम् अस्थापयत् तथा स तेषां गुणग्राहकतायां मुग्धोऽभवत्। तस्मादेव कारणात् स इङ्गलन्डं भारतस्य आध्यात्मिकतायाः प्रतिष्ठाया उपयुक्तं

स्थानम् अमन्यत। तस्यैकस्मिन् पत्रे लिखितं दृश्यते—"…आङ्गलेयानां सम्बन्धे मदीया धारणा आमूलं परिवृत्ता संवृत्ता। बृटिश-समाजे सत्स्वपि परश्शतेषु दोषेषु कस्या अपि भावधारायाः प्रचारस्य यन्त्ररूपेण स सर्वश्रेष्ठो वर्तते। अहं निजविचारान् अस्या जातेः केन्द्रस्थले निधातुं वांछामि, तेन ते संसारे प्रसरिष्यन्ति।…"

आङ्गलजातीनां सम्बन्धे तस्य मन्तव्यम्—"आङ्गलान् प्रति मत्तोऽधिकघृणाभावं समादाय बृटिशभूमौ कोऽपि नाऽऽययौ तथा सम्प्रति अत्र तादृशः कोऽपि नोपस्थितः यः आङ्गलजातिं मत्तोऽधिकं स्निह्यति।"

इङ्गलण्डस्य उच्चवर्गीयाणां जनानां निकेतनेषु या महत्य आलोचना-सभाः भवन्ति स्म तासामेकतमस्या नितान्तसुन्दरं चित्रं समाचारपत्रे दरीदृश्यते—"…यथार्थत एव लन्दनस्य मानमीयपरिवाराणां महिला आसन्दीनामलाभात् वास्तविकभारतीयशिष्यवत् सश्रद्धं तलभूमावेव सपादाकुञ्चनम् उपविश्य व्याख्यानं यदशृण्वन् तद् एकं विरलं दृश्यमासीत्!…स्वामी आङ्गलानां हृदये भारतं प्रति यत् प्रेम तथा सहानुभूतिं संचारयामास, तत् भारतस्य उन्नतये सुतरां सहायकं भविष्यति।" इङ्गलण्डस्य 'इन्डियन-मिरर'-पत्रे प्रकाशित-मासीत्—"… वयं सानन्दं लिखामः यत् स्वामी विवेकानन्दः लन्दनस्य अनेकासां महिलानां तथा विशिष्टसज्जनानां च दृष्टिमाकृष्टामकरोत्। तस्य हिन्दुदर्शनस्य तथा योगसम्बन्धिनः कक्षासु अनेके उत्साहिनः धर्मपिपासवः तथा श्रद्धालवः श्रोतार उपतिष्ठन्ते।"

स्वामी त्रिवारं लन्दनं समाययौ। १८९५ ई० वर्षे प्रायेण मास-त्रयम्, १८९६ ई० वत्सरस्य प्रथमभागे प्रायो मासचतुष्टयम्, तथा तस्मिन्नेव वर्षेऽन्तिमभागे मासत्रयं स्वामी तत्र प्रचारकार्यं प्राचालयत्। इङ्गलण्डे तस्य वेदान्तप्रचारः अतिमात्रमेव सफलोऽजायत। तत्फल-स्वरूपेण स तादृशान् कतिपयान् आङ्गलान् प्राप, ये तस्य कार्ये स्वात्मानं

न्ययूयुञ्जन्। तेषु मिस मूलर, जे० जे० गुडविन्, मिस मार्गारेट नोवेल (भगिनी निवेदिता) तथा श्रीमती एवं श्रीमान् सेवियर्— एतेषां नामानि सविशेषमुल्लेखमर्हन्ति। एतेषां बहवः भारतस्य सेवायां आत्मोत्सर्गमकुर्वन्।

स्वामिनः प्रचारस्य फलं कियद् गभीरं तथा सुदूरप्रसारि च संवृत्तम् तदवगन्तुं वाग्मिप्रवरविपिनचन्द्रपालेन १८९८ ई० वर्षीय-फरवरी-मासस्य १५ तरिकायां 'इन्डियन् मिरर' पत्रिकायां लिखितं विशदतया सहायकं भविष्यति। * स च स्वामिन इङ्गलन्ड-त्यागाच्चतुर्दशमासानन्तरं तं देश-

---

* सोऽलिखत्…"भारते बहूनां धारणाऽस्ति यत् इङ्गलन्डे स्वामिविवेकानन्दस्य भाषणं विशेषप्रभावशालि न प्रबभूव एवं तत्सुहृदः तथा समर्थकाः साधारणकार्यम् अतिरञ्जितं कृत्वा प्राकाशयन्। परन्तु अहमत्रागत्य सर्वत्रैव तस्यासाधारणं प्रभावं पश्यामि। इङ्गलन्डे अहं बहुभिः साकं वार्तालापमकरवम्, ये वस्तुत एव स्वामिविवेकानन्दोपरि गम्भीरां श्रद्धां विदधते। यद्यप्यहं न तत्सम्प्रदायानुयायी तथा इदमपि सत्यमेव यत् तेन साकं मम मतभेदोऽपि वर्तते, तथाऽपि ममेदं वक्तव्यमापतति यत् याथार्थ्येनैव स बहूनां नेत्रे उन्मीलयामास तथा तेषां हृदयमुदारम् एवं प्रशस्तमकरोत्। तस्य प्रचारकार्यफलरूपेण अद्यत्वे अनेके जना ईदृशं विश्वासं बिभ्रति यत् प्राचीनहिन्दुशास्त्रे अनेकान्याध्यात्मिकसत्यानि निहितानि सन्ति। सोऽस्य देशस्य जनसाधारणचेतसि न केवलम् एतान् भावान् प्रावेशयत्, प्रत्युत स भारतं तथा इङ्गलन्डञ्च एकेन सुवर्णमयेन योगसूत्रेण दृढतया बद्धुं सफलप्रयत्नो बभूव।

"मया इतः पूर्वं मिस्टर हार्विस-लिखित—'The Dead Pulpit'-नामकनिबन्धात् 'विवेकानन्दीयम्' इत्यस्य सम्बन्धे योंऽश उद्धृतः तस्मिन् युष्माभिरवगतमेव स्यात् यत् स्वामिविवेकानन्दप्रचारितमतवादानां प्रभावेण अनेके प्रकटरूपेण ईसाई-चर्च-बन्धनादात्मानं मोचयामासुः।

"…तदतिरिक्ततया अहमनेकान् शिक्षिताङ्गलान् अपश्यम् ये भारते श्रद्धां

मगमत्। तस्मिन् समयेऽपि तेन तत्र स्वामिनः प्रचारस्य भूयान् प्रभावः समलक्ष्यत। अस्मद्देशीयाः प्राचीना जना 'हिन्दुधर्म'-शब्देन यत्किमपि विजानन्ति स्वामी तथाविधस्य हिन्दुधर्मस्य प्रचारार्थं लन्दनं न ययौ। 'वेस्टमिनिस्टर-गजट्' संवाददातुः प्रश्नस्योत्तरे स्वामी अकथयत्—"…कमपि नवं सम्प्रदायं स्थापयितुं नाहमिहायातः। मम गुरुदेवश्रीरामकृष्णपरमहंसदेवात् अहं यं संदेशं प्राप्तवान् तस्यैव संसारे प्रचारणं मदुद्देश्यमस्ति। तथा अहं विश्वसिमि वेदान्तस्योदारभावं सर्वे सम्प्रदायाः निज-निजं धर्ममतं रक्षन्तो ग्रहीतुं शक्नुवन्ति।"

स्वामिनः उदारभावेन स संवाददाता एतावदधिकं प्रभावितोऽभूत् यत् स 'लन्दने भारतीययोगी' नाम्ना स्वामिनः सम्बन्धे तस्मिन्नेव समाचारपत्रे विशिष्टतथ्यपूर्णं निबन्धमलिखत्।…

लन्दने स्वामिनः प्रचारकार्यं समीचीनतया अग्रसरमभवत्, किंतु अमेरिकायाः शिष्यवर्गः तं प्रत्यागन्तुं वारं वारं पत्रमलिखत्। तथा अमेरिकायां कार्यस्य स्थायित्वविषयेऽपि विचार्य स अमेरिकां प्रत्यागन्तुं सन्नद्धो बभूव।

लन्दनतः स्वामी १८९५ ई॰ नवम्बरमासस्य १८ तारिकायाम् आलासिङ्गं समसूचयत्—"…इङ्गलन्डे मदीयं कार्यम् अत्युत्तमं संवृत्तम्। इदं विलोक्य ममैवाश्चर्यमजायत। आङ्गला जनाः समाचारपत्रेषु घटाटोपं न कुर्वन्ति, अपि तु ते तूष्णीं कुर्वन्ति।… वृन्दशो जनाः आयान्ति। किंतु एतावतां जनानां कृते मम स्थाने अवकाशो न विद्यते। तस्मात् कारणात्

---

कर्तुं शिक्षितवन्तः तथा भारतीयं धर्ममतम् एवं आध्यात्मिकतत्त्वानि श्रोतुं सातिशयमाग्रहं प्राकटयन्।" न केवलमाङ्गलेयेष्वेव, स्वामिनः प्रचारात् समस्ते 'आङ्गलोसेक्सन्' जात्यभ्यन्तरे भारतीयधर्मस्य तथा संस्कृतेश्च सम्बन्धे ज्ञातुम् एवं ते जातीयजीवने परिणमयितुं चेष्टा बलवती प्रावर्तत।

सम्भ्रान्तगृहमहिलाः तथाऽन्ये जनाः भूमावेव बद्धासना उपविशन्ति। अहं तान् तादृशीं कल्पनां कर्तुं वदामि यत् ते भारतीयाकाशस्याधः शाखाप्रशाखायुक्तस्य विशालवटवृक्षस्य छायायाम् आसीनाः सन्तीव। तेभ्योऽयं भावोऽपि रोचते।

"मया आगामिनि सप्ताहे इतः प्रस्थातव्यम्। अत इमे नितान्तं खिन्नाः। यः कोऽपि चिन्तयति, यद्यहं इयत् शीघ्रं इतश्चलेयं तदा अत्रत्यकार्यस्य हानिरापतेत्। परन्तु नाहं तथा मन्ये। नाहं कस्या अपि व्यक्तेरुपरि यद्वा वस्तुन उपरि आस्थां निदधे। एकः प्रभुरेव ममाश्रयोऽस्ति तथा स एव मदभ्यन्तरेण कार्यं कुरुते।"

परं इङ्गलन्डतः प्रस्थानात्पूर्वं स्वामी कतिपयानि विशिष्टमित्राणि "आरब्धं कार्यं परिचालयत" इति समादिशत्। तदनुसारेण मिस्टर-स्टार्डीप्रभृतिशिष्याः गीताम् उपनिषदादिकमाधृत्य विभिन्नस्थानेषु धर्मालोचनां प्रावर्तयन्।...

* * *

लन्दनतः स्वामी न्यूयार्कं परावृत्य निजकार्यं सुदृढभित्तेरुपरि प्रतिष्ठितं विधातुं संघटनमलके कार्ये व्रती बभूव। भारतवर्षात् निज-सतीर्थ्यान् प्रचारकार्यार्थं समानेतुं प्रबन्धमपि सोऽकार्षीत्। इतस्तु भारतस्य आह्वाने यः करुणस्वर आसीत् सोऽपि तं चंचलं करोति स्म। किन्तु अमेरिकाकार्यस्य सुप्रतिष्ठाकरणात् पूर्वं स भारतं प्रत्यागन्तुं नाशकत्। तदानीं स्वामिना अमानुषिकः परिश्रमः करणीय आसीत्, यस्तस्य स्वास्थ्यस्य एवं जीवनशक्तेश्च सुतरां हानिकारक आसीत्। परन्तु स तस्य उपेक्षामकरोत्।

स स्वकार्यं स्थायि कर्तुं तादृशान् मनुष्यान् प्रस्तोतुं मनः प्रावर्तयत्, ये तदनुपस्थितौ, योऽङ्कुर उद्भिन्नो जातः तस्य रक्षां कुर्युः। स

न्यूयार्के वेदान्तसमितिमस्थापयत्।* बोस्टन-नगरे अन्येषु च नगरेषु तादृशानि प्रतिष्ठानानि स्थापयित्वा शिष्याणाम् एवं छात्राणां सहयोगेन स्वामी प्रचारकार्यं चालयितुमारेभे।

तस्य वाणीं श्रोतुं नरनारीणां संमर्दो जायते स्म। ते जनाः समितिभ्यः तथा विश्वविद्यालयेभ्यः समागच्छन्। शुद्धचेतस ईसाई-जनाः एवं स्वाधीनचित्ता मनीषिणः अत्यन्ताग्रहेणागन्तुं प्रावर्तन्त। पुनः संशयवादिनः समालोचकाः नास्तिकादयोऽपि समाययुः। स सर्वेषां स्वागतमकरोत् तथा विना भेदभावं तानुपदिदेश। आङ्ग्लोसेक्सन-जातौ यो गुण आसीत्, ये समीचीना भावा आसन्, तेषामुपेक्षां स नाकरोत् तथा ये दोषा आसन् तेषामपि तीव्रसमालोचनाकरणात् विरतो नाभूत्। पाश्चात्त्यानामर्थनीतेः, शिल्पव्यवस्थायाः, जनशिक्षाया अपूर्ववस्तुसंग्रहालयस्य, यन्त्रनिर्माणशालायाः, वैज्ञानिकोन्नतेः, स्वास्थ्यव्यवस्थायाः तथा विभिन्नजनहितकार्याणां च स प्रशंसामकरोत्। भारतस्योन्नतये एषां सर्वेषां प्रवर्तनं विशेषरूपेणावश्यकम्, इदं स सश्रद्धं स्वीचकार। किंतु सहैव तेन पाश्चात्त्यसभ्यतायां भौतिकभोग-स्पृहा, सुवर्णस्यापवित्रा पूजा, साम्राज्यवादः, विश्वनिगिलनेच्छा, अन्यजाते रुधिरं संशोष्य स्वदेहपरिपोषणम् इत्यादि-व्यवहाराः साम्यस्य मैत्र्याश्च विरोधिनः। अतस्तानपि स कठोरशब्दैः

---

* १८९६ ई० वत्सरस्य फरवरीमासे स्वामी न्यूयार्क-नगरे वेदान्तसमितिं स्थायितया स्थापयामास। मिस्टर फ्रांसिस एच्० लेगेट-महोदयः सभापतिः तथा स्वामिन इतरे दीक्षितशिष्याः विभिन्नकार्यकारका निर्वाचिता अभवन्।

'ब्रह्मवादिन्'-पत्रिकायाः प्रथमखण्डस्य २०७ पृष्ठतो दृश्यते—१८९४ ई० वर्षे नवम्बरमासे स्वामी न्यूयार्के विभिन्नविभागार्थं कार्यनिर्वाहकैः सह एकां समितिं स्थापयामास। परन्तु तस्याः समितेः तथा तत्कार्यस्य च विवरणं नोपलभ्यते। (रामकृष्णमठः मिशनेतिहासश्च पृ० ९७)

समालोचयामास। स्वामी विवेकानन्दः समग्रस्य विश्वस्य कल्याण-कामनामेवाकरोत्। एवं विश्वस्य कल्याणमार्गमपि स प्रादर्शयत्। तदन्तः प्रधानमासीत् पूर्वपश्चिमसभ्यतयोर्मेलनेन विश्वमैत्रीस्थापनम्। अतएव एतादृशसंगमस्य विरोधिनः सर्वेऽपि विषयास्तस्य समालोच्या आसन्। " इदमेतावत्पर्यन्तमपि इंगलैंडस्य वक्षःस्थले स्थित्वा सः वाणिज्यसमृद्धिं शोणितलोलुपं युद्धं तथा धर्ममतं प्रत्यसहिष्णुतां च तीक्ष्णकटाक्षलक्ष्यतामारोपयन् एवं प्रत्यपादयत्—"·· अनेन मूल्येन हिन्दुजातिः युष्मदीय-शून्यगर्भाया आडम्बरपूर्णसभ्यतायाः अनुरागिणी नैव भविष्यति।····"

पाश्चात्त्यानां कृते तस्य कार्यमासीत् भारतस्य आध्यात्मिकसम्पदः वहनपुरस्सरं तत्र प्रापणम् तथा ततः भारतार्थं प्राच्यदेशार्थं च स धनसम्पदं शक्तिसम्पादनोपायरूपं विज्ञानञ्च नीत्वा समर्पणम्। अस्याः आध्यात्मिकतायास्तथा विज्ञानस्य च विनिमयेन स पारस्परिकसहायता-माध्यमेन नूतनां सभ्यतां सङ्घटयितुं दीक्षितो बभूव। अनेक-शताब्दीनां पश्चात् भारतीयसंस्कृतिः पुनः स्वामिविवेकानन्दमाध्यमेन निर्गमनपथं प्रादुर्भावयामास।* समस्तस्य विश्वस्य स्थायि-कल्याणार्थं अस्यापरिहार्यत्वमासीत् वर्ततेऽपि।

---

* स्वामिनः श्रेष्ठदानसम्बन्धे विश्वकविः रवीन्द्रनाथः प्राह—"·····स्वल्पादिवसेभ्यः पूर्वं वङ्गाले यस्य महात्मनः लोकान्तरगमनमभूत् स स्वामी विवेकानन्दः पूर्वपश्चिमदेशौ वामदक्षिणयोर्निधाय मध्ये स्थातुं समर्थोऽभूत्। भारतवर्षस्य इतिहासाभ्यन्तरे पाश्चात्त्यानस्वीकृत्य भारतवर्षस्य संकीर्णसंस्कारेषु चिराय संकोचनं तस्य जीवनस्योपदेशो नाभूत्। ग्रहणस्य मेलनस्य तथा सर्जनस्य प्रतिभैव तस्मिन्नवर्तत।···स भारतवर्षस्य साधनां पश्चिमे तथा पश्चिमस्य साधनां भारतवर्षे दातुमादातुञ्च पन्थानं रचयितुं निजजीवनमुत्ससर्ज।" (रामकृष्ण-

स्वामिनः पाश्चात्यदेशगमनमाकस्मिकी घटना नावर्तत । स ईश्वरस्य विश्वकल्याणपरिकल्पनाया अंशविशेष आसीत् ।···

स्वामी किमपि स्मृतिपत्रं विलिख्य भाषणं न ददौ। अत एव तदीयानि बहूनि भाषणानि लुप्तान्यभूवन्। तेषां प्रतिलिपिरद्यत्वे न मिलति। धर्ममहासम्मेलनानन्तरं स्वामी संयुक्तराष्ट्रस्य विभिन्नेषु स्थानेषु वर्षद्वयं यावत् शतशो भाषणानि दत्तवान्। एवं तेन आलोचनाः बहवः कृताः। यदि तानि सर्वाणि रक्षितान्यभविष्यन् तैः परस्सहस्र-पृष्ठानां ग्रन्थो भवितुं शक्नुयात्। परन्तु तेषां भाषणानां रक्षणस्य न कोऽपि प्रबन्धो बभूव । १८९५ ई० वर्षान्तिमभागे तस्य न्यूयार्क-परावर्तनानन्तरं तच्छिष्याः तस्य वक्तृतानां रक्षार्थं द्वौ सांकेतिकलिपि-कारौ न्ययोजयन्। किन्तु फलं सन्तोषजनकं नाभूत्। स्वामी यस्मिन् विषये भाषणं ददाति तत्प्रतिपाद्यवस्तुनः ज्ञानाभावात् तथा स्वामिनो भाषणस्य द्रुततरगतितया तद्भाषणानां विवरणरक्षणं सम्भवं नाभूत्।

तस्या निराशाया अवसरे दैवयोगात् जे० जे० गुड्विन-नामा एक आङ्गल-लघुलिपिकरः आसादितः, यः स्वामिनो भाषणानि लिखितुं समर्थो बभूव। स्वल्पदिवसाभ्यन्तरे एव स स्वामिन्यनुरक्तः समजनि तथा तद्विचारधारया परिचितो भूत्वा स्वामिनो भाषणानि एवम् आलोचनाश्च नितरां चारुतररूपेण लघुलिपिषु लिखितुं प्रावर्तत। ततः परं पाश्चात्यदेशेषु तथा भारतवर्षे स्वामिनो वक्तृताः यत्पुस्तक-

---

मिशनशिक्षामन्दिर, वेलुडमठद्वारा प्रकाशितसंदीपन १९६१ ई० संख्या २)

स्वामिविवेकानन्दः प्राच्यप्रतीच्ययोः सम्मिलन-सेतु-स्वरूप आसीत् । स समस्ते संसारे साम्य-मैत्र्योः स्थापनस्य गुरुदायित्वं निजस्कन्धे गृहीतवान्। तस्येयं शुभा प्रचेष्टा कियद्दूरं सफला बभूव इति इतिहासः प्रमाणयिष्यति ।

रूपेणोपलभ्यन्ते तत्सर्वं गुड्विन-महोदयस्याविस्मरणीया कीर्तिरस्ति।*
स्वामी कर्मयोगभक्तियोगयोः सम्बन्धे यानि भाषणानि प्रददौ तान्यपि
पुस्तकात्मना प्रकाशितानि भवितुमशक्नुवन्।

न्यूयार्ककार्यं सुप्रतिष्ठितं विधाय स्वामी गुड्विनं समादाय 'डेट्रएट'-नगरं पञ्चदशदिवसार्थं प्रययौ। तस्मिन् समये स आत्मानं विभज्य नूनं व्यतरदिव। अनुदिनं भाषणातिरिक्ततया तेन बहुभिः जनैः साकं वार्तालापा अपि कर्तव्या बभूवुः। तस्यान्तिमदिनभाषणस्य सम्बन्धे एकः प्रत्यक्षदर्शी इत्थं व्यावर्णयत्—"डेट्रएटजनसामान्याय स्वामी 'वेथलमन्दिरे' अन्तिमं दर्शनं प्रादात्। स्वामिनोऽनुरागी भक्त-'रैवाई लुई ग्रोसमैनः' तस्य यहूदीमन्दिरस्य अर्चक आसीत्। तद् दिनं रविवासर आसीत्। सायं समये जनस्तोम एतावद् अवर्धत यद् अस्माकं भयं समजायत यत् विह्वला जनाः किमि किमपि काण्डं अनुतिष्ठेयुरिति। मार्गोपर्यपि जनसम्मर्द आस्त तथा शतशो जनाः परावर्तन्तापि। स्वामी विवेकानन्द एतां बृहतीं श्रोतृमण्डलीं मन्त्रमुग्धामकरोत्। तद्दिवसस्य भाषणविषयः—"पाश्चात्त्यजगत् प्रति भारतस्य

---

* स्वामी गुड्विने भूरि स्निह्यति स्म। सोऽभ्यधात् 'मम विश्वासास्पदं गुड्विनः मम पाश्चात्त्यदेशात्परावर्तनात्परं १८९८ ई० वर्षस्य कस्मिन्नपि समये 'मद्रास-मेल' - समाचारपत्रस्य सम्पादकीयविभागे नियुक्तिं प्राप्य मद्रनगरं समाययौ। एवं १८९८ ई० जूनमासद्वितीयदिवसे नीलगिरौ ( Ooty ) ज्वरविशेषेणाक्रान्तः ( Enteric Fever ) सहसा दिवं गतः। तस्मिन् समये तदन्तिके लघुलिपिषु स्वामिनः बहवो वक्तृताः आसन्। नियुक्तिग्रहणानन्तरं स तासां वक्तृतानां प्रचलिताङ्ग्लभाषायां लिखितुमवसरं नालभत इति भाति। तेन स्वामिनः शताधिका वक्तृताः एवं वार्तालापाश्च विनष्टाः। स्वामिनः सर्वाण्यपि भाषणानि यदि प्रकाशितान्यभविष्यन् तदा संसारस्य ज्ञानभण्डारः इतोऽप्यधिकं समृद्धोऽभविष्यत्।

-वाणी तथा सार्वजनीनधर्मस्यादर्शः" तस्य भाषणम् अत्यन्तहृदयग्राहि एवं वैदुष्यपूर्णमप्यासीत्।...."

डेट्रएट-कार्याणां भारं निजशिष्ये स्वामिकृपानन्दे निधाय स्वामी बोस्टनं प्रत्याययौ। तदानीं स शतशः अनुरक्तश्रोतृणां समक्षं विभिन्न-स्थानेषु अनेकानि भाषणानि प्रददौ। तेषु 'एलिन जिमनेशियम' इत्यत्र चत्वारि, केम्ब्रिज-नगरे उलिवुलसदने द्वे, हार्वर्डविश्वविद्यालयस्य बुधमण्डल्याः सम्मुखे एकम्, तथा 'विंशशताब्दी'-सभायां भाषणानि सातिशयमुल्लेख्यानि सन्ति। हार्वर्डविश्वविद्यालये वेदान्तदर्शनसम्बन्धे स्वामिनो भाषणं तथा पाण्डित्यपूर्णम् एवं हृदयहारि च संवृत्तम्, यत् तद्विश्वविद्यालयस्य सदस्याः तं प्राच्यदर्शनानामध्यापकतां स्वीकर्तुं वारं वारं अन्वरुन्धन्। परन्तु स्वामिनाऽवोचि— "अहं संन्यासी अस्मि, कर्मकरत्वं कथं कुर्याम् ?"

इयता समयेन स्वामिनः 'कर्मयोग'-'भक्तियोग'-नामकं ग्रन्थद्वयं प्रकाशितमापद्यत। यस्य प्रभावः अमेरिकायाः विचारवार्ता-मनस्तत्त्वविदां तथा शिक्षितानाञ्च समाजे आधिक्येन प्रासरत्। किंतु अत्यधिकपरिश्रमात् स्वामिनः स्नायुमण्डली क्षीणतामाप।....स यस्य सार्वभौमवेदान्तमतस्य प्रचारं चकार तस्मिन् सर्वेषां धर्माणां मतवा-दानाम् अवकाश आसीत्। अस्मात् कारणात् तस्य मनसि एकस्य विश्वमन्दिरस्य ( Universal Temple ) निर्माणपरिकल्पना क्रमशः साकारा अजायत, यत्र सर्वधर्माणां मतवादिनां तथा सम्प्रदायानां जनाः निजान् ईर्ष्या मतभेद-विरोधान् विस्मृत्य समवेतरूपेण स्व-स्व-परमात्मन उपासनां कुर्युः *

---

* स्वामी एनां परिकल्पनां कार्यात्मना परिणमयितुं नाशक्नोत्, किन्तु स्वामिनः परवर्ती ध्वजावहनकारी स्वामित्रिगुणातीतः १८६०० ई० वर्षे स्वामि-प्रतिष्ठिते 'वेदान्तसंघे' ( 'The Vedanta Society of San Fransisco' )

वेदान्तधर्मं पाश्चात्त्यदेशे सुप्रतिष्ठितं कर्तुं कैलिफोर्निया-स्थानस्य कैट्सकिलपर्वतोपरि अष्टोत्तरशत-एकड-परिमितां भूमिं क्रीत्वा शिष्याणां तथा वेदान्तच्छात्राणां साधन-भजनार्थं भूयसां कुटीराणां निर्माण-स्येच्छापि स्वामिनो मनसि अवर्तत । *

अमेरिकायां 'भारतस्य वाणीं' सुप्रतिष्ठितां कर्तुं स्वामिनो जीवन-शक्तिः समाप्तप्राया जाता, तथाऽपि स तत् कार्यमकरोत् । तस्यानु-पस्थितौ देशस्य कार्यम् अञ्जसा चलेत् एतदर्थं प्राणपणेन स चेष्टामकरोत् । सोऽनेकान् अनुरागिभक्तान् वेदान्तधर्मे दीक्षितानकार्षीत् तथा अनेके जनाः तस्माद् ब्रह्मचर्यं तथा संन्यासं च गृहीत्वा वेदान्तप्रचारे नियुक्ता बभूवुः । अनेनैव क्रमेण अमेरिकाया उच्चश्रेणीका अनेके विचारशीला लोकाः, दार्शनिकाः, वैज्ञानिकाः, अध्यापकाः, लेखकाः, धर्मप्रचारकाश्च स्वामिनो भावं प्रति श्रद्धासम्पन्नाः अनुरक्ताश्च बभूवुः ।

---

१९०६ ई० वर्षे Hindu Temple हिन्दुमन्दिरनाम्ना प्रथमं वेदान्तमन्दिरं सर्वजातीयानाम् उपासनार्थं निरमात् । तस्य मन्दिरस्यावश्यकतायाः परिवर्धनात् तस्य केन्द्रस्य वर्तमानाध्यक्षः स्वामी अशोकानन्दः १९५९ ई० वर्षे सान्फ्राँसिस्को-नगरे सर्वधर्मावलम्बिनाम् उपासनालयरूपेण अन्यदेकं मन्दिरं निर्ममे । हॉलीवुड-वेदान्तकेन्द्राध्यक्षः स्वामी प्रभवानन्दोऽपि 'वृहत्तर सैन्टो बारबारा' नामके स्थाने अपरमेकं वेदान्तमन्दिरमस्थापयत् । साम्प्रतम् अमेरिकायां यानि स्थायीनि दशकेन्द्राणि सन्ति, तेषां प्रतिकेन्द्रमेव विश्वमन्दिरभावानुरूपा उपासनालयाः स्थापिता बभूवुः ।

* स्वामिनो जीवदवस्थायामेव तस्य सतीर्थ्यः स्वामी तुरीयानन्दः सान-फ्राँसिस्कोतः चत्वारिंशत्क्रोशदूरे 'सैन एनटोन वैली' इत्यत्र एकस्मिन् निर्जनस्थाने तादृशं कार्यं प्रारभत । तद्विध एव एको विशालाश्रमः सैनफ्रांसिस्को-नगरस्यानति-विप्रकर्षे 'ओलिमा' - स्थाने द्विसहस्र-एकड-परिमित-पार्वतवनस्थल्यां अशोका-

अमेरिकाकार्ये यदा स्वामी अनेन क्रमेण व्यस्त आसीत् तदा इंग्लन्डवासिनां शिष्याणां आह्वानानि पौनःपुन्येन समागतानि। इंग्लन्डे कर्षितभूमौ सम्प्रति बीजवपनस्य समय उपस्थितः। सोऽपि सन्नद्धोऽभवत्। पूर्वप्रबन्धानुसारं स्वामी सारदानन्दस्तस्य साहाय्यमाचरितुं भारतवर्षात् प्रातिष्ठत। १८९६ ई० वर्षस्य एप्रिलमासस्य १ तारिकायां स लन्दनेऽवातरत्। स्वाम्यपि एप्रिलमासस्य १५ तारिकायां न्यूयार्कतः इंग्लन्डं प्राचलत्। किन्तु निर्गमनात् पूर्वम् अमेरिकाया यन्त्रं वेगेन चालयित्वा ततः प्रस्थितः।

—*०*—

नन्दस्वामिन उद्योगेन प्रस्तुतोऽभूत्। संयुक्तराष्ट्रस्य उत्तर-पश्चिम-भागे 'पोर्टलन्ड-वेदान्त-सोसाइटी' द्वारा '१२० एकड'-मितारण्यान्तराले साधनभजनोपयोगी इतर एक आश्रमोऽपि स्थापितः। इतोऽपि अधिकाः कतिचन क्षुद्रा महान्तश्च भजनाश्रमाः सन्ति। अनेनैव विधिना अमेरिकाया विभिन्नस्थानेषु स्वामिनः परिकल्पना साकारा संवृत्ता।

## १६

लन्दनमुपेत्य स्वामि-सारदानन्दं विलोक्य विवेकानन्दः सुतरां मुमुदे। उभावपि मिस्टर-स्टार्डी-भवने समवस्थाय प्रचारकार्यमारभेताम्। सहैव स्वामिसारदानन्दस्य प्रचारकरूपेण प्रस्तुतीकरणमपि स्वामिनोऽन्यत् कार्यमवर्तत। स सतीर्थ्याय विविधशैलीभिः शिक्षां प्रादात्। विशिष्टैर्निजमित्रैः सह तस्य परिचयम् अकारयत्।

मईमासप्रथमसप्ताहादेव नियतरूपेण ज्ञानयोगस्य कक्षा प्रक्रान्ता। पुनश्च सः 'पिकाडिली-पिक्चर-गैलरी,' 'प्रिन्सेप् हाल्' इत्यत्र विविधास्वालोचनासभासु, शिक्षाप्रतिष्ठानेषु, एनीबेसेन्ट-भवने तथान्येष्वनेकस्थानेषु च भाषणान्यकरोत्। इङ्गलन्डस्य श्रोतॄणां विचारशीलतां प्रति स्वामिनो ध्यानमाकृष्टमभूत्। रक्षणशीलताऽपि तेष्वेका विशिष्टता आसीत्। स निजपूज्यप्रियतमगुरुदेवसम्बन्धेऽपि यत्र तत्र अभाषत।...

संयुक्तराष्ट्रे स्वामिना कतिचन श्रेष्ठा मनीषिणो मित्ररूपेण संप्राप्ताः। किन्तु आंगलानाम् बहुविधं दानं स्वामिनः कार्ये इतोऽप्यधिकं साह्यमातनोत्।

लन्दन-निवाससमये स्वामिनः एवं पण्डितप्रवरमैक्समूलरस्य च समागमः एका महत्त्वपूर्णा घटना अस्ति। मैक्समूलरः पूर्वत एव श्रीरामकृष्णे श्रद्धान आसीत्। स श्रीरामकृष्णं 'पूर्वाकाशे उदीयमानं नक्षत्रं तथा आधुनिकतमः अवतारः' इति घोषितवानासीत्। केशवचन्द्रसेनस्य सहसा धर्ममतपरिवर्तनस्य कारणमन्विष्यन् स श्रीराम-

कृष्णम् आविरकारयत्। तत्समयादारभ्यैव तस्य महापुरुषस्य जीवन-वृत्तं तथा वाणीञ्च यावदप्यलभत तस्य संग्रहं कृत्वा 'नाइन्टींथ सेंचुरी'-पत्रिकायां 'यथार्थमहात्मा'-नाम्ना प्रकाशयामास। तेनैव तस्मिन् देशे संरम्भकोलाहलः प्रससार। स्वामी पूर्वमेव मैक्समूलरेण सह संगन्तुं कृतसंकल्प आसीत्। परन्तु तस्य हार्दमामन्त्रणमवाप्य स्वामी १८९६ ई० वर्षे मईमासि २८ तारिकायाम् 'आक्सफोर्डे' वृद्धप्राध्यापकगृहं गत्वा तेनामिलत्। द्वयोर्मिलनमतीवान्तरङ्गभावेन संवृत्तम्। श्रीराम-कृष्णस्य प्रधानशिष्यरूपेणैव स्वामी विवेकानन्दस्तस्य श्रद्धा-भाजनमवर्तत।

स्वामी यूरोपस्य वृद्धमध्यापकं 'प्राचीनार्यर्षीणामवतार' इत्युक्त्वा सम्बोधितवान्।* श्रीरामकृष्णस्य सम्बन्धे स्वामी यदैवावोचत्—"अद्यत्वे सहस्रशः स्त्रीपुरुषाः श्रीरामकृष्णदेवस्य पूजां कुर्वन्ति।" तदैव वृद्धाध्यापकस्य मुखमण्डलम् आनदोज्ज्वलम् अभासत। स आवेगेन सह उत्तरं दत्तवान्—"तादृशस्य पुरुषस्य जना यदि पूजां न कुर्युश्चेत् तर्हि कस्यान्यस्य करिष्यन्ति ?" स सोत्साहम् अन्यदप्यपृच्छत् "यूयं तं (परम-हंसदेवं) संसारे अभिज्ञातं कारयितुं किं कुरुथ ?" स परस्तात् उक्तवान् यत् अपेक्षिता सामग्री समानीय दीयते चेत् स सानन्दं श्रीरामकृष्ण-

---

* मैक्समूलरेण सह परिचितो भूत्वा स्वामी इयदधिकं प्रसन्नोऽभूत् यत् स मद्रास-'ब्रह्मवादिन्'-पत्रिकार्थं यत् पत्रं प्रैषयत् १८९६ ई० वर्षस्य जूनमासस्य ६ तारिकायां तद् द्रष्टव्यम्। उद्बोधनकार्यालयद्वारा प्रकाशिते "हिन्दुधर्मस्य जागरणं" नामके पुस्तके 'मैक्समूलर-पौलडयसन्' आभ्यां साकं स्वामिनः संगतेः विवरणं तल्लिखितपत्रानुवादरूपेण प्रकाशितमस्ति। तत्र द्वयोः पक्षयोः गभीरा आन्तरिकता अस्मान् आश्चर्यचकितान् कुरुते।

जीवनीं लिखितुं सन्नद्धोऽस्तीति ।* स्वामी पृष्टवान्—"श्रीमान् कदा भारतमायास्यति ? यस्तावदस्माकम् ऋषीणां विचाराणां श्रद्धया सह आलोचनामकरोत् तस्याभ्यर्थनां कर्तुं तत्रत्याः सर्वेऽपि सानन्दं सन्नद्धाः । नात्र सन्देहावसरः कोऽपि ।" अध्यापकः सावेगं बभाषे—"तर्हि सम्भवतः नाहं परावर्तिष्ये । मदीयं शरीरं तत्रैव समाधिस्थं कर्तव्यमापतेत् ।"...

रात्रौ स्वामी यदा वाष्पशकटीविश्रामालये शकटीं प्रतीक्षमाण आसीत् तदा वृद्धाध्यापकोऽयं झञ्झावाताविले कालेऽपि तत्रागत्योपतस्थे । तं विलोक्य स्वामी ससंकोचं बभाषे—"अस्मिन्नुपद्रुते वाता-

---

* श्रीरामकृष्णदेवजीवनस्य उपादानसंग्रहार्थं स्वामिना लन्दनात् रामकृष्णानन्दाय लिखितपत्रस्य एकोंऽश एवम्प्रकारेण वर्तते—१८९६ ई० जूनमासस्य २४ तारिकायां—"प्रियशशिन्, श्रीपरमहंसदेवस्य सम्बन्धे मैक्समूलरेण लिखितो निबन्धः आगामिमासे प्रकाशितो भविष्यति । सः श्रीजीचरणस्य जीवनीं लिखितुं अनुमोदनं कृतवान् । स गुरुदेवस्य सर्वाः वाणीः वाञ्छति । सर्वा उक्तीः ससन्निवेशं सञ्चाह्य प्रेषय । अर्थात् कर्मसम्बन्धे एकत्र, वैराग्यसम्बन्धे परत्र, तथैव भक्तिज्ञानादिविषयेऽपि ।

"त्वया तत्कार्यम् अधुनैवोपक्रमणीयम् । केवलं आङ्गलभाषायां यत् न प्रचलेत् तद् वचनजातं परित्याज्यम् ( शौच,-मूत्र-थू-थू शरीरस्यानाविष्कार्यं स्थानादि ) निजमत्यनुसारं तेषां शब्दानां स्थाने यथासम्भवमन्ये शब्दाः प्रयोक्तव्याः ।... 'कामिनी-काञ्चने' इत्यत्र 'काम-काञ्चनम्' इति विलेख्यम् (Lust and gold etc ) अर्थात् तेषामुपदेशे सर्वजनीनो भावः प्रकटयितव्यः । इदं पत्रं कस्मै अपि मा प्रदर्श्यताम् । त्वम् इदं सर्वं कार्यं समाप्य सर्वासामुक्तीनां आङ्गलानुवादं श्रेणीविभागञ्च (classify) विधाय "प्रो० मैक्समूलर, आक्सफोर्ड यूनिवर्सिटी, इङ्गलन्ड" अस्मिन् संकेते प्रेषय ।..." स्वामी सारदानन्दं उपादानसंग्रहार्थं ( प्रतिपाद्यवस्तुवृत्तसंकलनाय ) नियुयोज । तेन संगृहीतेनोपादानेन मैक्समूलरः "श्रीरामकृष्णस्य जीवनी तथा वाणी" इति नामकं प्रसिद्धग्रन्थं प्रणिनाय ।

वरणे आगमनकष्टं कथं सोढम् ?" प्राध्यापकः सगद्गदं उदतरत्—"श्रीरामकृष्णस्य योग्यतमशिष्यदर्शनस्य सौभाग्यं प्रतिदिनं हस्तगतं न भविष्यति ।" तद् मर्मस्पर्शि वचनं स्वामिनमभ्यभावयत् । स जीवन-पर्यन्तम् अध्यापके सविशेषं बद्धश्रद्धो बभूव ।...

मैक्समूलरेण समागमानन्तरं १८९६ ई० वर्षे मईमासस्य ३० तारिकायां स्वामी 'मिसेज् बुल'-महोदयायै समलिखत्—"पूर्वेद्युः मैक्समूलरेण सार्धं मम समागमः समजनि । स महानुभावो मुनितुल्यः पुरुषः । तस्य वयोऽवस्था सप्ततिमिताऽपि युवकवत् प्रतिभासते । एतावद् दूरं तस्य मुखे वार्धक्यव्यञ्जिका रेखा अपि न लक्ष्यन्ते । अहह ! भारतवर्षं तथा वेदान्तञ्च प्रति तस्य यावत् प्रेम वर्तते यदि अस्मदन्तरे तदर्धमप्यभविष्यत् ! तदरिक्तं योगशास्त्रं प्रत्यपि स भावुकतां बिभर्ति, तथा तत्र विश्वसिति । परन्तु पाखण्डिनः सर्वथा तस्मै न रोचन्ते ।

"सर्वतोऽधिकं रामकृष्णपरमहंसे तस्य अगाधा भक्तिरस्ति । स तस्य सम्बन्धे 'नाइन्टीन्थ सेञ्चुरी'-पत्रिकायामेकं निबन्धमालिखत् । स मामपृच्छत्—'यूयं तं संसारे विज्ञातं विधातुं किमाचरथ ?' रामकृष्णदेवः तमनेकवर्षेभ्यः मुग्धं व्यधात् । किमेष नास्ति सुसमाचारः ?..."

* * *

तस्मिन् समये स्वामी व्याख्यानाद्यतिरिक्ततया सप्ताहे पञ्च कक्षाः तथा एकां प्रश्नोत्तरकक्षां प्रवर्तयति स्म । अनेन प्रकारेण जुलाईमास-पर्यन्तं प्रचारकार्यं निवर्त्य स 'सेवियर'-दम्पतीभ्यां तथा 'मिस मूलरया' च सार्धं यूरोपभ्रमणार्थं निरगच्छत् । विश्रामार्थं सर्वे प्रथमं स्वीजरलन्डं ययुः । एकस्मिन् दिने पर्यटन् पर्वतोपरि एकस्मिन् क्षोदीयसि उपासना-मन्दिरे स 'मेरी'-महोदयायाः पादपूजामाचरत् । 'मन्दिरस्यार्चकः आपत्तिं कुर्यात्'—इत्यतः स्वयमगत्वा मिसेजसेवियरदम्पतीभ्यां देव्याः पादपूजार्थं पुष्पाणि दत्वाब्रवीत्—"इयमप्यस्ति माता ।" अन्यस्मिन्

समये कदाऽपि एकेन शिष्येण मैडोनामूर्तिमानीय स्वामिनः सम्मुखे 'आशीर्वादाः दीयन्ताम्' इति निवेदने कृते स शिरो नमयित्वा शिशोः ईसा-महोदयस्य चरणस्पर्शं कृत्वा प्राह—"अहं यदि तस्मिन् समये उपस्थितोऽभविष्यम् तदा अश्रुभिर्न, वक्षोरुधिरेण तस्य चरणौ अक्षालयिष्यम् ।"...

स्वल्पैरेव दिवसैः स्वामिनः स्वास्थ्ये उन्नतिः समदृश्यत । तुषारवातं जलप्रपातं एवं पर्वतीयसुषमाञ्च दृष्ट्वा स्वामी हिमाचलशोभां स्मरन् अतिमात्रं प्रफुल्लोऽभूत् । तस्मिन्नेव समये जर्मनी-कीलविश्वविद्यालयस्य प्रसिद्धः प्राध्यापकः पालडायसनः सन्द्रष्टुं स्वामिनमामन्त्रयत् । तद-नुसारं स्वामी कोलनगरं गत्वा प्राध्यापकनिलये तेन सह समागच्छत । वेदान्तचर्चैव प्राध्यापकस्य एकमात्रं जीवनव्रतमासीत् । आलोचनाप्रसङ्गे प्राध्यापकः प्राह—"...वेदस्य तथा वेदान्तस्य उच्चा विचारधारा क्षणादेव मानसं उन्नतमाध्यात्मिकं भावराज्यं नयति ।... मनुष्यस्य चिन्तन-शक्तिः सत्यमन्विष्यन्ती यानि तत्त्वानि आविष्कृतवती, उपनिषदः, वेदान्तदर्शनम्, तथा शाङ्करभाष्यम् तेषां श्रेष्ठतमा अभिव्यक्तिरस्ति ।"

स्वामिना साकं वेदान्तस्य उपनिषदश्च आलोचनया प्राध्यापक एतावान् मुग्धो बभूव यत् स स्वामिनं कतिपयदिवसान् तत्रैव अवस्थातुं अनुरुरोध । किन्तु लन्दनस्य कार्यार्थं तद् न सम्भवमस्तीति ज्ञात्वा प्राध्यापकः स्वयमेव स्वामिना सह वेदान्तालोचनार्थं पुनः हम्बुर्गनगरे गत्वा सममिलत् । सर्वेऽपि हालन्डराजधान्यां एम्स्टार्डम-नगरे दिनत्रय-मुषित्वा सम्भूय लन्दनं प्राचलन् । स्वामिनो भाषणमाकर्ण्य वेदान्ताभि-प्रायस्य समुज्ज्वलप्रकाशेन प्राध्यापकस्यान्तरं उद्भासत ।

लन्दने सप्ताहद्वयं यावत् अनुदिनं तयोर्द्वयोः समागमो बभूव । पाश्चात्त्यानां अनयोर्द्वयोः श्रेष्ठमनीषिणोः सम्बन्धे स्वामी 'ब्रह्मवादिन्'-पत्रिकायां व्यालिखत्—"...भारतवर्षं स्वात्मानं यावद् दूरं अजानात् ततोऽप्यधिकं इमौ द्वौ विद्वांसौ अजानीताम् । अनयोर्द्वयोः समक्षं

भारतवर्षं विशेषतोऽधमर्णमस्ति !" मैक्समूलरः सुदूरं चत्वारिंशद्वर्ष-पर्यन्तं वेदानामनुसन्धानं विदधे। अत एव तं स्वामी 'आर्यर्षेरवतार' इत्यभ्यधात्।

* * *

एतेषु दिवसेषु स्वामी सारदानन्दः न्यूयार्के सातिशयसाफल्येन वेदान्तस्य प्रचारकार्यं प्रचालयन् अविद्यत। स्वामी लन्दनं परावृत्य कतिपयदिनविश्रामानन्तरं अक्टूबरमासस्य ८ तारिकायां नियतरूपेण भाषणं कक्षाध्यापनं प्रक्रान्तवान्। तस्य प्रचारस्य पर्याप्तं फलं समजायत। इङ्गलन्डस्य धर्मप्रचारकाणां विचारधारा अपि तेन विशेषरूपेण प्रभाविता बभूवुः। बहवो मनीषिणः स्वामिसंस्पर्शे आगत्य उपकृता जाताः।

पूर्वनिर्धारणानुसारं अस्मिन् समये स्वामिसतीर्थ्यः अभेदानन्दोऽपि लन्दनमाजगाम। स्वामी नवागतं प्रचारकं प्रस्तुतीकृत्य कर्मक्षेत्रेऽवता-रणस्य व्यवस्थां व्यतनोत्। अक्टूबरमासस्य २७ तारिकायां 'ब्लुम्स-बेरिस्क्वयर्' इत्यत्र स्वामिनं प्रतिनिदधानः अभेदानन्दस्वामी चारुतरं भाषणमकार्षीत्। स्वामी अतीव प्रसन्नोऽजायत। एवं प्रचारकार्यस्य उज्ज्वलामायतिं विज्ञाय स निश्चिन्तः समभूत्। प्रतीच्यां काष्ठायां वेदान्तः सुप्रतिष्ठितः संवृत्तः। स्वामी एकदा प्रोवाच—"...कर्तव्य-परायणाः कार्यदक्षाः विंशतिप्रचारका यदि लभ्येरन् तदा विंशतिवर्षा-भ्यन्तरे अहं पाश्चात्त्य-भूखण्डं वेदान्तभावप्रभावितं कर्तुं शक्ष्यामि।"*

---

* बेलुडमठद्वारा १९६२ ई० वर्षस्य मईमासे प्रकाशितरामकृष्णमठस्तथा मिशनसाधारणविवरणे (जनरल-रिपोर्ट) लिखितं वर्तते—वर्तमानसमये अमेरिकाया विभिन्नस्थानेषु दश प्रधानकेन्द्राणि, अष्टौ क्षुद्रभजनाश्रमाः; अर्जन्टाइना-देशे, इङ्गलन्डे स्वीजरलन्डे च एकमेकं स्थायिकेन्द्रं स्थापितमस्ति। संहत्य अष्टादश संन्यासिनः तथा भूयांसो ब्रह्मचारिणः इदं बृहत्तमं कार्यं निर्वहन्ति। (फ्राँसदेशेऽप्येकं केन्द्रं सन्नद्धं वर्तते—लेखकः।)

भारतस्य चिन्ता स्वामिनश्चित्तेऽधिकारं प्रतिष्ठापयामास। समस्तं भारतवर्षं तद्वाणीं ग्रहीतुं साग्रहमजायत। एकदा स स्वान्तेवासिनेऽलिखत्—"भारताद् वहिः प्रदत्त एक आघातः अभ्यन्तरप्रदत्तासहस्राघातसदृशो वर्तते।" पाश्चात्त्यदेशेषु स यं प्रचण्डमाघातं दत्तवान् तस्य प्रतिध्वनिः भारतं रोमाञ्चितं तथा जागृतं चकार। सहस्रशः स्त्रीपुरुषाः विवेकानन्दोक्तिं ग्रहीतुं सन्नद्धाः आसन्। स्वामिनो हृदये भारतसंघटनमूलकं कार्यं साकारं भवितुमुपाक्रमत। स पूर्वं भारते लिलेख यत् स प्रथमं मद्रपत्तने कलिकात्तायां तथा हिमालये एकमेकं केन्द्रं स्थापयित्वा कार्यारम्भं कर्तुमिच्छति। ततः परं स क्रमशः बम्बई-अल्लाहाबादयोः एवं समस्ते भारतवर्षे केन्द्राणि स्थापयिष्यति।···

स्वामी प्रथमवारं इंगलन्डं आगत्य भूमिकर्षणमकार्षीत्। द्वितीयवारं समेत्य तत्र बीजान्यवपत्। स विभिन्नस्थानेषु निजवाण्याः प्रचारमाचरत्, तस्य फलमपूर्वं समजनि। विपश्चितः एवं विचारशीलाः पुरुषाः तेन सह वेदान्तचर्चां कर्तुमागत्य तस्य युक्तीः श्रेष्ठतया ग्रहीतुं विवशाः समपद्यन्त। तस्य व्याख्यानेषु एतावन्तोऽधिकाः मनुष्याः समवयन्ति स्म यत् स्थानाभावात् शतशो मनुष्याः ऊर्ध्वं स्थित्वैव व्याख्यानमश्रृण्वन्। समाचारपत्राणि तस्य प्रशंसयैवापूर्यन्त।

१८९६ ई० वर्षस्य जनवरीमासस्याष्टादशदिवसे 'इन्डियन् मिरर'-पत्रिका स्वामिनः प्रचारकार्यसम्बन्धे व्यलिखत्—"···वयं सानन्दं लिखामः यत् स्वामी विवेकानन्दः लन्दन-नगरस्य विशिष्टविदुषां तथा शिक्षितमहिलानां दृष्टिमाकृष्टवान्। तस्य हिन्दुदर्शनस्य एवं योगदर्शनस्य कक्षासु अनेके उत्साहिनः तथा श्रद्धावन्तः श्रोतार उपतिष्ठन्ति।" लन्दनेऽन्यः एकः संवाददाता समलिखत्—"लन्दननगरे सम्पन्नगृहाणां कतिपयाः महिलाः आसन्दीदौर्लभ्यात् तलभूमावेव सपादाकुञ्चनं उपविश्य भारतीयगुरुभक्तशिष्यवत् भक्त्या साकं स्वामिन उपदेशमश्रृण्वन्—दृश्यमिदं अतीवाश्चर्यजनकं वर्तते। अस्माभिः श्रुतं यत् कैन्नस, हेज आदिप्रसिद्धैः

धर्मप्रचारकैः स विशेषसम्मानेन साकं गृहीतः। प्रथमोक्तमहाशयगेहे स्वामिनः सम्मानप्रदर्शनार्थं एका गोष्ठी (लेवि) आहूता। तस्यां लन्दनस्य अनेके सम्मानिताः सज्जनाः एवं भद्रमहिलाजनाश्चोपतस्थुः। ..."

१८९६ ई० वत्सरस्य जूनदशमे दिने 'दि लन्दन-डेलि-क्रानिकल'-पत्रिकायां सन्दृश्यते—"स्वामी एकः प्रख्यातो वेदान्तवादी अस्ति। तदाचरणं अनन्यसाधारणं तथा आकृतिश्चित्ताकर्षिकाऽस्ति। तस्य गभीरदार्शनिकतत्त्वानां सरलां व्याख्याप्रणालीं तथा आङ्गलभाषायां प्रभुत्वं च विलोक्य विज्ञायते यत् कुतः अमेरिकावासिन एतावता समादरेण तस्य स्वागतमकुर्वन्। स नाम, यशः, तथा सांसारिक-सुखभोगवासनां चात्यजत्। स कस्यापि धर्मसम्प्रदायस्य अन्तर्गत इति वक्तुं न शक्यते। यतः स्वतन्त्रया विचारधारया स सर्वेभ्यो धर्मेभ्यः यत्किञ्चित् सत्यं जग्राह।"...

स केवलं वेदान्तस्यैव प्रचारं न चकार, अपि तु वेदान्ततत्त्वं येनोपायेन तेषु देशेषु सुप्रतिष्ठं भवितुं शक्नुयात् तदर्थं वलगर्वितायाः पाश्चात्त्यसभ्यतायाः आमूलसंस्कारार्थमपि तस्योद्यमः स्वल्पो नावर्तत। सा सभ्यता मनुष्याणां मनसि सर्वघस्मरां क्षुधं उदबोधयत्। भोग-विलास एव नूनं मानवजीवनस्य मूलमन्त्र आसीदिव। अतृप्ता तृष्णा मानवमनः अशान्तं चकार तथा जगत् ध्वंसाभिमुखं गलहस्तयति।

अस्य प्रतीकारः केवलं वेदान्तवाण्यामेव विद्यते। अतः कारणात् पाश्चात्यजगतो वक्षःस्थले उत्थायैव सोऽभाणीत्—"सावधाना भवत, अहं दिव्येन चक्षुषा वीक्षमाणोऽस्मि। समग्रा पाश्चात्त्यसभ्यता एकस्या ज्वालामुख्या उपरि तिष्ठति। इयं कदाऽप्यग्निमुद्गीर्य पाश्चात्त्यं जगत् भस्मसात्कर्तुं शक्नुयात्। अधुनैव यूयं सावधाना न भवेत तर्हि पञ्चाशद्वर्षान्तराल एव युष्माकं ध्वंसोऽनिवार्यः।"...

स्वामिविवेकानन्दस्य वाणी अक्षरशः सत्या संवृत्ता। गतस्य

महायुद्धद्वयस्य भयंकरे परिणामे तथा तृतीयमहायुद्धस्य विध्वंसकारिणो विराडायोजनस्योपरि चक्षुर्निक्षिप्तं चेत् अस्माकं मनसि महद् भय-मुत्पद्यते। परन्तु मदमत्तानां दर्पितानां मनसि इदानीमपि सुबुद्धिर्नोदेति। विज्ञानस्याविष्कारान् विश्वध्वंसकार्ये अविनियुज्य मानवजातेः सुखस्य सौन्दर्यस्य च वर्धन-कार्ये यदि ते विनियुज्येरन्!··· सम्भवतः नव-सृष्ट्यै तथा अभिनवसंघटनाय इतोऽपि महतो ध्वंसस्य आवश्यकता अस्ति।···

तदानीमेक आङ्गलबन्धुस्तमप्राक्षीत्—"स्वामिन्! एषु अनेकेषु वत्सरेषु पाश्चात्त्याभिजननिवासानन्तरं भारतवर्षं भवते कथं भासेत?" सावेगं स्वामी उत्तरं प्रायच्छत्—"पाश्चात्यदेशागमनात् पूर्वं अहं भारतवर्षं स्निह्यन्नासम्, परन्तु साम्प्रतं भारतीयः पवनः, एतावत्पर्यन्तं भारतस्य प्रत्येकं धूलिकणः मन्निकटे अतीव पवित्रो वर्तते। भारतभूमिः पावनभूमिरस्ति। मदर्थं भारतं परमपवित्रं तीर्थं विद्यते।···"

स्वामी भारतप्रत्यागमन-सम्बन्धे मनः स्थिरीकृत्य मद्रासगतेभ्यः अन्यस्थानस्थितेभ्यश्च शिष्येभ्यः पत्राणि प्राहिणोत्। सेवियर-दम्पती तथा गुडविन-महाशयश्च स्वामिना सह प्रस्थातुं सन्नद्धा बभूवुः। मिस-मूलरमहाभागा एवं मिस-नोवेलाऽपि भारते स्त्रीशिक्षाविस्तारणाय स्वामिनं अनुयास्यतः।

सुहृदः, छात्राः तथा शिष्याः सर्वेऽपि स्वामिवियोगचिन्ताकुला अभूवन्। विशालायां सौप्रास्थानिकसभायां सहस्रशः स्त्रीपुरुषाः उपस्थिता बभूवुः, बहूनां नेत्रेषु अश्रुजलमासीत्। अभिनन्दनपत्रमवाचि। स्वाम्यपि तदुत्तरमयच्छत्। स लन्दननिवासिनां हार्दिकप्रेम्णा मुग्धोऽभूत्।

१८९६ ई० वत्सरस्य दिसंवरमासस्य १६ दिवसे सेवियरदम्पतीभ्यां सार्धं स्वामी लन्दनं मुक्त्वा 'डोवर-कैले-मन्टसेनिस'-मार्गेण इटलीं समा-ययौ। रोमदर्शनं तमभिभूतं चकार। 'कैथोलिक'-जनानां संघटनशक्ति-प्रचारोद्यमाभ्यां तस्य हृदये अनेकेषां विचाराणामुदयो बभूव। तेषामु-

पासनापद्धत्या साकं हिन्दुधर्मानुष्ठानस्य सादृश्यमालक्ष्य स विस्मितोऽभवत्।…रोमतो नेपल्सं ययौ। अत्र गुडविनः समायात्। दिसम्बर-मासस्य ३० तारिकायां नेपल्सतः पोतः प्रातिष्ठत। १८९७ ई० अब्दे जनवरीमासस्य १५ तारिकायां पोतः कोलम्बोनगरं समायास्यति इत्यासीत्।…

पाश्चात्त्यदेशान् पृष्ठतः कृत्वा स्वामी पूर्वाभिमुखं अग्रसरोऽभवत्। पाश्चात्त्य-देशगमनसमये तद्विपरीतता आसीत्। अस्मिन् पर्याये सहचरा अल्पीयांसः। अतस्तस्य गभीरचिन्तायाः पर्याप्त अवकाश आसीत्। स्वामिनः समग्रमन्तःकरणं भारतचिन्तायां न्यमज्जत्। किं स पाश्चात्त्यतः रिक्तहस्तः परावर्तते? नैव, सः अनल्पं सञ्चित्य परावर्तत। सर्वं भारतस्योन्नतिकार्ये विनियुज्यते। प्रतीच्यजनानां संघटनशक्तिः विज्ञानं कर्मपरायणता, अदम्य उत्साहः—सर्वमिदं भारतीयजातिजीवनाय आवश्यकम्। किन्तु कया प्रणाल्या तत् कार्ये संलग्नं भवेत्? इदमेव तस्य चिन्ताविषयमासीत्।

दरिद्रान् स न व्यस्मरत्। अत्रापि तस्य ध्यानं गतं बभूव यत् गणतन्त्रदेशेष्वपि बाह्येष्वाचार-विचारेषु यद्यपि तावदन्तरं न लक्ष्यते, तथाऽपि तेषु देशेष्वपि निपीडितमानवानां संख्या नाल्पीयसी बभूव। अतः तस्य आन्तरिकवेदनानुभूतिः सर्वा अपि सीमारेखा अतिलंघ्य समस्तसंसारस्य दरिद्रान् एवं निपीडितजनान् प्रति प्रवाहिताऽभूत्।… 'संसारस्य शूद्रशक्तिरुद्बोधनीया' अयमेवासीत् तस्य प्रणः।…

डेट्रएट-वासिनः कतिपयशिष्यान् स प्राह—"…यथार्थतः मत्कार्यस्यादरः केवलं भारतवर्ष एव भवितुमर्हति।… ते जानीयुः यदहं कीदृग्विधानि रत्नानि निजशरीराद् रक्तं प्रवाह्य निरन्तरं विकिरन्नस्मि। एतेषां रत्नानां सम्पूर्णः समादरः केवलं तस्मिन्नेव देशे सम्भवी एवं तथैव भविष्यत्यपि। इतोऽपि कानिचन दिनानि प्रतीक्षा क्रियताम्, भारतस्य मूलग्रन्थिरपि विकम्पितो भवेत् तथा तस्य धमनीषु विद्युच्छक्तिः

प्रधाविष्यति। विजयोल्लासात् भारतवासिनः मामुरसि समुद्धरेयुः।"
स भारतवासिनः पर्यचिनोत्। किन्तु स कदाऽपि न विचारितवान्
यत् समस्ता जातिरागमनस्य प्रतीक्षायां तथा साग्रहमासीना-इति। पूज्यं
एवं प्रियं निजविवेकानन्दं वरीतुकामनया तादृशं देशव्यापि कल्पना-
तिगमायोजनम्! इदमपि स्वतः प्रणोदितमासीत्—अत्र राजशक्तेः
पृष्ठपोषकता लेशमात्रमपि नाविद्यत। मार्गेऽनेकानि द्वाराणि प्रस्तुतानि,
गृहाणि विपणिः मन्दिराणि च सुसज्जितान्यभवन्। नगराणि उत्सवमुखरि-
तान्यभूवन्।

१८९७ ई० जनवरीमासे १५ तारिकायां गोधूलिवेलायां यदा स
कोलम्बो-पुरीं प्राप तदा तस्य गैरिकोष्णीषस्य दर्शनमात्रादेव अर्णवपोतघट्टे
सागरगर्जनवत् असंख्यमनुष्याणां हर्षकोलाहलः समुदपतत्। हिन्दुसमा-
जस्य प्रतिनिधी द्वौ सदस्यौ (स्वामिनः सतीर्थ्यनिरञ्जनानन्देन सह)
प्लवमारूढौ तस्य स्वागतमाचरताम्। वाष्पद्रोण्या यदा स तीरं प्रापितः
तदा अगणिताः स्त्री-पुरुषाः तच्चरणयोरलुठन्। स्वामिनः कण्ठदेशे
विजयमालाः परिधापिताः। वेदघोष उपक्रान्तः, माङ्गलिकवाद्यान्य-
वाद्यन्त। पुष्पमाल्यादिभिः सुशोभितया दर्शनीय-ध्वज-छत्र-चामर-
परिवृतया विशालया शोभायात्रया सह स्वामिमहाभागः पादक्रोश-
दूरवर्तिनि 'दारुचीनी'-उद्याने श्वेतवस्त्रमण्डित - विस्तृत - सभामण्डपे
समानीतः। सहस्रशो नरनार्यः जयध्वनिं कुर्वत्यस्तमनुययुः। ब्राह्मणानां
वेदध्वनिः माङ्गलिकवाद्येन सम्मिलितः मधुरसङ्गीतमसृजत्।...

स्वामिनि मञ्चमारूढमात्रे युगपत् कण्ठसहस्रैः जयध्वनिः निर्गन्तुं
प्रवृत्तः। सिंहलवासिनः स्वामिनः प्रथमस्वागतं कर्तुं अवसरं प्राप्य
आत्मानं गौरवान्वितं अमन्यन्त। अभिनन्दनस्य पत्रस्य पाठे सम्पन्ने
स्वामी संक्षेपत इदमाह—"...युष्माभिः कृताभिनन्दनोऽहं अतीवा-
नन्दितोऽस्मि।...नाहं कोऽपि राजा महाराजः धनकुबेरो वा, प्रसिद्ध-
राजनैतिकनेतापि वा नास्मि। अहमेकोऽकिञ्चन - संन्यासी भवामि॥

तथाऽपि यूयं मम सादरामभ्यर्थनां अकुरुत। एतेन प्रतीयते यत् हिन्दु-जातिः अधुनापर्यन्तं निजाध्यात्मिकसम्पदं न हापितवती। एष सम्मानः न मम कृते, अपि तु धर्मस्यायं सम्मानः। तथा यथार्थतः यदि हिन्दुजातिः जीवन्ती स्थास्यति तर्हि धर्ममाश्रित्यैव। धर्म एव तस्या जातीयजीवनस्य मेरुदण्डस्वरूपः अस्ति।"...

अन्येद्युः धनिनां दरिद्राणाञ्च शतशो दर्शनार्थिनां स्त्रीपुरुषाणां सम्मर्दः संजग्मे। सर्वेऽपि भक्त्यर्घ्यं स्वामिचरणयोरार्पितुं प्रववृतिरे। अपराह्णे 'फ्लोरलहाल'-शालायां सहस्रश उत्साहिनां श्रोतॄणां सम्मुखे स्वामी 'पुण्यभूमिः भारतम्' इत्यस्मिन् विषये अस्मिन् देशे प्राथमिकं भाषणं दत्तवान्। धर्मभूमेर्भारतस्य महिमानं संकीर्त्य स ऊचे—"... प्रथमं सर्वेषां हिन्दूनामिव ममापि विश्वास आसीत् यत् भारतं कर्म-भूमिरस्तीति।... अद्याहं एतस्याः सभायाः समक्षं उत्थाय दृढतया सह कथयामि—इदं सत्यमस्ति एवं अतिसत्यमस्ति। यदि पृथिव्यां कोऽपि तादृशो देशः अस्ति यः पुण्यभूमिरिति कथयितुं शक्येत, यदि तादृशं किमपि स्थानं भवेत् यत्र पृथ्वीमात्रस्य सर्वेषां प्राणिनां कर्मफलभोगार्थं समागन्तव्यं भवेत्, यदि तथाविधं किमपि स्थानमस्ति यत्र भगवन्तं प्राप्तुं जीवमात्रेण पर्यन्ते आयातव्यं भवेत्, यदि तादृशः कोऽपि देशोऽस्ति, यत्र मनुष्यजातेरन्तरे सर्वाधिक्येन शौच-क्षमा-धैर्य-दया-प्रभृतिसद्गुणानां विकासः अभवत्, यदि ईदृशः कोऽपि अभिजनः अस्ति यत्र आध्यात्मिकभावस्य तथा अन्तर्दृष्टेः सर्वाधिको विकासोऽभवत्—तर्हि अहं सनिर्धारणं वक्तुं शक्नुयां यत् सा अस्माकं मातृभूमिः—इयं भारतभूमिरेवास्ति।..." तदनन्तरं स 'दुर्बलहिन्दूनां धर्मप्राणता' 'धर्म एव भारतस्य मुख्यं सम्बलं वर्तते, राजनीतिः एवं समाजनीतिर्न' 'आध्यात्मिकप्रकाश एव संसाराय भारतस्य दानम्' 'सनातनस्तथा युगधर्मः' एवं 'सर्वधर्मसमन्वयस्य वाणी' एषु विषयेषु व्याख्यानानि श्रावयामास। कोलम्बो-नगरे स्वामी वेदान्तदर्शने एकमन्यद् भाषणं

प्रादत्त । अनुराधापुरे "सर्वजनीनो धर्मः" इत्यस्मिन् विषये, 'काण्डी-जाफना'-प्रभृतिस्थानेषु स अन्यान्यपि बहूनि उद्दीपनापूर्णानि भाषणान्य-कार्षीत् यैः सर्वेऽपि मुग्धा बभूवुः । तन्मुखनिःसृतवेदवाण्या तु लोकानां हृदयमुद्दीप्तमभवत् । सीलोनस्य विभिन्नस्थानेषु स्वामी दिनदशकमवसत् । सर्वत्र तस्य विशिष्टः संमानः समजनि । जनसाधारणस्य उत्साहः स्वामिनमभिभूतमकरोत् ।*

जनवरीमासस्य २४तारिकायां रजन्यां एकेन देशीयप्लवेन स्वामी दक्षिण-भारतं प्रातिष्ठत । अन्तरं तावत् पञ्चविंशतिक्रोशा एवाभवत् । प्रायेण एतमेव जलभागं हनुमान् सोच्छालं उदलंघयत् । सीलोनस्य विपुलाभ्यर्थनायाः तथा समारोहस्य समाचारः मद्रासे कलिकत्तायां एवं भारतस्य विभिन्न-स्थानेषु विद्युद्वेगवत् तरसा प्रासरत् । सर्वत्रैव जनता उन्मत्ता इव बभूव । अन्यस्मिन् दिने अपराह्णात् प्रागेव प्लवः 'पामवानं' समवाप । स्वामी नैवाजानात् यत् रामनादमहाराजः स्वयमुपातिष्ठत इति, तथा राजकीयं विराट्स्वागतस्यायोजनमजायत इति च ।

प्लवात् स्वामी तीरमानिन्ये । इष्टमित्रैः साकं राजा स्वामिनश्चरणयोः न्यपतत् । तीरे अगणिताः पामवानवासिनः अधीराग्रहेण प्रतीक्षमाणा अवर्तन्त । द्रोण्याः अवतरणानन्तरमेव विपुलभावेन स्वामिनः संवर्धना-ऽभवत् । सुदृश्यस्य विशालपटमण्डपस्याधः स्वामिने यदभिनन्दनपत्रं प्रादीयत तस्य भाषा नितान्तं मर्मस्पर्शिनी आसीत्—"पाश्चात्त्येषु भवतो हिन्दुधर्मप्रचारः विशेषतः फलप्रसूः बभूव । अद्य एतत् निद्राणं भारतं तस्य चिरकालीनाकालनिद्रातः प्रबोधयितुं भवान् सन्नद्धो भवतु ।" अस्यावेदनस्य स्वरः स्वामिनोऽन्तरं प्रभावितं वितेने । स्वामी उत्तरे प्राह—". भारतस्य जातीयजीवनं केवलं धर्म एव प्रतिष्ठितमस्ति

* कोलम्बोनिवासिनः तत्र वेदान्तप्रचारस्य कृते एकं स्थायि केन्द्रं स्थाप-यितुं स्वामिनमन्वरुन्धन् । तदनुसारं स्वामी १८९७ ई० वत्सरे अलमोडायां वसन् निजसतीर्थ्यं शिवानन्दस्वामिनं सीलोने वेदान्तप्रचारार्थं प्रैषयत् ।

राजनीतौ, युद्धविद्यायां, वाणिज्ये, शिल्पसमृद्धौ वा न हि। धर्म एवास्माकं केवलमाश्रयः, तथाऽवलम्बनम् ; एवं जातीयजीवनस्य मेरुदण्डस्वरूपः अस्ति। एष एव धर्मः अस्माभिः संसाराय देयः।…"

सभान्ते स्वामी राजशकटे राजप्रासादं विश्रामाय प्रापितः। राजादेशेन वाजिषु शकटात् मोचितेष्वेव प्रजाभिः सह राजा स्वयं शकटं कर्षितुं प्रावतत। राज्ञो भक्तिं विलोक्य सर्वे लोका अभिभूता अभूवन्। द्वितीयदिवसे स्वामी रामेश्वरमन्दिरं दर्शनार्थं जगाम। शकटे उपमन्दिरं गते एव अगणिता जनाः हस्तिनां, उष्ट्राणां, घोटकानां तथा ध्वजानां संगीतादेः विराट्शोभायात्रया सार्धं स्वामिनः स्वागतमकुर्वन्। स्वामी देवताविग्रहमपूजयत्।

स मन्दिरस्य अपूर्वं कारुशिल्पं स्थापत्यकौशलं तथा सहस्रस्तम्भेषु प्रतिष्ठितं मण्डपमद्राक्षीत्। देवतायाः कृते सञ्चितानि बहुमूल्यानि मणि-माणिक्य-वज्र-रत्नादीनि निरीक्ष्य भारतस्यागणितनिष्किञ्चन-दुःखिनां कृते तस्य हृदयमरोदीत्। पश्चात् जनताया आग्रहविशेषात् "तीर्थमाहात्म्यं तथा उपासना" अस्य सम्बन्धे स्वामी नितान्तसुन्दरं भाषणं वितेने। प्रसङ्गवशात् सोऽवोचत्—"…शिवस्य पूजा केवलं मन्दिरविग्रहस्यार्चनं नास्ति, प्रत्युत दीनदरिद्रेषु तथा आतुरेषु यः जीवरूपः शिवोऽस्ति तस्यैव पूजा अस्ति।…"

स्वामिनो भाषणं राज्ञो हृदयमालोडयत्। स उन्मत्त इव द्वाभ्यां कराभ्यां धनवितरणमकरोत्। सहस्रशो दीन-दुःखिनः आतुरांश्च आकण्ठं अभोजयत् तथा तेभ्यो वस्त्राण्यदात्।

स्वामिनः शुभपदार्पणस्मारणार्थं चत्वारिंशद्धस्तोन्नतं स्तम्भं निर्माय तत्रेदमलेखि—

"सत्यमेव जयते। पाश्चात्त्यदेशेषु वेदान्तप्रचारस्य अश्रुतपूर्वं साफल्यमवाप्य पूज्यपादश्रीश्रीविवेकानन्दस्वामी आङ्गलशिष्यैः सह

भारतभूमेः यस्मिन् स्थले प्रथमं पदार्पणमकरोत्, तत् पवित्रस्थानं चिह्नितुं रामनादाधिपतिभास्करसेतुपतिना एष स्मृतिस्तम्भः निर्मितो बभूव, १८९७ ई० जनवरीमासस्य २७ तारिकायाम्।"

पामबानतः स्वामी रामनादमायात्। सन्ध्या-समय आसीत्। सुनीलनभोमण्डलस्यासंख्यनक्षत्राणि स्वामिनः स्वागतमाचरन्। शतघ्नी-ध्वनिः समुद्भूत्। विचित्रवर्गैः 'स्फुलिङ्गस्फोटैः' (आतिशबाजी) गगन-माच्छन्नमभवत्। राजभ्राता स्वामिनः शकटबद्धवाजिनां रश्मिं जग्राह। राजा स्वयं शोभायात्राया अग्रे स्थित्वा स्वामिनः शकटमनुययौ। शतशः उपस्कृता वर्तिकाः (मशाले) प्राज्वलन्। देशीयेषु तथा विदेशीयेषु दुन्दुभिषु "दृश्यताम्, स आयात् विजयी वीरः" एतत्पद्यं एकस्वर-तानाभ्यां वाद्यते स्म। समन्तात् कण्ठसहस्रात् निरर्गलनिर्गलितजय-ध्वनिभिः जनताकोलाहलैः सह स्वामी राजसौधं प्राविशत्।

राजास्थानसभायां विपुलाभिनन्दनस्यायोजनं बभूव। हृदयावेगेन राजा स्वामिनो भूरिप्रशंसां कृत्वा एकं संक्षिप्तं भाषणं प्रादात्। राज-भ्राता रामनादनिवासिनां अनेकानि साधुवादपूर्णानि मानपत्राणि वाच-यित्वा स्वर्णमंजूषया साकं स्वामिहस्ते समार्पयत्।

तदुत्तरे स्वामी उदात्तकण्ठेन समस्तभारताय जागर्तेराशायाश्च वाणीमश्रावयत्—"...सुदीर्घा रजनी समाप्तप्रायेति भाति। महद् दुःखमन्तं जगाम। महानिद्रायां निद्रितः शव उत्तस्थौ इव। इतिहासस्य वार्ता तिष्ठतु दूरे, किंवदन्त्यपि यस्य सुदूरातीतस्य घनान्धकारं भेत्तुम-समर्था अस्ति ततः स्थानात् एका अपूर्वा वाणी श्रूयत इव। ज्ञानभक्ति-कर्मणां अनन्तहिमालयरूपाया अस्मन्मातृभूमेः भारतस्य प्रत्येकशिखरात् सा वाणी प्रतिध्वनिता सती मृद्व्या परन्तु दृढया तथा अभ्रान्तभाषया कस्याप्यपूर्वराज्यस्य उदन्तं वहन्ती समानयति। यावन्त्येव दिनानि व्यतियन्ति तावदेव सा स्पष्टा तथा गभीरा प्रतीयते। हिमालयस्य प्राग-दायकस्य वायोः स्पर्शः मन्ये मृतशरीरस्य शिथिलप्रायेऽस्थिमांसेऽपि

प्राणान् सञ्चारयति । निद्रितः शव उत्तस्थौ । तस्य जाड्यं विस्रस्यमान-मस्ति । योऽन्धोऽस्ति तेन न दृश्यते । यस्य मस्तिष्कं दूषितं वर्तते स बोद्धुं न पारयति यत् अस्माकं मातृभूमिः गभीरनिद्रां मुक्त्वा जाग्रती अस्ति । अस्मिन्नवसरे तस्या गतिरोधं कर्तुं न कोऽपि समर्थः । इयं पुनर्निद्रायामाच्छन्ना न भवेत् । एनां कोऽपि बाह्या शक्तिः दमयित्वा रक्षितुं न समर्था । कुम्भकर्णनिद्रा त्रुट्यन्ती दृश्यते ।..."

पश्चात् सोऽब्रवीत्—"धर्म एव भारतस्य मेरुदण्डः अस्ति, राजनीतिः अन्यद् वा न किमपि ।..." अस्मिन् समये भारतस्य कृते जडवाद-स्याप्यावश्यकता वर्तते । साहसावलम्बनं कर्तुं निर्देशं कुर्वन् स आह— "जगति यदि किमपि पापमस्ति चेत् दौर्बल्यमेव तत् पापम् । सर्वविधां दुर्बलतां परित्यजत—दुर्बलतैव मृत्युः, दुर्बलतैव पापमस्ति ।"

एतदनन्तरं स दृढतावलम्बनस्यावेदनां प्राबोधयत् तथा भाविनो भारतस्य संघटनं लक्ष्यीकुर्वन्नुवाच—"भ्रातरः ! अस्माभिः सर्वैः कठोरः परिश्रमः क्रियेत । अधुना शयनस्य नास्ति समयः तद् दृश्यताम् भारतमाता शनैः शनैः निजनयनकमलं समुन्मीलयन्ती दृश्यते । ... उत्तिष्ठत तथा नूतनाभ्यां जागरणोत्साहाभ्यां पूर्वापेक्षया महागौरवेण मण्डयित्वा भक्त्या सह तां अनन्तसिंहासने प्रतिष्ठितां कुरुत । "

स्वामिनः सा देव-वाणी अशेषं भारतं आन्दोलयन्ती समस्तदेश-वासिनां हृदये तडित्स्पर्शवत् कार्यकरी बभूव । भारतवासिनां आत्मशक्तेः पार्श्वे, मनुष्यान्तः यद् ब्रह्म निद्राणमस्ति—तन्निकटमियं वाणी दुर्जया-वेदनरूपेण संप्राप । मृतमनुष्येष्वपि प्राणानां स्पन्दनं संवृत्तम् । रामनाद-मारभ्य समग्रे भारते स्वामी नवजागरणस्य तथा महाशक्तेः वाणीं श्रावयामास—"उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत ।" एवं सर्वेषां कर्णयोः स 'अभीः' मन्त्रं ददौ ।

पण्डितजवाहरलालः निजे 'भारताविष्कार'-ग्रन्थे वर्तमानभारताय स्वामिनो दानस्य सम्बन्धे तदीयां वाणीमुद्धरन् अनेकविषयान् आलो-

चितवान्—"मनुष्याणामन्तरे ईश्वरस्य दर्शनमेव यथार्थमीश्वरदर्शनम्। सर्वेषां मानव एव श्रेष्ठः अस्ति। जातीयसमस्यानां समाधानमान्तर्जातिकदृष्ट्यैव करणं सम्भवं वर्तते" इत्यादि। स्वामिनः अभयवाणीसम्बन्धे स जगाद—"···तस्य भाषणे एवं रचनान्तराले एकः स्वरः सदा ध्वनितो जायते सोऽस्त्यभयम्, अर्थात् 'अभयो भव' 'वीरो भव' 'दुर्बलतां मुञ्च'। ·· मनुष्यं कदाऽपि स शोचनीयं पापिनं नाचष्ट। प्रत्येकमनुष्यस्यान्तरे दैव-शक्तिः विराजते। मनुष्यः कुतो बिभीयात्? संसारे यदि किमपि पापमस्ति तर्हि दुर्बलता एव तत् पापमस्ति। दुर्बलतां जहीहि—उपनिषदो महती शिक्षा इयमेवासीत्। भयादेवामङ्गलस्य तथा दुर्बलताया जन्म भवति। स्वामी कथयामास—"वर्तमाने तादृशबलिष्ठानामावश्यकताऽस्ति, येषां पेश्यः लौहवद् दृढाः तथा स्नायवः अयोवत् कठिनाः, एवं येषां प्रचण्डा इच्छाशक्तिः ब्रह्माण्डस्य गूढतमं रहस्यं भेत्तुं समर्थाऽस्ति।" स दुर्बलकारकस्य 'गुह्यतत्त्वस्य' निन्दामकरोत्। "···धर्मस्येयमेव परीक्षा अस्ति। यत् किमपि तावकीनां शारीरिकीं मानसिकीं अथवा आध्यात्मिकीं दुर्बलतां प्रापयेत् तत् विषवत् परित्याज्यम्।"··· श्रीनेहरूः स्वामिनो भाषणेभ्यः पत्रेभ्यश्च ईदृशं विपुलमंशं निजे तस्मिन् ग्रन्थे उद्धृतवान्—एवमालिखत्।

* * *

कुम्भकोणे दिनत्रयमवस्थाय स्वामी मद्रनगरं प्रातिष्ठत। प्रत्येके वाष्पयानविश्रामालये दर्शनार्थिनामगणितमनुष्याणां सम्मर्द आसीत्। येषु शकटविश्रामस्थानेषु यानस्यावस्थानं नासीत्; तत्रापि सहस्रशो मनुष्याः त्यक्तजीविताशाः लौहमार्गे शयित्वा शकटं रुरुधुः। ते जना भारतगौरवस्य महापुरुषस्य दर्शनं काङ्क्षन्त आसन्। स्वामिनः मुखात् द्वित्रवाणीश्रवणस्य वाञ्छां दधति स्म। स्वामी समेषामिच्छायाः पूर्तिं तन्वन्ननवर्तत। सर्वेभ्यो दर्शनं प्रादात्। तथा द्वौ करौ प्रसार्य सर्वेभ्य आशिषोऽयच्छत्।

मद्रासनगरं तदर्थमधीराग्रहेण प्रतीक्षमाणमास्त। नगरस्य विभिन्न-स्थानेषु सप्तदश विजयतोरणा निर्मिता आसन्। गृहाणि द्वाराणि च कदलीस्तम्भैः तथा पुष्पमालाभिः सज्जितानि बभूवुः। भवनानां मठानां तथा मन्दिराणामुपरि विजयवैजयन्त्य उड्डीयन्ते स्म। समस्तं नगरं उत्सवोन्मत्तं बभूव। स्थाने स्थाने विविधवर्णैः स्थूलस्थूलाक्षरैरालिखि-तम्—"पूज्यविवेकानन्दो दीर्घायुरस्तु, हे भगवत्सेवक! हे अतीतस्य ऋषे स्वामिन् विवेकानन्द! भवतः स्वागतमस्ति। भवान् नवजाग्रद्-भारतस्य सादरां संवर्धनां स्वीकरोतु। भो शान्तेरग्रदूत श्रीरामकृष्णयोग्य-शिष्य! पुरुषसिंह विजयिन् वीर! आयाहि—" इत्यादि।

फरवरी ६ प्रातःकाले जाते एव वृन्दशो जनाः पुष्पमाला एवं ध्वजानादाय वाष्पयानविश्रामालयाभिमुखं प्राचलन्। मद्रासस्य विशिष्टाः पुरुषाः विश्ववरेण्यस्य संन्यासिनः स्वागतं कर्तुं समवेताः। वाष्पयाने यथास्थानमागत्य स्थित एव कण्ठसहस्राद् निर्गतेन जयध्वनिना एवं आनन्दकोलाहलेन च आकाशं गुंजितमभूत्। स्वागतसमितिसदस्याः स्वामिनं पुष्पमालाभिरभूषयन्। दर्शकजन-चक्रव्यूहं कथमपि विभिद्य स्वामी निकटस्थशकटमानीतः। शकटे स्वामिनः पार्श्वे द्वौ निजसतीर्थ्यौ शिवानन्दनिरंजनानन्दौ उपाविशताम्। युवकाः शकटस्य घोटकान् विमोच्य जयध्वनिघोषाभ्यन्तरतः स्वामिनः शकटं कर्षन्तः समुद्रतीर-वर्तिनीं 'कासूल कारनान'-नामिकां प्रासादोपमामट्टालिकां समानयन्। स्वामिशिरसि पुष्पवृष्टिः पतितुं प्रावर्तत। असंख्याः स्त्रीपुरुषाः नारि-केळानि तथा अन्यान्यनेकानि फलानि समानीय स्वामिचरणयो-रारोपयन्। स्थाने स्थाने महिलाः कर्पूरं दीपञ्च संज्वाल्य आरार्तिकं पर्यवतारयन्। तासां श्रद्धां तथा हार्दिकतां विलोक्य स्वामी विह्वलतां गतः। सार्धनववादनावसरे शकटे "कासूल कारनान" इत्यत्र समायाते "मद्रासविद्वन्मनोरंजिनी"-सभाधिकारिणः स्वामिनं अभिनन्दन्तः एकं संस्कृतमानपत्रमार्पयन्।···

अपरेद्युः भानुवासरे स्वागतसमितिं प्रतिनिदधानाः सदस्याः स्वामिने मानपत्रमुपाहरन्। तदनन्तरं आङ्गलभाषायां संस्कृतवाण्यां तथा तामिलादिभाषासु निबद्धानि षड्विंशतिर्मानपत्राणि उपायनीकृतानि।* महान् जनस्तोमः समियाय। जनानुरोधात् स्वामी बहिरागत्य स्वागतस्योत्तरं दातुं एकस्य शकटस्य अनावृतवितर्दिकोपरि उत्तस्थौ, किन्तु परितोवर्तिनां जनताव्यूहानां कोलाहले भाषणदानं सम्भवं नाभूत्। तस्मात् स संक्षेपेण श्रोतृभ्यो धन्यवादान् दत्वा तेषामाकुलोत्साहे आनन्दं प्रकटयन् प्राह—"दृश्यताम्, अग्निर्मा निर्वातो भूत्।"†

द्वितीयस्मिन्नहनि स्वामी 'विक्टोरिया हॉल' इत्यत्र महत्या जनतायाः सम्मुखे 'मदीया समरनीतिः' इत्यस्मिन् विषये प्रसिद्धां वक्तृतां ददौ। स सङ्घटननीतिं व्याचख्यौ। धर्म एव जातीयजीवनस्य मेरुदण्डोऽस्ति। अत्र सर्वेषां दृष्टिम् आकृष्टां कृत्वा दानधर्मस्य व्याख्यां कुर्वन् विद्यादानस्यैव प्रशस्यतरत्वं तथा सर्वदानाभ्यर्हिततरत्वञ्च प्रत्यपादयत्। एतदग्रेऽप्य-

---

* तेषु मानपत्रेषु खेतडीमहाराजस्य मानपत्रमप्यासीत्। इङ्गलन्डतः अमेरिकातोऽपि मानपत्राण्याययुः। तेषु अमेरिकायाः विलियमजेम्सस्य तथा हार्वर्ड-विश्वविद्यालयप्राध्यापकहस्ताक्षराङ्कितं मानपत्रमप्यासीत्। डेट्रएटतोऽपि द्विचत्वारिंशद्विशिष्टविदुषां हस्ताक्षरयुक्तं मानपत्रमप्यवर्तत। 'ब्रूकलिन एथीकल एसोसियेशन'-समितिः—महान्तं आर्यपरिवारस्य भारतीयभ्रातॄन् प्रति हार्दं स्नेहं विज्ञापयन्ती एकं मानपत्रं प्रेषितवती। सीलोनात् मद्रासं यावत् या विपुला अभ्यर्थना समजनि तत्प्रतिध्वनिः वायुमण्डले तरङ्गायितः हिमालयस्य प्रत्यन्तं यावत् समस्ते भारते आवर्तनमसृजत्।

† "Strike The iron while it is hot"—(सन्ततमयो घ्नत) स्वामी अस्य नीतिवाक्यस्याशयं सम्यग् जानाति स्म। तस्मात् कारणात् स समस्ते भारते उत्साहस्याग्निं प्राज्वलयत्—एवं तप्ते लौहे आघातं चकार। अस्याघातस्य प्रतिध्वनिः भारतस्य समस्तेषु प्रान्तेषु परिव्याप्नोत्।

वोचत्—"दुर्बलतैव पापमस्ति। उपनिषदः बलप्रदशिक्षाया अवलम्बेनैव जातीयजीवनस्य उन्नतिः सम्भवा भवति। उपनिषद् उपदेशोऽस्ति—'मनुष्य उत्तिष्ठ, जागृहि, वीर्यमवलम्बस्व'। संसारसाहित्ये 'अभीः'-मन्त्रस्योपदेशः उपनिषद्येव उच्चारितः।...उपनिषदि कथिता तेजस्वितैव अस्मज्जीवने अधुना विशेषरूपेण परिणमनीया..." स्वामिनो वाणी विपुलया विस्फोटसंभावनया पूर्णा आसीत्। श्रोतॄणां हृदये आवर्तस्य सृष्टिरभवत्—अग्निः संदिदीपे।

स्वामी नवदिनपर्यन्तं मद्रासमध्यवसत्। तस्मिन् समये स अभिनन्दनानां उत्तराणि प्रददौ तथा पञ्च भाषणान्यपि अकरोत्—'मदीया समरनीतिः' 'भारतीयजीवने वेदान्तस्य प्रयोगः' 'भारतस्य महापुरुषाः' 'अस्माकं वर्तमानं कर्तव्यम्' तथा 'भारतस्य भविष्यम्'। सागरतीरे यस्मिन् भवने स्वामी न्यवसत् तत् सदा दर्शनार्थिभिः पूर्णमतिष्ठत्। तं दृष्ट्वैव जनाः साष्टाङ्गं प्राणमन् एवं बहुभिर्विधाभिः आन्तरिकीं श्रद्धां न्यवेदयन्। तद् दृश्यं नितान्तं मर्मस्पर्शि बभूव तथा तेन स्वामी अतिमात्रमेव अभिभूत आसीत्। यद्यपि स्वामी पृथिव्याः तिसृणां श्रेष्ठजातीनां महोच्चसम्मानस्य अधिकारी बभूव तथाऽपि स तं सम्मानं महता विनयेन प्रतिजग्राह। एकस्य मानपत्रस्योत्तरे स्वामिना प्रोक्तम्—'अभिनन्दनपत्रे यानि सुन्दराणि विशेषणानि प्रयुक्तानि तेषां कृते अहं कथं हृदयस्य कृतज्ञतां प्रकटीकुर्याम्? न जाने। अहं प्रार्थये यत् प्रभुः मां तादृशप्रशंसार्हं विदधातु तथाऽहं यावज्जीवनं स्वधर्मस्य एवं मातृभूमेः सेवां कर्तुं शक्नुयाम्।..."

स्वामिन ओजस्विभाषणं भारतवासिनां जीवने विप्लवं जनयामास।*

---

* कोलम्बोतः अलमोडापर्यन्तं तथा भारतस्यान्यस्थानेष्वपि स्वामी यानि भाषणानि व्यतरत् तेषां स्वल्पीयसोऽप्यंशस्य अस्मिन् ग्रन्थे समावेशनं सम्भवं नाभूत्। तानि भाषणानि 'श्रीरामकृष्णमिशन-नागपुरतः' प्रकाशिते स्वामि-

जातीयतावादस्य निर्भीकं जागरणं सङ्कटनस्यान्तः नवीनं रूपमग्रहीत्। यद्यपि राजनीत्या सह तस्य कोऽपि सम्पर्को नाभूत् तथापि स्वामिनो वाणीकेन्द्रादेव तद् जातीयं जागरणं सक्रियमुदभवत्। भारतीयजातीयान्दोलनस्य समकालिकीनां एवं पारिपार्श्विकीनां घटनानां विश्लेषणेन ज्ञायते यत् ऊनविंश्याः शताब्द्या अन्तिमेंऽशे स्वामिविवेकानन्दस्य समुद्बोधकवाण्या भारतस्य जातीय-सामाजिकजीवनयोः गतिहीनस्थितौ प्रचण्ड आघातः अक्रियत। तदाविर्भावस्य तथा तद्वाणीप्रचारस्य च समयादेव जातीयजागरण-गणाभ्युत्थानयोः प्रचेष्टायां एका नूतना प्रेरणा संलक्ष्यते। सा प्रेरणा देशवासिसाधारणमनुष्यानपि निजाभीष्टसम्बन्धे प्रोद्बुद्धानकरोत्। मानवान्तःसुप्तं भगवन्तमपि सा जागरयामास। प्रभावशालिभिः स्वल्पैर्जनैरवहेलितानां तथा अपमानितानां जनसाधारणानामन्तरेव स भविष्यद् भारतं ददर्श।* अत एव स्वामी तानेव साधारणान् जनान् निज-निजभूमिकां ग्रहीतुं समाह्वयत्।… —"नवीनं भारतं निर्गच्छेत् वणिजामापणात्, भर्जकस्य भ्राष्ट्रनिकटात्, यन्त्रालयात्, हट्टाद् अथवा विपणेः अथवा गुल्म-कानन-पर्वतेभ्यः।"

---

विवेकानन्दवक्तृताग्रन्थे द्रष्टव्यानि। तेषु भाषणेषु तस्याग्निमयवाण्याः स्पर्शः प्राप्यते।

* जनशिक्षाया एवं गणोन्नतेरुपर्येव जातेर्भाग्यं पूर्णतया निर्भरमवतिष्ठते। भारतस्य उपेक्षितानां कृषकाणां तन्तुवायानां कर्मकराणां अस्पृश्यनिम्नश्रेण्या जनानामुन्नतेरुपर्येव स्वामी विशेषगुरुत्वस्यारोपमकरोत्। तस्य वाणीरचनावल्योरन्तरे वयमस्मिन् सम्बन्धे बहून् विषयान् लभामहे। तेन प्रोक्तं— "साधु स्मरत ! सर्वेष्वपि देशेषु एत एव जातेर्मेरुदण्डाः सन्ति।…वेदान्तस्य जन्मभूमौ भारतवर्षे जनसाधारणः चिराय सम्मोहित इव तिष्ठति। तेषां स्पर्शः अपवित्रः तथा सङ्गः अशुचिः विद्यते।… युरोपस्यानेकदेशेषु पर्यटनसमये दरिद्रजनानां सुख-स्वच्छन्दतां तथा शिक्षा-दीक्षां वीक्ष्य भारतस्यासहायानां

स्वामिन आह्वानस्य ते जना उत्तरं ददुः। जना निर्गत्य सदर्प-भंग्यामवतस्थिरे। १९०५ ई० वत्सरे वंगविभाजनस्य प्रतिवादे यदान्दोलनमुत्पन्नं बभूव, तत् केवलं शिक्षितेषु तथा सम्पन्नसम्प्रदाय एव सीमाबद्धं नासीत्। वंगालग्रामवासिनः साधारणजना अपि तस्मिन्नान्दोलने न केवलं सम्मिलिता बभूवुः, अपि तु तस्मिन्नान्दोलने प्रकृष्टभूमिकां स्वीचक्रुः।...

गांधी महोदयः स्वतन्त्रतासंग्रामे साधारणमनुष्यान् मुक्ति-सेना-भटरूपेण यदलभत तदपि स्वामिविवेकानन्दस्य वाणीप्रभावेणैव। देशस्य मुक्तेः अर्थः—दरिद्रजानां मुक्तिः अस्ति - इदं तत्त्वं यदि विवेकानन्दप्रवर्तितभावधारायां प्रचारितं नाभविष्यत् गांधिनो गणान्दोलनं साफल्यमण्डितमभविष्यत् न वा अत्र सन्देहोऽस्ति। स्वामी विवेकानन्द एवासीत् भारतीयस्वतन्त्रता-संग्रामस्य प्रथमसेनापतिः। स यस्याः मुक्तिसेनायाः संघटनस्य सूत्रपातमकरोत्, तस्या आत्मत्याग-रुधिरविनिमयेनैव भारतं स्वातन्त्र्यमाप्तुमशक्नत्। तेन या 'उत्तिष्ठत-

---

निष्किञ्चनानां अवस्था मम स्मृतिपथमायात् तथा अहं अक्षिभ्यां अश्रु स्रावयन्नासम्। अस्य पार्थक्यस्य कारणं गवेषयता मयाऽवगतम्—गणशिक्षायां अभाव एव अस्या विषमताया मूलमस्ति।

जनसाधारणस्य दुर्गतिमालोक्य मम हृदयमियद् भाराक्रान्तमभवत् यत् अन्तरस्य तां वेदनां भाषया व्यक्तीकर्तुं न पारयामि।... स्मर्यताम् दरिद्राणां कुटीरेष्वेव भारतीयजातेः निवासः अस्ति। किन्तु हन्त! तेषां कृते केनापि किमपि नाकारि। अस्माकं वर्तमानाः समाजसुधारकाः विधवाविवाहविषय एव व्यस्ताः सन्ति। सर्वविधसुधारेण सह मम सहानुभूतिरस्ति सत्यम्। परन्त्विदमपि तथ्यमेव यत् विधवानां पतिप्राप्तेः संख्याया उपरि जातेर्भाग्यं न निर्भरम्। निर्भरमस्ति जनसाधारणस्यावस्थाया उपरि। तानुन्नेतुमर्हथ? अस्माकं जन-साधारणाः सांसारिकविषयेषु नितान्तमनभिज्ञाः। परन्तु ते सन्ति सज्जनाः। यतः अस्मिन् देशे दारिद्र्येण सह दुर्जनतायाः कोऽपि सम्पर्को नास्ति।..."

जाग्रत'-रूपा जागर्त्तेर्वाणी श्राविता। तस्या उत्तरं लक्षशो जना ददुः। तस्यैव फलस्वरूपेण विंशशताब्द्याः सूचनायां वंगे तथा समग्रे भारते जातीयमान्दोलनं नवीनां परिवृत्तिं जग्राह, आवेदनस्य निर्जीवपथात् अपसृत्य तीव्रनिर्भीकजातीयताबोधात् तथा नूतनसंघटनान्तरात्।···

* * *

मद्रासनिवाससमये स्वामिनं विभिन्नस्थानेभ्योऽनेकान्यामन्त्रण-पत्राण्याययुः। खेतडीमहाराजात्, पूनातः लोकमान्यतिलकात्, विभिन्न-स्थानेभ्यः एवं विशिष्टव्यक्तिभ्योऽपि स्वामिने पत्राणि प्रेषितानि। किन्तु विशेषेच्छासत्त्वेऽपि तत्र तत्र तस्य गमनं सम्भवं नाभूत्। आकोलम्बो-स्थानात् मद्रासनगरीं यावत् अविरतभाषणैः आलोचनाभिः तथा अनेकलोकैः सह समागमेन एवं वार्तालापेन च स इयदधिकं क्लान्तो जातः यत् तस्य विश्रामस्यावश्यकता समापतत्। अनेन कारणेन स स्थलपथेन न गत्वा विश्रामार्थं जलपथेन फरवरीमासस्य १५ तारिकायां प्रातःकाले कलिकात्तां गन्तुं प्रातिष्ठत। मद्रास-निवासिनः तत्र स्थायि केन्द्रं संस्थापयितुं तमन्वरुन्धन्। तदुत्तरे स्वामी प्रावोचत्—"नाधुनैव, इतोऽग्रे अहं युष्माकं निकटे एकं तादृशं गुरुभ्रातरं प्रेषयिष्यामि यः युष्माकं नैष्ठिक-ब्राह्मणेभ्योऽपि नैष्ठिकतरः एवं पूजाशास्त्रज्ञान-ध्यान-धारणादिषु अतुलनीयः अस्ति।"*

वाष्पप्लवघट्टे अनेके मनुष्याः समवेयुः। मद्रासस्य 'आर्यवैश्य-समाजः' तथा राजमहेन्द्री-जनसाधारणाश्च स्वामिने द्वे अभिनन्दनपत्रे प्रददिरे।···

---

* १८९७ ई० मार्चमासस्यान्तिमभागे स्वामिविवेकानन्दः स्वसतीर्थ्यं स्वामिरामकृष्णानन्दं तथा निजसंन्यासिशिष्यसदानन्दं प्रचारार्थं मद्रासनगरं प्रेषयामास।

—:*:—

समस्तो वंगदेशः, विशेषतः कलिकात्तानिवासिनः साग्रहोत्कण्ठया स्वामिनः शुभागमनस्य प्रतीक्षां कुर्वन्त आसन्। नागरिकाणां अभ्यर्थना-समितिः सङ्घटिता बभूव। स्वागतस्य विपुलमायोजनमासीत्। २० फरवरीदिने खिदिरपुरे वाष्पप्लवादवतीर्य स्वामी अद्राक्षीत् यत् तदर्थं एकं विशिष्टं वाष्पयानं तं प्रतीक्षते। प्रभाते सार्धसप्तवादने वाष्पयाने स्यालदहं प्राप्ते सहस्र-कण्ठोत्थित-जयनादेन विश्रामालयः समगुञ्जत्। शिष्यैः सह स्वामी शकटादवतीर्य करौ मुकुलीकृत्य सर्वेभ्यः प्रत्यभिवादनं समसूसुचत्। स्वागत-समितेः सदस्याः पुष्पमालाभिः स्वामिनं विभूषितमकुर्वन्। कीर्तनकाराः उच्चसंगीतद्वारा चतस्रोऽपि दिशः प्रतिध्वनिताश्चक्रुः। विंशतिसहस्रकण्ठेभ्यः युगपत् गगनभेदी जयध्वनिर्निरियाय। महता क्लेशेन जनताव्यूहं विभिद्य पाश्चात्त्यशिष्यैः साकं स्वामी बद्धाश्वचतुष्टये शकटे उपवेशितः। उत्साहिनो युवानः शकटादश्वानुन्मुच्य स्वामिनः शकटं संकृष्यानयन्। सुसज्जितमार्गस्य द्वयोः पार्श्वयोः अनेके स्त्री-पुरुषाः विचित्रवर्णान् ध्वजान् करे गृहीत्वा जयशब्दमुदीरयामासुः। सुशोभितद्वारत्रयस्यान्तर्गत्वा शकटः रिपन्-कालेज-सम्मुखे उपतस्थौ।…

तदनन्तरं रायपशुपतिनाथबसुबहादुरस्य बागवाजार-भवने गुरु-भ्रातृभिः समं मध्याह्नभोजनं निर्वर्त्य तृतीये प्रहरे स्वामी आलम-बाजार-मठमयासीत्। बराहनगरात् मठः १८९२ ई० वर्षे तत्राजगाम। पाश्चात्त्यशिष्याणां निवासप्रबन्धः काशीपुरे गोपाललालशीलस्य उद्यानभवने आसीत्।

समस्तो वङ्गदेशः, कलिकत्तानिवासिनः तथा गुरुभ्रातरः स्वामिनं वव्रिरे। परन्तु तस्य क्षणमात्रोऽप्यवकाशो नासीत् । स निरन्तरं स्वात्मानं वितरितुं प्राक्रमत। शतशो मनुष्याः तत्सन्दर्शनार्थमाजग्मुः। अनेकस्थानेभ्यो निमन्त्रणपत्राण्यपि समागतानि। स सङ्घटनात्मककार्ये सत्वरं मनः प्रावर्तयत्। विभिन्नस्थानेषु केन्द्रस्थापनम्, सेवाकार्यम्, शिक्षाप्रवर्त्तनम्, कार्यकर्तॄणां संग्रहणम् एवमादीनि तत्कार्यान्तर्गतान्यभूवन्। विराड्-योजना तद्धृदये साकारतां प्रापद्यत। समस्तं भारतं तस्य प्रबोध्यमवर्तत तथा समृद्धं समुन्नतं बलवच्च विधेयम्। गणोन्नति-जातिभेददूरीकरण-नारीकल्याण-सांस्कृतिकजीवनपरिपुष्टिप्रभृति - संघटनमूला योजनास्तच्चिन्ताविषया अभूवन्।

प्रतिदिवसमनेके विशिष्टनागरिकास्तन्मिलनार्थं समागमन्। तैः सह तेषां विषयाणामालोचना अजायन्त। स बभाषे—"मम कार्यं भवेत् विद्युदिव क्षिप्रं वज्रमिव दृढञ्च।" तस्य समयो न्यून आसीत्, कार्यमसीममवर्तत। अस्मात् कारणात् स यदा कदा अधीरोऽजायत।

फरवरीमासस्य २८तारिकायां कलिकात्तानागरिकाः स्वामिनोऽभिनन्दनमकुर्वन्। शोभाबाजारगते राजराधाकान्तदेवस्य प्रासादविस्तृताङ्गणे समाहूतायां सभायां नगरस्य प्रथिता व्यक्तयः एवं छात्रसमाजाः संभूय पञ्चसहस्रस्त्रीपुरुषाः समवेता अभूवन्। सभायामुपस्थित एव स्वामिनि सभापतिः राजा विनयकृष्णदेवः तस्मै स्वागतं निवेदयन् प्राह— "भारतस्य जातीयजीवने एष पुरुषसिंहः अतुलनीयां कीर्तिमस्थापयत्। लक्षेषु कदाचित् एतादृशः एकः असाधारणो महापुरुषः सन्दृश्यते।" तदनन्तरं सः अभिनन्दनपत्रं वाचयित्वा एकस्यां रजतमंजूषायां तत् निधाय स्वामिनो हस्ते प्रदत्तवान्। स्वामी उत्थाय जन्मभूमेः वन्दनामकरोत्। "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इत्यभिधाय प्रणामं कुर्वन् कलिकात्तानिवासिनः सम्बोधयन् अभाषत "...अद्याहं युष्माकं पुरः संन्यासिरूपेण नास्मि उपस्थितः, नापि

धर्मप्रचारकरूपेण, अपितु पूर्वं कलिकात्तावासिबालकरूपेण युष्माभिः सह वार्तालापं कर्तुं सन्निहितोऽस्मि। भ्रातरः! तथा इच्छा जायते अस्यां महानगर्यां राजपथस्य धूलिमुपविश्य बालवत् सरलभावेन हृदयमुद्घाट्य युष्माकं सम्मुखे सर्वं वृत्तं कथयामि" इति। तदनन्तरं निजगुरौ श्रीरामकृष्णदेवे श्रद्धां भक्तिञ्चार्पयन् बभाषे—"...यद्यहं मनःकायवाक्यैः किमपि शुभकार्यमकार्षम्, यदि मन्मुखात् तादृशं किमपि वचनं निरगच्छत्, येन संसारस्य कस्यापि पुरुषस्य कोऽप्युपकारो बभूव, तर्हि तत्र मम किमपि गौरवं नास्ति, सर्वं गुरुत्वं तस्यैव। किन्तु यदि मदीया रसना कदाचिदपि अभिशापवाक्यं अवर्षत्, यदि मन्मुखात् कदापि कमप्युद्दिश्य घृणासूचकं वाक्यं निरियाय, तर्हि तदर्थं अहमेव प्रतिभूरस्मि। न तु सः। यत्किमपि दुर्बलं तथा सदोषं तत्सर्वमेव मदीयमस्ति। यत्किमपि जीवनप्रदं बलदायकं एवं पवित्रमस्ति सर्वं तस्य शक्तेः क्रीडा, तस्य वाणी तथा स स्वयमस्ति। सुहृदः! याथातथ्येनैव अद्यावधि तेन पुरुषश्रेष्ठेन जगत् परिचितं नाभूत्।..."

सर्वान्ते स उपनिषदः नाम्ना शक्तेः स्तुतिं गायन् कलिकात्तानिवासियुवकान् प्राह—"उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत—उत्तिष्ठत जाग्रत, यतः शुभो मुहूर्त उपस्थितः।...युष्माभिः कथितम्—'अहं किमपि कार्यमकरवम्' इति। यद्येवमेव तदिदमपि स्मरत, यत् अहमपि कस्मिन्नपि समये अत्र एकस्तुच्छो बालक एवासम्। यदि मद्द्वारा एतावद् कर्तुमपारिं चेत् यूयमितोऽप्यधिकं कार्यं कर्तुं प्रभवथ। उत्तिष्ठत, जाग्रत, संसारो युष्मानाह्वयति।...अहन्तु साम्प्रतमपि किमपि कर्तुं नाशकम्। युष्माभिरेव सर्वं कर्तव्यम्। यदि श्वो मे मृत्युर्भविष्यति तदा सहैव कार्यस्य विलोपो न भविष्यति। ममायं द्रढीयान् विश्वासः अस्ति यत् जनसाधारणात् सहस्रशो लोका इदं व्रतं ग्रहीष्यन्ति तथा अस्य कार्यस्य इयती उन्नतिः विस्तारो वा

भविष्यति यत् तस्य कदापि कल्पनायामप्याशा नाकारि। देशस्योपरि मम पूर्णो विश्वासोऽस्ति, विशेषतः देशस्य तरुणानामुपरि।…"

स्वामी देशस्य युवकेभ्यः अधिकमाशास्ते स्म। स तेषां मातृभूमेः कृते महाबलेः प्रार्थनां वितेने। देशयुवकाः स्वामिन आह्वानस्य उत्तरं प्रायच्छन्। ये जनाः तस्मिन् दिने सार्थं नोपतस्थुः, स्वामिनो वाणीं तेषां हृदयान्यपि आलोडयत् एवं अनागतार्थमपि स निजावेदनममुञ्चत्। तत् शाश्वतवाण्या अमोघं स्पन्दनं स्वदेशप्रेमिमात्रं प्रोद्बुद्धं चकार। भारतीया युवकाः स्वामिवाण्याः यथोचितां मर्यादां व्यतन्वन्, तस्याह्वानस्य यथोचितं उत्तरं दत्त्वा वाणीं अर्थवतीमकुर्वन्, तस्यां सम्मानं प्रादर्शयन् तथा भविष्यत्यपि प्रदर्शयिष्यन्ति।…

रवीन्द्रनाथोऽलिखत्—"आधुनिके समये भारतवर्षे स्वामी विवेकानन्द एव एकस्या महत्या वाण्याः प्रचारमाचरत्। स कस्मिन्नप्याचारेऽन्तर्भूतो न वर्तते। स देशस्य प्रत्येकजनमामन्त्र्यावोचत्—"युष्माकं सर्वेषामन्तः ब्रह्म-शक्तिः विद्यते। दरिद्रेषु निवासी देवः त्वदीयां सेवामर्थयते।" अयं विषयः तरुणानां चित्तानि जागरयामास। अस्या वाण्याः फलं अद्यत्वे देशसेवायां विचित्रभावेन विचित्रत्यागेन च फलितं सम्पद्यते। तस्य वाणी यथा मनुष्यस्य सम्मानमातनोत् तथैव शक्तिमपि आदधात्।…देशस्य युवानः यं दुःसाहसिकाध्यवसायस्य परिचयं अददत, तस्य मूले अस्ति विवेकानन्दस्य सा वाणी।…"
( रामकृष्णमिशन - शिक्षण - मन्दिर, - बेलुडमठ - द्वारा प्रकाशित- 'संदीपन' संख्या २, १९६१ ई० )।

स्वामिविवेकानन्दस्य देहत्यागात्परं कतिपयवर्षाभ्यन्तरे एव बंगाले तथा समस्ते भारते निर्भीकं जातीयमान्दोलनं यस्मिन् रूपे पर्यणमत्, यत्कारणात् भारतमद्य स्वतन्त्रं सवृत्तं, एवं स्वतन्त्रतासंग्रामे देशस्य युवकाः येन प्रकारेण उत्कृष्टां भूमिकां जगृहुः तस्योत्तेजनापि स्वामिवाण्या एवाययौ।…

नेता सुभाषचन्द्रवसुः निजचरिते अलिखत्—"...स्वामी विवेकानन्दः यदा मम जीवने प्रविष्टोऽभूत्, तस्मिन् समये मदीयं वयः पञ्चदशवर्षेभ्योऽपि न्यूनमभूत्। ततः परं ममान्तरे प्रचण्डो विप्लव आयात् तथा सर्वमस्तव्यस्तमभूत्।...तस्य वीरताव्यञ्जिकायाः प्रतिकृत्याः तथा शक्तिपूर्णवाण्या माध्यमेन च स्वामी मदभिमुखं पूर्ण-विकसितादर्शव्यक्तिरूपेण आविरभूत् एवं स यस्य पथः निर्देशं चकार तस्य सम्बन्ध एवाहं गभीरचिन्तायां न्यमज्जम्।...मदस्थिमज्जान्तरं यावत् एकस्या अभिनवायाः जागर्त्तेः सृष्टिः बभूव।...दिनानुदिनम्, सप्ताहानुसप्ताहम्, मासानुमासम् अहं एकाग्रचित्तेन तद्वाणीं तथा तद्र-चनावलीं पठितुं उपाक्रमम्। तस्य पत्रावल्यां तथा कोलम्बोत अल-मोडापर्यन्तं प्रदत्तायां व्याख्यानमालायां देशवासिभ्य एतावान् अधिकः कार्यकर उपदेशोऽस्ति यो मद्धृदयं विपुलभावेनानुप्राणितुमारेभे।"

* * *

कोलम्बोतो मद्रासपर्यन्तं तथा ततः परं कलिकात्तायां देशवासिनां पक्षतः स्वामिने यद् राजोचितं अभिनन्दनं प्रादायि ततः स विशेषतः संकोचान्वितः तथा क्लान्तश्च समपद्यत। अस्माद् विजयाभियानात् तथा भाषणादितः आत्मानं मोचयित्वा स संघटनमूलके कार्ये धृत-व्रतोऽभवत्। अत एव संदृश्यते यत् कतिपयदिवसानन्तरं कलिकात्तायां 'स्टारथियेटर'-स्थाने "सर्वावयववेदान्त"-नाम्ना एकं भाषणं दत्त्वा स व्याख्यान-पर्व समाप्तमकरोत्।

अनेके सतीर्थ्याः तत्पार्श्वमेत्य समुपतस्थिरे। १८९७ ई० वर्षस्य मार्चमासान्ते स्वामिविवेकानन्दः रामकृष्णानन्दं मद्रास-नगरे वेदान्त-प्रचारार्थं प्रेषयामास। सः मद्रनगरे स्थायि केन्द्रं संस्थाप्य नगरस्य विभिन्नेषु भागेषु क्रमशः सप्ताहे १०।१२ कक्षाः कृत्वा भाषणं प्रददौ। अनेनैव क्रमेण स्वल्पदिवसाभ्यन्तरे समस्ते दक्षिणभारते अनेकाः

समितीः प्रतिष्ठिता विधाय स वेदान्तप्रचारं तथा सेवाकार्यं प्रावर्तयत्।

स्वामिनः सेवाभावेनानुप्राणितो भूत्वा तत्सतीर्थ्यः स्वामी अखण्डानन्दः मुर्शिदाबादमण्डले दुर्भिक्षपीडितलोकानां सेवाया-मात्मनियोगमकार्षीत्। स्वामिविवेकानन्दोऽपि तस्यार्तनारायणसेवा-कार्ये धनानि एवं सेवकांश्च सम्प्रेष्य साहाय्यमाचरत्। स्वामी अखण्डा-नन्दः शतशः क्षुधितानां मुखे अन्नग्रासं प्रादात् तथा दुर्भिक्षात् अनेक-मनुष्याणां जीवनरक्षां कृतवान्, परित्यक्तशिशूनां संग्रहं कृत्वा महुला-स्थाने एकमनाथाश्रमं संस्थापयामास। जातिवर्णविचारं विहाय तेषां शिशूनां पालन-पोषणं विधाय तेभ्यः शिक्षां प्रदाय तेषु मनुष्यता-धानकार्ये जीवनं उत्ससर्ज। स जीवनस्यान्तिमदिनपर्यन्तं तत् जन-कल्याणसाधनमेव श्रेष्ठव्रतरूपेण अग्रहीत्।

तस्मिन्नेव ( १८९७ ई० ) वर्षे स्वामी त्रिगुणातीतानन्दः दिनाजपुरे एकं दुर्भिक्षसेवाकेन्द्रं स्थापयित्वा समन्ततोऽनेकग्रामेषु दुर्भिक्ष-पीडितानां सहायतामकार्षीत्। पश्चादन्यस्थानेषु तेन विविधानि सेवा-कार्याणि प्रवर्तितानि। तस्यैव हायनस्य मध्ये सतीर्थ्यः स्वामी शिवा-नन्दः वेदान्तप्रचारार्थं सिलोनं प्रेषितः। स्वामिसारदानन्दाभेदानन्दौ अमेरिकायां सफलतया सह वेदान्तप्रचारकार्यमन्वतिष्ठताम्। जन-सेवाकार्यं भारते तथा बाह्येषु देशेषु विविधप्रकारैः प्रससार। परन्तु एतद् यन्त्रं अञ्जसा चालयितुं स्वामिनः प्रचुरशक्तेः क्षयो-ऽभवत्। तस्य स्वास्थ्यावस्थां निरीक्ष्य तत्सतीर्थ्याश्चिन्तिता बभूवुः। तेषां सम्मुखे स्वामिविवेकानन्दः श्रीरामकृष्णदेवस्य प्रतिनिधिः तथा तेनैव निर्वाचितो नेता बभूव। स्वामिनोऽन्तरे शक्तिसंक्रमणद्वारैव श्रीरामकृष्णदेवः स्वयुगचक्रं प्रवर्तयामास।....

स्वामी हिमाचले तथा गङ्गातीरस्य कस्मिन्नपि प्रशस्ते स्थाने भाविनो मठस्य प्रतिष्ठापने तथा रामकृष्णमिशन-प्रतिष्ठानस्य संघटने

नितान्तं व्यस्त आसीत्। किन्तु सतीर्थ्यानां अनुरोधमपि सः नोपैक्षत। ब्रह्मानन्दप्रभृतीन् सतीर्थ्यान्, पाश्चात्त्यान् तथा मद्रास-निवासिनः शिष्यांश्चादाय स दार्जीलिङ्गशैलावासे कतिचन दिनान्यवस्थातुं तत्रायासीत्।

पर्वतस्य वायुजलयोः एवं निर्जने परिवेशे आगत्य स्वामी नितांतं मुमुदे। परन्तु या विश्रान्तिः तत्स्वास्थ्योद्धारार्थं विशेषतया अपेक्षिताऽऽसीत् तां स नाप्तवान्। भूयसीनां योजनानां साकारतासम्पादने स सुतरां व्यस्तो बभूव।

खेतडीराजेन मिलितुं तेन स्वल्पदिनार्थं कलिकात्तायामागन्तव्यमापतितम्। राज्ञा सह आलमबाजार-मठे पाश्चात्त्यदेशेषु प्रचार-कार्यसञ्चालनस्याऽऽलोचना भूयसी समपद्यत। विशेषतः तं स्वात्मना सह इङ्गलन्डं नेतुमेव राजा तत्राऽऽययौ। परन्तु भारतीयकार्य-दायित्वं विचिन्त्य स्वामिनस्तत् सम्भवं नाभवत्।

स्वामी पुनर्दार्जीलिंगं प्रत्यावर्वृते। किंतु तस्मान्मनसे याश्चिताः समुत्थिता अभूवन् तासां कार्यरूपेण परिणमनमन्तरा स पर्वतेऽपि व्याकुलतामन्वभवत्। पर्वतादवतीर्य आलमबाजारमठे संघटनकार्ये स्वामी धृतव्रतोऽभूत्। अत्र सः चतुरो ब्रह्मचारिणः संन्यास-धर्मे दीक्षितान् विदधे। मठवासिनामाध्यात्मिकजीवनसंघटनमपि तस्य विशिष्टं महच्चैकं कार्यमवर्तत।

पाश्चात्त्यानां संहति-शक्तिः तं मुग्धमातनोत्। संहतिमन्तरेण किमपि स्थायि बृहत् कार्यं सम्भवं न भवति। अतः स संन्यासिनो भक्तगृहस्थांश्चादाय संघरचनाय व्यवस्थामकार्षीत्। १८९७ ई० वत्सरस्य मईमासस्य प्रथमो दिवसः विशेषतया स्मरणीयः। स्वामिन आह्वानेन बागबाजारस्थिते बलरामबसुभवने आश्रमिकास्तथा गृहस्थ-भक्ताश्च जना एकत्र समवेयुः। स्वामी सर्वानुद्दिश्य संघटनस्यावश्यकतां बोधयन्नाह—"सुनियंत्रितं प्रतिष्ठानं विना किमपि बृहत् कार्यं

न सम्पत्स्यते। वयं यन्नाम्ना संन्यासिनः स्मः, यूयं यं जीवनादर्शं मत्वा गृहस्थाश्रमे निवसथ, देहावसानात् द्वादशवत्सरांतः प्राच्येषु तथा प्रतीच्येषु च देशेषु यस्य पवित्रनाम्नः एवमलौकिकजीवनस्य असम्भावनीयो विस्तारः समभूत् एष संघः अथवा प्रतिष्ठानं तस्यैवं श्रीरामकृष्णस्य नाम्ना प्रतिष्ठितं भवेत्। वयं प्रभोर्दासाः स्मः। यूयमस्मिन् कार्ये सहायका भवत!"

सर्वसम्मत्या स्वामिनः प्रस्तावः पारितोऽभूत् तथा भविष्यत्-कार्यप्रणाली-विधि-विधानानां विशदालोचनानंतरं प्रतिष्ठानस्य उद्देश्यानि तथा कर्मप्रणाली च अनेन प्रकारेण निर्धारिता अभूवन्—

१—एष संघः 'रामकृष्णमिशन'-नाम्ना परिचितः स्यात्।

२—अस्योद्देश्यानि रामकृष्णदेवः मनुष्यजातेः कल्याणार्थं निजजीवने यस्य सत्यस्य प्रचारं तथा अनुष्ठानमातनोत् तस्य प्रचारकरणं एवं सर्वसाधारणस्य ऐहलौलिकपारलौकिककल्याणस्य कृते तेषां तत्त्वानां कार्यरूपेण परिणमने सर्वेषां सहायतादानम्।

३—संघस्योद्देश्यं तथाऽऽदर्शः जनतायाः सेवा, तथा आत्मिकं कल्याणसाधनम्। राजनीत्या साकमस्य संघस्य कोऽपि सम्पर्को न वर्तते।

अनेनैव क्रमेण विविधा कार्यपद्धतिः तथा नियमाः संघटिता बभूवुः। सर्वसम्मत्या स्वामी विवेकानन्दः साधारणसभापतिः निर्वाचितः। स्वामिब्रह्मानंदयोगानंदौ कलिकत्ताकेन्द्रस्य सभापत्युपसभापती अभूताम्। अनेनैव प्रकारेण तस्मिन् दिने स 'रामकृष्णमिशनं' संस्थाप्य संघं 'बहुजनहिताय' सक्रियं व्यधात्।

स्वामी विवेकानन्दः जातिवर्णभेदं अविधाय मानवजातेः कल्याणार्थं रामकृष्णमठ-मिशनरूपं यद् संघयुग्मं संघटयामास, तस्मिन् मानवसेवायाः प्राधान्यं यद्यपि सुस्पष्टमासीत्, तथाऽप्यस्य आदर्शः तथा कर्मधाराश्च भारतस्य एवं बाह्यदेशानाञ्च अनेकजनसेवाप्रतिष्ठा-

नानां आदर्शकर्मधाराभ्यां सर्वात्मना स्वतन्त्रा बभूवुः। 'शिवज्ञानेन जीवसेवा' अयमेवास्य प्रतिष्ठानस्य मूलमंत्रः अस्ति। जीवं शिवं मत्वा तस्य पूजैव मुख्यं साधनमस्ति। श्रीरामकृष्णस्य विशालहृदये यद् विश्वप्रेम प्रतिभासितमभूत् तस्यैव विश्वप्रेम्णः एवं एकमानवताया अनुभूतेः जनसेवामाध्यमेन उद्‌बोधनाय स्वामी विवेकानन्दः जातेऽन्तरे व्यावहारिके क्षेत्रे एनं संघमघटयत्। विभिन्नधर्मेषु सौभ्रात्रस्थापनमप्यस्य अन्यतममुद्देश्यमासीत्। चरमादर्शवादपक्षतः 'रामकृष्णमठ-मिशन'-संस्थे जनसेवाक्षेत्रे एकं विशिष्टस्थानमधिचक्रतुः, तथा संसारस्य सेवाव्रतिनां पुरः विश्वमानवताया एकं नूतनं क्षितिजं उद्घाटितं विद्यते।

एतयोः संघयोः सेवाव्रतिनां सम्मुखे—"आत्मनो मोक्षार्थं जगद्धिताय च" इति आदर्शयुगलं स्थापितमस्ति। जीवमात्रे भगवतोऽभिव्यक्तिं निर्धार्य तस्य जीवमात्रस्य सेवाकरणेन भगवतः पूजा भवति। अनया विधया नर-नारायणसेवाद्वारा चित्तशुद्धि-पद्धत्या आत्मानुभूतिर्जायते। वस्तुतः नारायणं विज्ञाय रुग्णानां दुःखिनां तथा मूर्खाणां सेवया आत्मोपलब्धिः जगत्कल्याणञ्च साधिते भवतः। शास्त्रेषु कलियुगार्थं दानधर्ममहिमा वर्णितः—'दानमेकं कलौ युगे' स तं दानधर्मं चित्तशुद्धेरुपायरूपेण सेवाधर्मे रूपान्तरितमकरोत्। दानं चतुर्विधमस्ति—धर्मदानम् विद्यादानम् प्राणदानमन्नदानं चेति। धर्मप्रार्थिने धर्मोपदेश-दानं, विद्याहीनाय विद्यादानम्, रुग्णानां मुमूर्षूणां औषध-पथ्याभ्यां सेवया च जीवनदान-सम्पादनं प्राणदानमभिधीयते। तथा क्षुधातुरेभ्योऽन्नदानं—इदं चतुर्विधं दानमपि भगवत्सेवा-बुद्ध्या करणीयं भवेत्। भगवद्-बुद्ध्या ईदृशी सेवा पूजाया नामान्तरमस्ति।

उपनिषद उपदेशोऽस्ति—"पितृदेवो भव, मातृदेवो भव।" युगधर्मप्रवर्तकः स्वामी विवेकानन्दः उपनिषद्वाक्येन सह—'दरिद्रदेवो

भव' 'मूर्खदेवो भव' इदमपि संलगयामास। दानसमये दातुर्मनसि योऽहंकारः तथा उच्चनीचबोधः अवतिष्ठते तस्य स्थाने दाता सेवकः एवं ग्रहीता तस्मिन् समये भगवानस्ति—एवं सेव्यसेवकभावस्य मनस्यानयनेन प्रत्येकमनुष्यं देवतासने उपवेश्य स्वात्मानमर्चकं विदधीत। स्वामिप्रवर्तिते अस्मिन् सेवाधर्मे वैयक्तिके, पारिवारिके, धार्मिके, सामाजिके, राष्ट्रिये तथा आन्तर्जातिके जीवने च सुदूरप्रसारिणः फलस्य विपुला सम्भावना अस्ति।

स्वामिविवेकानन्दः नरनारायणसेवायै १८९७ ई० वर्षे यस्य रामकृष्णमिशनस्य स्थापनां चकार, सा संस्था १८९९ ई० अब्दे वेलुडस्य विस्तृतभूमौ स्थानान्तरितेन 'बहरानगरश्रीरामकृष्णमठेन' सह संबद्धा वेलुड़मठस्य संन्यासिभिः सञ्चालिता एकनायक-प्रतिष्ठान-युगलरूपेण शनैः शनैः विस्तारमवाप। वेलुड़मठस्य प्रधानामात्यद्वारा १९६२ ई० वर्षस्य मईमासे प्रकाशितायां १९६०–१९६१ वर्षस्य कार्यविवरण्यां सन्दृश्यते यत् अधुना भारते तथा भारतेतरदेशेषु च रामकृष्णमठ-मिशनयोः १३८ स्थायीनि केन्द्राणि तथा २२ उपकेन्द्राणि च सन्ति। उपकेन्द्राण्यपि रामकृष्णसंघसंन्यासिद्वारा परिचाल्यन्ते।

तेषु केन्द्रेषु तस्मिन् वत्सरे चिकित्साविभागे द्वादशरुग्णालयानामन्तर्विभागेषु २७,८१६ रोगिणां चिकित्सा समजनि। एवं ६८ औषधालयेषु ३७,०२,९६६ रोगिभ्यो भैषज्यं प्रादीयत। शिक्षाविभागे १७६ केन्द्रेषु ४३,४०२ छात्रास्तथा १८,१२९ महिलाछात्राश्च भारतवर्ष-पाकिस्तान-सिंहल-सिंगापुर-फिजी-मारीशसद्वीपेषु शिक्षामलभन्त।

एतदतिरिक्तं ग्रामोन्नयनस्य, नारीकल्याणस्य एवं श्रमिकानुन्नत-श्रेणीक-लोकानां व्यापकरूपेण सेवाकार्यमकारि। ग्रंथप्रकाशनविभागात् आङ्गलभाषायां भारतीयप्रधानभाषाष्टके श्रीरामकृष्णभावधारायाः तथा

भारतीयसंस्कृतेः प्रचारार्थम् अनेके ग्रंथाः प्रकाशिता अभवन् । पाश्चात्य-देशेषु विशेषरूपेण भाषण-कक्षा-आलोचना-ग्रन्थप्रकाशनानां माध्यमेन धर्मसंस्कृत्योः प्रचारस्य कार्यं कृतम् । एवं रीत्या विवेकानन्दः मानवजातेः कल्याणार्थं यत् रामकृष्णमठ-मिशनयन्त्रं समचालयत् तत् अग्रगतेः पथि निर्जगाम । स्वामी अकथयत्—"इदं यन्त्रं कोऽपि रोद्धुं न शक्नुयात् ।"

—*o*—

रामकृष्णमिशनप्रतिष्ठायाः कतिपयदिवसानन्तरं १८९७ ई० वर्षस्य मईमासस्य ६ तारिकायां स्वामी चिकित्सकानां परामर्शेन कतिचित् सतीर्थ्यान् समादाय नैनीतालमार्गेण अलमोडां गन्तुं विवशोऽभूत्। सेवियरदम्पती मिसमूलरप्रभृतिपाश्चात्त्यशिष्याश्च पूर्वमेवालमोडां जग्मुः। अलमोडानिवासिनः महता समारोहेण सम्मानेन सह स्वामिनः स्वागतमाचरन्। तदुत्तरे स तपोभूमेर्हिमालयस्य महिमानं कीर्तयन् तत्रैकस्य मठस्य स्थापनेच्छां प्राकटयत्।

हिमालयमुपेत्य स्वामी भृशं प्रसन्नोऽजायत। तस्मिन् विविक्ते स्थाने निवसन् स निजभाविकर्मपद्धतेः साकारताधानविषये विचारं कर्तुं प्रवृत्तः। यदान्दोलनं स प्राचालयत् तदुन्नतिपथं नेतुं तदीयशक्तेः पर्याप्तोऽपचयः समजायत। तेन प्रोक्तम्—"एक एव चिन्ताग्निः मन्मस्तिष्के ज्वलति। सोऽस्ति भारतस्य जनसाधारणस्य उन्नतिसाधनं तथा तदर्थं यद् यन्त्रं अहं अचालयम् तस्य कियान् अंशो मया सम्पादितः ? इति।···बालका यया रीत्या दुर्भिक्षे सेवाकार्यं प्रवर्तयन्ति दुःखिनां तथा निर्धनानां कार्यं कथं कुर्वन्ति तद् विलोक्य मन आनन्दसंभृतं जायते। ते प्राणानां ममत्वं विमुच्य अस्पृश्यानां विपूचिकाग्रस्तानामपि रोगिणां शय्यायामासित्वा तत्सेवां कुर्वन्ति। बुभुक्षितदरिद्राणां, एतावदवधि चण्डालानां मुखेऽप्यन्नं ददति···।" इयं दरिद्रनारायणस्य सेवैव विराट्पुरुषस्य पूजा वर्तते।

स्वामी अमेरिकातः भारतं परावृत्य तत्र पादनिक्षेपसमय एव भारतवासिनः विशेषतो युवकान् मातृभूमेः सेवायां जीवनस्य उत्सर्गं

कर्तुं समाह्वयत्—"आगामिपञ्चाशद्वत्सरपर्यन्तं सा परमजननी मातृभूमिरेव युष्माकमाराध्यदेवता भवतु।···प्रथमपूजा विराजः पूजा ···युष्माकं पुरः, युष्मान् परितः ये जनाः सन्ति तेषामेव पूजा कर्तव्या। सेवा न, पूजा। एते मनुष्याः—एते पशवः—इमे एव युष्माकमीश्वरा:ऽस्त। एवं युष्माकं स्वदेशवासिन एव प्रधाना उपास्याः सन्ति।"

रामकृष्णमठं तथा मिशनं यन्त्रं विधाय स्वामी तस्य विराजः पूजां प्रावर्तयत्।

* * *

अलमोडायां स्वामी प्रायेण सार्धमासद्वयमवसत्। तस्य प्रधानकार्यमासीत् प्राश्चात्त्यदेशारब्धानां कार्याणां विस्तारणे सहायताप्रदानम्। किन्तु स अलमोडात्यागात्पूर्वं यद् भाषणद्वयं ददौ तेन सर्वेऽपि मुग्धा अभूवन्। स्थानीयाधिवासिनां विशेषाग्रहेण जिलास्कूले स हिन्दीभाषायां यद् भाषणमकरोत् तस्य विषय आसीत्—"वेदस्योपदेशः—तात्त्विकस्तथा व्यावहारिकः" स्वामी एतावतीं रुचिरां हिन्दीं जानातीति कस्यापि न ज्ञातमासीत्। इंग्लिश-संघे (क्लबे) आंगलाधिवासिनां कृते आंगलभाषायां स यद् व्याख्यानं ददौ तस्य सभायां "गोरखा-रेजिमेंट-कर्नल" पुलिः सभापतिरासीत्। तस्य व्याख्यानस्य विषय आसीत् "उपजातीयदेवता तथा आत्मतत्त्वम्" व्याख्यानाकर्णनसमये सर्वेषां चित्तानि एकस्यामुच्चभावभूमौ प्रतिष्ठितान्यासन्।

अगस्तमासे ८ तारिकायामअलमोडां विहाय स्वामी पंजाब-काश्मीरयोः प्रवासे निरगच्छत्। बरेली-अम्बाला-अमृतसर-रावलपिण्डीस्तथा मारीं गच्छन् श्रीनगरं प्रापत्। कश्मीरे स राजातिथिरासीत्। सर्वत्र स भूरिप्रकारैः सम्मानितो बभूव। बहुषु स्थलेषु तेन भाषणानि देया-

न्यासन्। भाषणानि प्रायेण हिन्दीभाषानिबद्धान्यभूवन्। तेषु भाषणेषु स भारतस्योद्धारविषयमेव व्यावृणोत्। गुरुगोविन्दसिंहे गम्भीरां श्रद्धां निवेदयन् सोऽभाषत—"··· यदि यूयं देशस्य हितं वाञ्छथ, तर्हि प्रत्येकः गोविन्दसिंहो भवेत्।·· तस्यान्तरे यद् हिन्दु-रक्तमवर्तत तत्र ध्यानं दत्त।" सर्वानपि साम्प्रदायिक-संकीर्णतायाः स्वात्मानं मोचयितुं स आहूतवान्। मानवात्मन महिमकीर्तनम्, स्पृश्यास्पृश्यता-परिहारं तथा नारीशिक्षाया आवश्यकताञ्च सर्वेषां पुरः स उपस्थापयामास। जातिभेदः, खाद्याखाद्य-विचारः एवं पुण्य-भूमेर्महिमापि आलोच्या विषया आसन्। स स्वान्तस्थं अग्निस्पर्शं सर्वेभ्यो व्यतरत्। आर्यसमाजिकैः साकमपि तस्यानेका आलोचना बभूवुः।··

श्रीनगरात् स पुनः मारीमाययौ। तत्र स्वामिनः अभिनन्दनमा-चरितम्। तदुत्तरे सोऽपि हृदयस्पर्शि भाषणं प्रायच्छत्। तद्दर्शनार्थं महान् जनस्तोमः संकलितो बभूव। मारीतो रावलपिण्डीं पर्येत्य कश्मीरमहाराजस्य आमन्त्रणविशेषात् स्वामी जम्बूमुपाययौ। कश्मीर-महाराजः स्वामिसंदर्शनमवाप्य सुतरामेव श्रद्धान्वितोऽभूत्, एवं प्रधानमन्त्रिणा तथा उच्चराजकर्मचारिभिः सह स्वामिनः धर्मप्रसंगं निशम्य इयदाधिक्येन मुग्धो बभूव, यद् दश-द्वादशदिवसपर्यन्तं तत्रावस्थाय प्रतिद्वितीयदिवसं भाषणमेकं दातुं स्वामिनमन्वरुन्धत्। स्वामी जम्बू-नगरे भूयांसि भाषणानि प्रादत्त। जम्बूतः परं स्याल-कोटमयासीत्। तत्र द्वे भाषणे अश्रावयत्। अलमोडात्यागानन्तरं अद्य यावत् प्रायः मासत्रयं धर्मचर्चां, भाषणं, प्रवचनं तथा आलोच-नादिकं प्रवर्त्य स लवपुरं ( लाहौरं ) समाययौ। स्वामिनः आगमनेन तत्र हर्षकलकलः परिव्याप। लालाहंसराजप्रभृतयः आर्यसमाजनेतारः विशेषसमारोहेण साकं स्वामिनः स्वागतमातेनुः। एकादश दिनानि स लाहौरमध्युवास। अन्वहं तेन व्याख्यानैरभूयत। आर्यसमाजे सिख-

सम्प्रदाये तथाऽन्यप्रतिष्ठानेषु योगदान-वार्तालापालोचनादिकं समजायत। स 'हिन्दुधर्मस्य साधारणभित्तिः' 'वेदान्तः' तथा 'भक्तिः' एषां सम्बन्धे त्रीणि सारगर्भाणि व्याख्यानानि प्रदाय सर्वश्रेणीनां श्रोतृषु विस्मयमुदपादयत्। व्याख्यानश्रवणार्थं इयन्तोऽधिका जना एकत्र संकलिता अभूवन् यत् नियन्त्रणं दुष्करं समपद्यत।

सिखानां एकस्यां शुद्धिसभायां सम्मिलितो भूत्वा तेषामुदारभावं विभाव्य स्वामिनः महान् प्रमोदोऽभूत्। ये सिखाः कारणविशेषात् परधर्मं प्रविश्य पश्चात्तापं विधाय पुनः स्वधर्मं परावर्तितुमभ्यलषन् तेषामेव कृते तादृश्याः शुद्धेः व्यवस्था अवर्तत।

लाहौरे प्राध्यापकस्तीर्थरामगोस्वामी (यः पश्चात् स्वामी रामतीर्थ इति नाम्ना प्रथितोऽभूत्) स्वामिनि विशेषरूपेणाकृष्टो बभूव। स्वामिसंपर्क तस्य जीवने एको महान् शुभो मुहूर्त आसीत्। स स्वामिनं शिष्यैः साकं स्वगृहे भोक्तुं आमन्त्रयत। भोजनान्ते स्वामी गातुं प्रावृत्तः—"यत्र रामस्तत्र कामो नास्ति, यत्र कामः तत्र न रामः।" गानस्य मर्मवाणी तीर्थरामस्यान्तरे वारं वारमाघातं कर्तुं प्रावर्तत। स निजं काञ्चनघटीयन्त्रं उपहाररूपेण स्वामिने प्रादात्। स्वामी तत् जग्राह—परं समकालमेव तत् तीर्थरामस्य कञ्चुककोशे न्यक्षिपत्। अवदच्च—"समीचीनं मित्र! अत्रैवाहं तद् यन्त्रं इतः परं व्यवहरामि।"

स्वामिसम्पर्के समागतस्य तीर्थरामस्यान्तरे सुप्तं वैराग्यं समुद्दिदीपे। "क्षणमपि सज्जनसङ्गतिरेका भवति भवार्णवतरणे नौका" इदं आप्तवाक्यं सार्थकं बभूव। स्वल्पैरेव दिवसैः सः वैतनिकत्वं विहाय संन्यासं जग्राह।... धर्मप्रचारार्थं अमेरिकामपि ययौ।' अनेकधर्मग्रंथरचनामपि चकार सः। उत्तरे भारते तस्य महान् शिष्यसम्प्रदायः वर्तते।

* * *

अस्य व्याख्यानस्य संचारे स्वामिनः शरीरं सविशेषं अस्वस्थं संवृत्तम्। स नूनं नैपुण्येन सर्वं कार्यं चालयति स्म। लाहौरे,

देहरादूने, सहरानपुरे, दिल्ल्यां, अलवरे, जयपुरे तथा खेतडीराज्ये पुनर्जयपुरे एवमजमेरे तथा खण्डवादिस्थानेषु पर्यटन् स १८९८ ई० जानवरीमासमध्ये भग्नं स्वास्थ्यमादाय कलिकत्तां परावर्तत। समग्रगुजराते तथा बम्बई-प्रान्ते पुनः पुनरामन्त्रणेऽपि शरीरास्वास्थ्यात् तेषु स्थानेषु गन्तुं नाशकत्।...

प्रायेण मासपञ्चकं यावत् स्वामी उत्तरभारतस्य विभिन्नस्थानेषु भ्रमणमकार्षीत्। सर्वत्र तेन भाषणानि देयान्यभवन्, आधिक्येन हिन्दी-भाषायाम्। लघुलिपिकैः असंरक्षितत्वात् अनेकानि भाषणान्यलुप्यन्। धर्मालोचना, कथोपकथनम्, एवं प्रश्नोत्तरक्रमोऽपि तस्य प्रचाराङ्गान्यासन्। अनेनैव क्रमेण शिक्षितानां उच्चपदस्थानां तथा जनसाधारणादि-सर्वश्रेणीकानां अन्तःस्पर्शं कर्तुं तेनावसराः प्राप्ताः। एतस्य फलमपि व्यापकमभूत्। स निजामृतमयभावधारया सहस्रशो जनानां हृदयानि अस्नापयत्।

स्वामिनः कार्यं मानवात्मानमादाय प्रवृत्तम्, न तु राष्ट्राणि। मनुष्येषु भगवान् नूनं श्रृङ्खलया सन्दानित इव। तन्मोचनचेष्टामेव स सर्वत्र चकार। स्वामिनो वाणी देवत्वस्य वाणी अभूत्। तेनाभिहितम् —"स्वयं देवता सम्पद्यस्व, तथा अन्येषां देवत्वेनोन्नतौ सहायतां प्रदेहि।" पुनः स एव स्वरः नरनारायणयोः सेवाया आह्वानमध्येऽपि झंकृतः बभूव। समस्ता जगद्वासिनः स्वामिविवेकानन्दं येन भावेनागृह्णन् अस्य प्रमाणं तेषां स्वप्रणोदित-विवेकानन्दशताब्द्या जयन्त्युत्सव-सन्नाहमाध्यमेन प्राप्यते। आङ्ग्लभाषातिरिक्तासु बङ्गला-उरिया-हिन्दी-मराठी-गुजराती-तामिल-तेलगू-मलयालम्-प्रभृतिषु भारतस्य प्रायः सर्वासु प्रधानभाषासु स्वामिनः सर्वासां वाणीनां रचनावलीनां च प्रकाशनं सम्पद्यमानमस्ति। केवलं बंगलाभाषायामेव पञ्चविंशति-सहस्र-ग्रन्थकदम्बकेषु (प्रतिग्रंथकदम्बकं दश ग्रंथाः) सार्धलक्षद्वय-ग्रंथाः प्रकाश्यन्ते।

स्वामिनो भावेनानुप्राणितानां देशीयानां तथा विदेशीयानां च विभिन्नश्रेणीकानां स्त्रीपुरुषाणां पृष्ठपोषकत्वे एका शक्तिशालिनी 'शताब्दी-जयन्ती-समितिः' संघटिता वर्तते। प्राच्य-प्रतीच्यदेशेषु श्रीरामकृष्णसंघद्वारा परिचालित-केन्द्रेषु तथा अनेकास्थायिकेन्द्रेषु केवलं विविधकार्यसूचीनां माध्यमेन एकवत्सरपर्यन्तं 'शताब्दीजयन्त्युत्सवः' अनुष्ठास्यते इत्येव न, प्रत्युत भारतस्य परस्सहस्रेषु ग्रामेषु नगरेषु तथा विभिन्नस्कूलकालेज-विश्वविद्यालयादिषु अनुष्ठास्यमान एष जयन्त्युत्सवः जातीयोत्सवरूपेण परिणतो भविष्यति।

'विवेकानन्दशतवार्षिकोत्सवस्य' प्रस्तुतेः समाचारः उद्बोधन-पत्रिकाया वंगाब्दे १३६८ माघसंख्यायां एष एवाशयः प्रकाशितोऽभूत् (जनवरी १९६२ ई० तो जनवरी १९६४ ई० पर्यन्तम्)।

"१९६३ ई० वत्सरस्य जनवरीमासे यदा वेलुडमठे विवेकानन्द-शतवार्षिकोत्सवस्योद्बोधनं भविष्यति; ततः स्वामिविवेकानन्दस्य ग्रामोन्नयनचरित्रघटन-यथार्थमनुष्यघटन-विषयिण्यो वाण्यः केन्द्रीय-मन्त्रिसभायाः समाजोन्नयनविभागस्य (Union Ministry of Community Development) उद्योगेन भारतस्य सार्धपंचलक्ष-ग्राम-निवासिषु विना मूल्यं वितरणार्थं मुद्रिता भवेयुः।

केन्द्रीयमन्त्रिसभायाः सूचना-प्रचारकार्यालय (Union Ministry of Information and Broadcasting) द्वारा स्वामिनो जीवनमवलम्ब्य एकं प्रामाणिकं चलचित्रं प्रस्तोष्यते। केन्द्रीयशिक्षा-सचिवः (Secretary, Education Ministry) श्रीकृपालः 'शिक्षाप्रसंग में विवेकानन्द'-नामकस्य एकस्य पुस्तकस्य विभिन्नभाषासु विनामूल्यं वितरणार्थं स्वीकृतिं प्रादात्। केन्द्रीयसमाजोन्नयन-समितेः सभानेत्री (Chairman, Central Welfare Board) श्रीमती 'दुर्गाबाई-देशमुखाभिधाना' सप्तदशभारतीयभाषासु स्वामिविवेका-नन्दलिखित-'भारत की नारी'-पुस्तकप्रकाशनस्य अभ्युपगमं कृतवती।

१९६३ ई० वर्षे सा स्वामिनः सम्बन्धे एकां विशेषसंख्यां ( Special-Number ) प्रकाशितां कर्तुं वचनं ददौ।

विभिन्नविश्वविद्यालय-प्रतिष्ठान-समिति-प्रभृतीनां सहयोगेन भारते बहिर्भारतञ्च स्वामिनः शिक्षायास्तथा भावादर्शस्य प्रचारोद्देश्येन व्याख्यान-आलोचना-सभानां प्रबन्धः क्रियमाणोऽस्ति।

वेलुडमठे श्रीरामकृष्णसंघस्य संन्यासिनां तथा ब्रह्मचारिणां एकं सम्मेलनमपि सम्पत्स्यते। सर्वधर्मसमन्वयस्य तथा पारस्परिक-शुभेच्छास्थापनस्योद्देश्येन वाराणस्यामपि तथाविधमेव सम्मेलनं भविष्यति।"

* * *

स्वामी रुग्णो भूत्वा कलिकत्तामाययौ। परन्तु तदीययोजनाः एकस्या उपर्येका इतिरूपेण कार्यान्विता अभवन्। कलिकत्तां परावृत्य १८९८ ई० वर्षस्य फरवरीमासस्य तृतीयदिवसे वेलुडे गङ्गायाः पश्चिमे तटे मठार्थं एकेन प्राचीनगृहेण साकं ७ एकड़-भूमिं सः अक्रीणात्। नवीनायां भूमौ मन्दिराणां अन्यभवनानां च निर्माणमारब्धम्। प्रधान-तया स्वामिशिष्ययोः मिसमूलर-मिसेजउलीबुलयोः धनेनैव मठभूमि-क्रयणं भवनादिनिर्माणं सम्भवमभूत्। फरवरीमध्ये आलमबाजार-स्थानात् अपसृत्य अभिनवभूमेर्दक्षिणतः नीलाम्बरमुकर्जी-महोदय-स्योद्यानभवने मठः तात्कालिकरूपेण स्थानान्तरणमाप।

मिसमूलर-मिसमार्गारेट-नोवेल ( निवेदिता )-मिसेजउलीबुल-मिसमैक्लाउड्प्रभृतिपाश्चात्यशिष्याः पुण्यभूमेर्भारतस्य शिक्षया एवं संस्कृत्या सह परिचिता भूत्वा श्रीरामकृष्णसंघस्य कार्ये सहायतां दातुं भारतं आयाता आसन्। ते जनाः नवेन परिवेशेन सह स्वात्मानं मेलयित्वा नवक्रीतभूमेरेकांशे स्थिते प्राचीनभवन एवावस्थातुमारभन्त। शिक्षादीक्षाभ्यां पाश्चात्यशिष्याणां सेवार्थं भारतोपयोगिरूपेण संघटनं

स्वामिनोऽन्यतमं विशेषं कार्यमवर्तत। स सायं प्रातस्तेभ्य उपदेशान् प्रददाति स्म, स्वास्थ्यसम्बन्धे प्रश्नोत्तरं च अकरोत्। स तेभ्यो नियतरूपेण शिक्षां दातुमेकं सुयोग्यं संन्यासिनं शिष्यं स्वामिस्वरूपानन्दं न्ययोजयत्।

इतस्तु स्वामी सारदानन्दः अमेरिकायां वेदान्तप्रचारं कुर्वन् स्वामिन आह्वानमवाप्य भारतं परावृत्य मठसञ्चालनकार्ये व्रती बभूव। स्वामी शिवानन्दोऽपि सीलोने वेदान्तप्रचारं विधाय मठं प्रत्यागमत्। दिनाजपुरे व्यापकदुर्भिक्ष-सेवाकार्यं समाप्य स्वामी त्रिगुणातीतानन्दोऽपि परागत्य स्वामिना सङ्गमे। निजसतीर्थ्यानां कर्मशक्तिं तथा सफलतां सन्दृश्य स्वामी समधिकं गर्वस्यानुभवमकरोत्।

कतिपयदिवसानन्तरं फरवरीमासस्य २२ तारिकायां श्रीरामकृष्णदेवजन्मतिथि-पूजादिकं समाचरितम्। तस्मिन् दिने स्वामी पञ्चाशते अब्राह्मणेभ्यो गृहिभ्यो भक्तेभ्यो गायत्रीमन्त्रं यज्ञोपवीतञ्च प्रायच्छत्। तस्मिन् समये सोऽब्रवीत्—'त्रयाणां वर्णानामुपनयनाधिकारः विद्यते। समये समुपस्थिते सर्वेऽपि ब्राह्मणपदव्यां समुन्नीयेरन्।' फरवरीमासस्य २७ तारिकायां विपुलसमारोहेण साकं श्रीरामकृष्णदेवस्य साधारण उत्सवः 'दाँ'-जनानां भगवन्मन्दिरे अनुष्ठितोऽभूत्। सहस्राधिकानां स्त्रीपुरुषाणां जाति-वर्ण-भेदं हित्वा एकस्यां पंक्तावुपविश्य प्रसादभाजनं संलक्ष्य स्वामी अतिमात्रं मुमुदे।

मिसमार्गारेट नोबल-महोदया निजपूर्वजीवनस्य समस्तं सम्पर्कं संन्यस्य भारतस्य सेवायामात्मनियोगं कर्तुं समाययौ। स्वामी अस्याः शिष्यायाः जीवनं आदर्शब्रह्मचारिणीरूपेण त्याग-वैराग्य-तितिक्षा-तपस्याभिरापूर्य संघटितं चक्रे। समयं मत्वा शिष्यायाः प्रार्थनानुसारं एकस्मिन् शुभे दिने ( २५ मार्चमासे ) तां ब्रह्मचारिणीव्रते दीक्षितामकरोत्। तस्या नवीनं नाम 'निवेदिता' इति समपद्यत। सा स्वनाम लिलेख Nivedita of Rk. V. अर्थात् रामकृष्णविवेका-

नन्दचरणयोर्निवेदिता। एतदभिधानमक्षरशः सार्थकमभूत्। अनाघ्रात-पुष्पवत् सौरभमयं पवित्रं जीवनं सा भारतस्य सेवायां उत्सृष्टमकरोत्। तस्याः सम्बन्धे स्वामी समकथयत् "निवेदिता भारताय इङ्गलन्डतः एकं श्रेष्ठमुपायनमस्ति।...निवेदिता अत्र प्राणानुत्स्रष्टुमाजगाम। स्वं गुरु-भावं प्रदर्शयितुं न।" *

उत्तरभारतस्य भाषणयात्रां निर्वर्त्य स्वामी कतिचिद्दिनपर्यन्तं साधारणसभायां भाषणं नाददात्। स संघटनमूले कार्ये संलग्नोऽभवत्। केवलं मार्चमासस्य ११ तारिकायां 'स्टारथियेटर'-भवने निवेदिता 'इङ्गलन्डे भारतीयाध्यात्मिकविचारस्य प्रभावः' तथा १८ तारिकायां मार्चे स्वामी सारदानन्दः एमरल्डरङ्गमञ्चे 'अमेरिकायामस्माकमुद्देश्यम्' सम्बन्धे ये भाषणे ददतुः तयोः सभयोः स्वामी सभापतिरभूत्। २१ तारिकायां मार्चे बहुबाजारविज्ञान-परिषदः एकस्मिन्नधिवेशने सः भाषणमयच्छत्। १९ तारिकायां मार्चे स्वामी द्वौ निजशिष्यौ संन्यासि-व्रते दीक्षितौ समातनोत्। तयोर्नामनी स्वामी स्वरूपानन्दः स्वामी सुरेश्वरानन्दश्चाभूताम्।...

महति अवधाने दत्तेऽपि स्वामिनः स्वास्थ्यं क्रमशः दूषितं बभूव। डाक्टराणां परामर्शेन स ३० तारिकायां मार्चे दार्जीलिङ्गं प्रातिष्ठत। हिमाचलस्य निर्जने स्थाने समागत्य सः अधिकसमयपर्यन्तं ध्यानमग्न एव तस्थौ। आवश्यकपत्राणामुत्तरदानस्य तथा कार्याणां च निर्देशस्ते-नैवाकारि। विश्रामग्रहणात् तस्य स्वास्थ्यं किञ्चित् सौष्ठवमापेदे। परन्तु कलिकत्तायां जनपदोद्ध्वंसकव्याधेः (प्लेग) प्रकोपात् परश्शतानां प्राणनाशस्य परस्सहस्राणां प्राणभयात् पलायनस्य तथा नगरे

---

* निवेदितायाः जीवनस्य साधनायाः अवदानस्य च सम्बन्धे विशेषरूपेण विज्ञातुं "रामकृष्णमिशन-सिस्टरनिवेदिता-गर्ल्स-स्कूलतः" प्रकाशितः 'प्रव्राजिका-मुक्तिप्राणा'लिखितः 'भगिनी निवेदिता'-जीवनी-ग्रन्थः विशेषेण सहायतां दास्यति।

अत्यन्तं विशृङ्खलावस्थायाश्च वृत्तं संप्राप्य स तत्र स्थैर्येण स्थातुं नाशकत्। ३ तारिकायां मईमासे स्वामी कलिकत्तामवातरत् तथा तस्य संक्रामकव्याधेः निवारणकार्ये सहैवोदपतत्। तस्मिन्नेवाहनि हिन्दीबङ्गलाभाषयोः घोषणापत्रद्वयं स प्राकोशयत्। लोकानां साहसमादधे तथा सान्त्वनावचनानि श्रावयामास। सहैव स्वामिशिवानन्द-निवेदिता-सदानन्दानां नेतृत्वे सेवाकार्यं प्रावर्तत। सेवाशिबिरनिर्माणम्, स्वयंसेवक-दल-घटनम्, जननिवासस्थानात् अवस्करापसारणम्, एवं स्वास्थ्यरक्षानियमानां प्रवर्तनमपि विहितम्। वङ्गालयुवकाः वृन्दशः तस्मिन् सेवाकार्ये समीयुः। निवेदिता मूर्तिमती सेवेव सहस्राधिकानां हृदयेषु आशां तथा साहसं च संचारयामास।

स्वामिन एकः सतीर्थ्यः स्वामिनं समपृच्छत्—'एतावद् द्रव्यं कुतः समापतेत्?' स्वामी सपद्येव उत्तरं ददौ—"कुतः? आवश्यकताया-मुपस्थितायां मठस्य नवीनभूम्यादिकं सर्वं विक्रेष्यामि।" परन्तु तथा कर्तव्यं नाभूत्। रामकृष्णमिशनस्य तस्मै जनकल्याणकार्याय प्रचुरधनस्य संग्रहोऽभवत्। स्वामी कलिकात्तायास्तस्मिन् संकटकाले देवदूतवदेव आविर्बभूव। स रोगः प्रशशाम।...

हिमवति विश्रामं कर्तुं एकमाश्रमं स्थापयितुञ्च स्वामी ११ तारिकायां मईमासे अलमोडामयासीत्। साहचर्ये कतिपये सतीर्थ्यास्तथा पाश्चात्त्यशिष्या भक्ताश्चावर्तन्त। स्वामी पाश्चात्त्यशिष्यान् भारतसंस्कृति-धर्मयोः परिचयं कारयितुमैच्छत्। इदमपि तेषामध्ययनस्यैकं विशिष्ट-मङ्गमभूत्।

शैलावासी स्वामी अधिकं समयं ध्यानभजनयोरत्यक्रामयत्। आश्रमस्थापनार्थमपि अनुकूलस्थानस्यान्वेषणमप्यजायत। पाश्चात्त्य-शिष्याणां तथा भक्तानां अनेकप्रकारकशिक्षणे, दर्शनार्थिभिः साकं धर्मालोचनायाम्, भारते पाश्चात्त्यदेशेषु च कार्यपरिचालनेऽपि तस्य प्रचुरः समयः क्षीयते स्म। मद्रासतः प्रकाशिता 'प्रबुद्धभारत' पत्रिका

अनेककारणैः निरुद्धा बभूव । स्वामी तां पत्रिकामलमोडामानाय्य स्वामि-स्वरूपानन्दहस्ते तत्सम्पादनप्रातिभवं सेवियरदम्पत्योः तत्परिचालन-भारं च न्यस्तवान् । * अनेन विधिना अलमोडाकार्यं सुप्रतिष्ठितं विधाय स्वामी पाश्चात्त्यशिष्यानादाय १०तारिकायां जूनमासे कश्मीरं प्राचलत् । मासत्रयाधिकसमयपर्यन्तं ते कश्मीरस्य विभिन्नस्थानेषु न्यवसन् । चिराय स्वामिसम्पर्केऽवस्थानात् शिष्याणां धर्मजीवनं भृशमुन्नततरं संवृत्तम् । स्वामिना सहावस्थानमेवैका महती शिक्षाऽस्ति । भगिनी निवेदिता तस्य समयस्य विवरणं "Notes of some wanderings with Swami Vivekananda" नामके पुस्तके लिपिबद्धं चकार । स्वामिनो मनः तस्मिन् समये सांसारिकविषयेभ्यः परमुच्चे आध्या-त्मिकपर्वणि व्यराजत । लोककल्याण-चिकीर्षाऽपि नूनं तस्य मनसो विदूरमपससार । स स्वात्मानं विराट्चरणयोरवलुण्ठितमकरोत् ।...

सहस्राधिकैः संन्यासिभिः तथा तीर्थयात्रिसार्थैः साकममरनाथ-दर्शनार्थं प्रतस्थे । केवलं निवेदिता तदन्तिके तस्थौ । १८ सहस्र-पादोच्छ्राये एकस्य दुर्गमपर्वतमार्गस्यातिक्रमणं कृत्वा केवलं कौपीनधारी भूत्वा अमरनाथस्य गुहां (१२.७०३ फीट) प्रविश्य स्वामी तस्यां घनहिमाच्छन्नकन्दरायां ध्यानमग्नो बभूव । सदाशिवोऽमरनाथः तस्मै दर्शनं दत्त्वा इच्छामृत्यु-वरं प्रायच्छत् । तस्य मानसं शिवमयं समपद्यत । स आनन्दविह्वलोऽभूत् । कतिचिदहानि तन्मुखे महादेवा-तिरिक्तं अन्यद् वचनं नावतत ।..

अमरनाथदर्शनात् निवृत्य स सहसा क्षीरभवानीसन्दर्शनार्थमेकाकी निर्जगाम । तस्मिन् जाग्रत्तीर्थे स दिनसप्तकं यावत् कठोरसाधनायां

---

* स्वामिपरिकल्पितः हिमालयमठः सेवियरदम्पतीभ्यां १८९६ ई० वर्षे मायावती-गिरौ स्थापितो बभूव एवं 'प्रबुद्धभारत'-पत्रिकाऽपि तत्रैव स्थानान्तरण-मवाप ।

निमग्नोऽवर्तत। मुसलमानानां अत्याचारात् तद् देवीमन्दिरं प्रागेव विध्वस्तमास्त। एकस्य कुण्डस्याभ्यन्तरे देव्याः पूजा समपद्यत।

स तत्र प्रतिदिनं अर्चनं तथा हवनमकरोत्, एवं तण्डुलवादामादिभिः सह चत्वारिंशत्प्रस्थमितदुग्धस्य पायसं प्रपाच्य देव्यै समार्पयत्। अर्चकब्राह्मणस्य बालिकां 'कुमारी'-रूपेण सम्पूज्य जपमालां हस्ते समादाय चिराय जपमग्नोऽवर्तत। देवीमन्दिरस्य ध्वंसावशेषं विलोक्य स विषण्णमनसा एकदा चिन्तयन्नासीत्—अहं यदि अत्राभविष्यम् तदा नूनं प्राणान् दत्त्वापि मातरमरक्षिष्यम्। सहैव दैवी वाणी बभूव—"त्वं मां रक्षसि ? अथवाऽहं त्वां रक्षामि ? विधर्मीणो यदि मन्दिरस्य ध्वंसं कुर्युः तथा मूर्तिं कलुषितां विदध्युश्चेत् तत्र तव किमस्ति ?...वत्स ! अहमिच्छेयं चेत् अत्रास्मिन्नेव क्षणे सप्ततलं सुवर्णमन्दिरं निर्मातुं शक्नुयाम्।" दैववाणीमाकर्ण्य स्वामी स्तब्धो बभूव। द्वितीये क्षण एव पटः परिवर्तितो जातः। हृदयकन्दरो दिव्यालोकेनोदभासत। सोऽन्तर्बहिश्च तस्या आद्याशक्तेः स्पन्दनमन्वभवत्। अस्मिन् ब्रह्माण्डे मातैव एकमात्रं कर्त्री कारयित्री विश्वस्य सर्जनपालन-संहारकारिणी अस्ति। स तावत् एकं क्षुद्रं यन्त्रमात्रमस्ति—मातुरंके एकः लघीयान् बालकः !!

युगाचार्यः वाग्मी, कर्मठः, नेता, गुरुः, जनसेवकः, देशप्रेमिको विवेकानन्दो जगज्जनन्या विराट्-सत्तायां स्वात्मानं विलीनं वितेने। स मातृगतप्राणः शिशुरभूत्। मुखे केवलं 'मातः मातः' शब्द आसीत्। तस्मिन् निजेच्छा काऽपि नावशिष्टा—सर्वं मातुरिच्छायां निर्भरं वर्तते।...

सप्ताहानन्तरं क्षीरभवानीतः परावृत्य यदा स स्वशिष्याभिः समागच्छत तदा तस्येदं परिवर्तनं दृष्ट्वा सर्वे विस्मयमुग्धा बभूवुः। मातृभावेन स सर्वेषामन्तराणि पर्यपूरयत्।

काश्मीरभ्रमणं समाप्य स्वामी विवेकानन्दः अक्टूबर मासस्य १८ तारिकायां वेलुड़मठं प्रत्यावृत्तः। स्वामी सारदानन्दः स्वामिनः शिष्याः आदाय उत्तरभारतस्य विभिन्नस्थानेषु भ्रमणाय निर्गतः।

स्वामिनं समवाप्य मठनिवासिनः नितान्तमानन्दिताः संवृत्ताः। परं स्वामिनः शरीरस्य तथा मनसश्चावस्थां वीक्ष्य विषादस्य श्यामलच्छायया सर्वेषां हृदयमाच्छन्नमभवत्।

इतस्तु नवीनभूमौ मठ-भवन-निर्माणकार्यं प्रायः सम्पूर्णमभवत् मठस्य स्थानपरिवर्तनार्थमायोजनं प्राचलत्। १८९८ ई० नवम्बरस्य कालीपूजाप्रथमदिने संघजननी श्रीसारदादेवी बागबाजारतः नूतनं मठप्राङ्गणमुपेत्य श्रीश्रीठाकुरस्य पूजामाचरत्। श्रीरामकृष्णदेवः चिराय तत्राधिष्ठितोऽभूत्। वेलुडमठः महातीर्थरूपेण परिणतो बभूव।

अन्येद्युः प्रातःकाले श्रीश्रीमातुः विशिष्टमाशीर्वादं समादाय बागबाजारे 'भगिनी-निवेदिता-बालिकाविद्यालय'-स्य प्रतिष्ठा समभूत्।

परवर्ती दिसम्बरमासे नवमो दिवसः जगत आध्यात्मिके इतिहासे एको महान् स्मरणीयः अस्ति। तस्मिन्नेव दिने प्रातःकाले पुण्ये मुहूर्ते स्वामी स्वयं भाटकमठात् श्रीरामकृष्णदेवस्यास्थिभस्मपूर्णां मंजूषिकां स्कन्धे निधाय नूतनमठप्राङ्गणं समाययौ, एवं अनेकोपचारैः पूजाहोमादि कार्यं समाप्य श्रीरामकृष्णदेवं वेलुडमठे प्रतिष्ठितमकरोत्। स्वामिशिवानन्दस्य सहयोगितया चत्वारिंशत्प्रस्थ-परिमितक्षीरेण पायसं पक्त्वा श्रीठाकुराय भोगं न्यवेदयत्।

नवे मठे श्रीरामकृष्णदेवं प्रतिष्ठितं कृत्वा स्वामिनः शिरस एकस्या महत्याश्चिन्ताया भारोऽवतीर्णः। समागतान् जनान् सम्बोधयन् स आह—"अद्य यूयं कायमनोवाक्यैः श्रीठाकुरस्य चरणयोः प्रार्थनां कुरुत यत् महायुगावतारः श्रीठाकुरः बहुजनहिताय बहुजनसुखाय च अस्मिन् पुण्यक्षेत्रे चिरकालपर्यन्तं विराजमानः इदं स्थानं सर्वधर्माणां अपूर्वं समन्वयकेन्द्रं विदधातु।"

तदनन्तरं शिष्यं शरचन्द्रचक्रवर्तिनं सम्बोध्य स्वामी प्रोवाच—"श्रीठाकुरस्येच्छया अद्य तस्य धर्मक्षेत्रं सुप्रतिष्ठितमभूत्। द्वादश-वार्षिकी चिन्ता मम शीर्षात् अद्यावातरत्।...अत्र सर्वेषां मतानां भावानां च सामञ्जस्यं स्थास्यति। श्रीठाकुरस्य उदारभावनाया इदं केन्द्रं भवेत्। अस्मात् स्थानात् महासमन्वयस्योद्भिन्नच्छटया जगत् प्लावितं भविष्यति।..."

संन्यासिनो जना नवीने मठे क्रमशः आगत्य स्थातुं प्रवृत्ताः। अग्रिमे द्वितीये जनवरीमासस्य दिने नीलाम्बरबाबू-उद्यानात् मठः नवे भवने स्थानान्तरमाप।

योजनानां एकैकस्याः कार्यरूपेण परिणमनेन स्वामिनश्चिन्ताया लाघवे जातेऽपि तस्य स्वास्थ्यं क्रमशः जीर्णशीर्णतां ययौ। श्वासरोगात् इयदधिकं कष्टं भवति स्म यद् डाक्तराणां परामर्शेन स वैद्यनाथ-मगच्छत्। किन्तु विश्रामेण एकान्तवासेन च तस्य स्वास्थ्ये विशेषा उन्नतिः नालक्ष्यत। तस्मात् फरवरीतृतीयदिने स बेलुड़मठं प्रत्याजगाम।

मठः सुचारुरूपेण प्राचलत्। ध्यानं जपं तथा शास्त्रादिपाठं एवं आलोचनाञ्चेति सर्वं अविश्रामं प्रचलितं विलोक्य स नितान्तमेव प्रसन्नो जातः। गुरुभ्रातॄन् तथा शिष्यान् आदाय एकस्याः सभाया आयोजनं कृत्वा स सर्वान् युगावतारस्य श्रीरामकृष्णस्य वाण्याः समस्ते भारते प्रचारं कर्तुं उपदेशं ददौ। स्वामिविरजानन्दं तथा प्रकाशानन्दं प्रचारकार्यार्थं स ढाकां प्रेषयामास।...

वृन्दशः कॉलेजच्छात्राः तथा शिक्षिताः सज्जनाः स्वामिनां पार्श्व-मागच्छन्। स तैः सह केवलं धर्मस्य, दर्शनस्य, विज्ञानस्य देशविदेशानां वार्तायाः, इतिहासस्य तथा सत्साहित्यस्यैव चर्चां नाकरोत्, प्रत्युत प्रत्येकं 'मनुष्यो भवितु" मन्त्रं ददौ। तस्य कथनमासीत् "अहं तथाविधस्य धर्मस्य प्रचारं इच्छामि, येन यथार्थतः मनुष्य प्रस्तुतः

स्यात्।" युवकान् सम्बोध्य सः अकथयत्—"द्विसहस्रं वीरहृदयाः विश्वासभाजनानि सच्चरित्रा मेधाविनो युवानः एवं त्रिंशत्कोटि-रूप्यकाणि च यदि प्राप्यन्ते तदाऽहं भारतं यथार्थतया जागृतं कर्तुं शक्नोमि।..."

भारतवर्षे सः स्वल्पान्येव भाषणानि दत्तवान्। तस्य विशिष्टं कार्यमासीत् "भूसंशोधनम्।" सः भारते 'भूमिं संशोध्य' तां उर्वरां अकरोदपि। भारतस्य कल्याण-चिन्तायां यदा स मग्नो बभूव, तस्मिन्नपि प्रसंगे तस्यां भूमौ वपनार्थं स वायुमण्डले बीजानि अकिरत्। परन्तु कृषिफलसमागमं स स्वल्पमेव द्रष्टुमशक्नत्। वर्तमानभारतस्योन्नतौ तां फलसमृद्धिं सम्प्रति वयमवलोकयामः। विंशशताब्द्या भारतवासिनामन्तरे यत् परिवर्तनमाययौ तत् स्वामी विवेकानन्दः भारते यां जागर्तिं उदपादयत् तस्या एवेदं फलमस्ति।

काले स पाश्चात्यदेशेषु प्रारब्धं निजकार्यं न व्यस्मार्षीत्। यत्तस्योपर्येव भारतोन्नतिः बहुलतया आस्थिता। तस्य स्वास्थ्यसौष्ठवाय दीर्घो विश्रामः तथा वायुपरिवर्तनस्य अपरिहार्यावश्यकता आस्त। तदर्थं भिषजां परामर्शेन स समुद्रयात्रायै सन्नद्धो बभूव। अधुना सहचरत्वेन स्वामिनं तुरीयानन्दं गृहीतवान्। निवेदिता नारीशिक्षा-कार्यार्थं धनसंकलनाय इङ्गलन्डगमनाय सन्नद्धा बभूव। साऽपि स्वामिना सार्धं प्रस्थिता। १८९९ ई० वर्षे जूनमासे २० तारिकायां 'गोलकुण्डा'-महाप्लवेन कलिकत्तातः प्रस्थाय सर्वेऽपि मद्रास-कोलम्बो-एडेन-नेपल्स-मार्सेलमार्गेण ३१ तारिकायां जुलाईमासे लन्दनमवापुः। 'टीलवेरी-डक्' इत्यत्र अनेके भक्ताः एवं सुहृदः स्वामिनः स्वागतमाचरन्। द्वौ अमेरिका-शिष्यावपि डेट्रएट-नगरात् तं नेतुमागच्छताम्।

लन्दनस्य साधारणसभायां अस्मिन् पर्याये स्वामी किमपि भाषणं नादत्त ; तथापि मित्रवृन्दस्य संमर्दः समवेतः। अगस्तमासे १६ तारिकायां

अमेरिकां (न्यूयार्कं) यातुं स प्राचलत्। प्रायेण एकवर्षं यावत् स अमेरिकामध्युवास। स्वामिनो द्वितीयपाश्चात्त्यभ्रमणस्य विवरणं स्तोकमेव उपलभ्यते तदपि विच्छिन्नप्रायरूपेण। विभिन्नस्थानेषु स अनेकानि भाषणानि व्यतरत्। कक्षा-वार्तालाप-आलोचना अपि अल्पीयस्यो नाभूवन्; परन्तु तासां विवरणं विलिख्य न निहितम्। तस्मात् कारणात् तस्य कार्यस्य परिमाणं ज्ञातुं न शक्यते। किन्तु तस्य कतिपय-पत्रैः तात्कालिकतन्मानसिकावस्थायाः यत् चित्रं कृष्टं तिष्ठति, तेन स्पष्टं ज्ञायते यत् स लौकिककार्यादात्मानं समाकुञ्च्य विराडिच्छाया इङ्गितेन प्रावर्तत। सोऽलिखत्—'···मातुः कार्यं मातैवानुतिष्ठति, अतोऽहं तस्मिन् विषये मस्तकं न क्षपयामि। ··मातैव यन्त्री अस्ति, अहं तद्धस्तगतयन्त्रमन्तरा किमन्यत्?" तथाऽपि तद् यन्त्रमनुपमं कार्यं कुर्वद् अस्ति। ··

न्यूयार्कमेत्य स्वामिनः अभेदानन्दस्य वेदान्त-प्रचार-साफल्यं विलोक्य स्वामी नितान्तमानन्दमविन्दत। स्वामिनं तुरीयानन्द-मभेदानन्देन सह कार्यं कर्तुं परित्यज्य स विश्रामार्थं 'रिजलिमैनर'-स्थानं जगाम।

नवम्बरमासस्य अष्टमे दिने न्यूयार्कं परावृत्य स एकस्मिन्नधिवेशने सभापतित्वं चकार। दशमतारिकायां जनता अभिनन्दनपत्रं स्वामिने प्रादात्। तदुत्तरे स्वामी सुन्दरमेकं भाषणं व्यतरत। प्राचीनाः सखायः तमवाप्य सविशेषम् आनन्दिता बभूवुः। न्यूयार्के सप्ताहद्वयमवस्थाय स्वामितुरीयानन्दे 'मंट क्लेअर'-कार्यभारं अर्पयित्वा २२ तारिकायां नवम्बरे स केलिफोर्निया-नगरं वव्राज। प्रत्नमित्रस्याह्वानमवाप्य मध्ये-मार्गं शिकागो-स्थाने सोऽवारुहत्। तत्र स महता विशेषेण संवर्धितः एवं अभिनन्दितश्चाभूत्।

दिसम्बरस्यारम्भे केलिफोर्निया-इत्यत्रागत्य स फरवरीमध्यपर्यन्तं लस एंजलिसे उवास। विशेषरूपेणामन्त्रितेन तेन विभिन्नस्थानेषु

प्रचुराणि भाषणानि देयान्युभूवन् तथा स धर्मालोचनामपि समाचचार। तस्मिन्नवसरे स यानि भाषणानि प्रददौ तेषु इमे विषया विशिष्योल्लेखार्हाः– वेदान्तदर्शनं, विश्वमैत्री, कर्मरहस्यं, मानसिकशक्तिः; ईशदूत-'ईसा, विश्वजनीनसाधनोपायः, जडभरतोपाख्यानं, प्रह्लादचरितं, फलितमनस्तत्त्वं, भारतस्य पौराणिककथा, रामायणं, महाभारतं, राजयोगः, हिन्दुमते मुक्तिपथः, सार्वभौमधर्मादर्शः, विश्ववासिनिकटे बुद्धवाणी, अरबधर्मस्तथा हजरतमुहम्मदः, किं वेदान्तो भाविधर्मोऽस्ति ? विश्वास्थानसम्मुखे ईसावार्ता, ससारं प्रति मुहम्मदस्य वाणी, भक्तियोगः, विश्वजनतायै श्रीकृष्ण-वाणी, आनुष्ठानिकोपासनाप्रभृतयो विषयाः। एतानि भाषणानि स्वोपज्ञानि चिन्तनैस्तत्त्वैश्च पूर्णान्यभूवन्, अतः सर्वत्र स्थानेषु उद्दीपना उदपादि, एवं कैलिफोर्नियावासिनः सर्वे विद्वांसस्तं प्रत्याकृष्टाः समपद्यन्त।

फलतः पैसाडेना-स्यानफ्रांसिस्को-ओकलन्ड-आलामिडा–प्रभृतिस्थानेषु वेदान्तस्य स्थायिप्रभावः परिव्याप। यद्यपि स्वामी तस्मिन् प्रान्ते सहस्रशः श्रोतॄणां समक्षं पञ्चाशत्तो ऽपि अधिकानि शिक्षाप्रदानि भाषणानि व्यतानीत्, तथापि तेषामेकमपि भाषणं साम्प्रतं पूर्णरूपेण प्राप्तुं दुःशकम्। विभिन्नवृत्तपत्राणां संवादात् यस्य कस्यापि भाषणस्य साधारणांश एव प्राप्यः। भाषणप्रभावात् स समस्तं कैलिफोर्नियाप्रान्तमेव प्रमुदितं वितेने। तत्रत्यानां अनुरागिशिष्याणां सहायतया कतिपयवेदान्तसमितीः सोऽस्थापयत् तत्र।

स्वामी यद्यपि पूर्णोद्यमेन वेदान्तप्रचारं कुर्वाणोऽवर्तत, तथाऽपि तस्य मानसिकनिर्लिप्ततायाः एकं मनोरमं चित्रं मिसमैक्लाउडमहाशयायै आलामिडातः १९०० ई० वर्षस्य अप्रैलमासे लिखिते पत्रे प्राप्यते··· "अहं समीचीन एवास्मि।···अधुना सपाथेयः तस्य महामुक्तिदातुः प्रतीक्षायां प्रस्थातुमासीनोऽस्मि। अद्य शिव, पारं नय मामिकां नौकाम्—हे शिव ! मदीयां नावं पारं प्रापय।'

"कियदपि कुतो न भवेत्, भो, अहं तु अधुनाऽपि तं पूर्वकालीनं बालकं विना नान्योऽस्मि कोऽपि, यः दक्षिणेश्वरे पञ्चवट्या अधः श्रीरामकृष्णस्यापूर्वां वाणीमाकर्ण्य अवाग् भूत्वाऽश्रोष्यम् तथा भावविह्वलोऽभविष्यम्। स बालभाव एव मम नैसर्गिकः स्वभावः अस्ति—अन्यत् कार्यनिर्वहणं परोपकारादिकं यत् किमप्यक्रियत तत् तस्यैव स्वभावस्योपरि कियत्कालस्य कृते आरोपितमेकमुपाधिमात्रमासीत्। हा हन्त! इदानीं पुनस्तां वाणीं शृणोमि—सः परिचितपूर्वः कण्ठस्वरः, यः मद्हृदयान्तस्तलं यावत् पुलकितं तनुते।...आयामि प्रभो! आयामि।"

"अहह! साम्प्रतमहं यथार्थत आगच्छामि।...निजसमक्षमपारं निर्वाणसमुद्रं विलोकयन् अस्मि।...अहं यद् अजाये तेनाहं प्रसन्नोऽस्मि।...पुनर्यद् निर्वाणस्य शान्तिसमुद्रे निमज्जितुं व्रजामि तस्मिन्नप्यहं हृष्टोऽस्मि।...

"शिक्षादाता, गुरुः, नेता, आचार्यः विवेकानन्दः प्राचलत्, निपतितोऽस्ति केवलं स पूर्वः बालकः; प्रभोः स चिरशिष्यः, चिरपदाश्रितो दासः। अहं सर्वेषु विषयेषु विरक्तो भूत्वा तस्येच्छया अनायासं तत्र चलामि। आगच्छामि मातः! आगच्छामि, त्वदीये स्नेहपूर्णे वक्षसि धृत्वा यत्र त्वं मां नयसि तस्मिन् अशब्दे, अस्पर्शे, अज्ञातेऽद्भुतराज्ये। अभिनेतुः भावं साकल्येन परित्यज्य केवलं द्रष्टा तथा साक्षीव मज्जने नास्ति मे विचिकित्सा।...

पारतः सज्जिताः पाञ्चालिकाः आलेख्याश्च दृष्ट्वा लोकानां मनसि यया विधया शान्तिभङ्गकारणं नोपतिष्ठते तथा अस्यामवस्थायां समस्तः संसारः तात्त्विकरूपेण तथैव प्रतीयते, ममान्तःकरणे शान्तेर्विरामो न भवति। पुनस्तदेवाह्वानम्! आगच्छामि प्रभो! आगच्छामि।..."

तस्य कर्मग्रन्थयः शिथिलाः संवृत्ताः। तथाऽपि विराट्पुरुषेङ्गितेन अक्लान्तभावेन स कर्म कुर्वन्नवर्तत।···

कैलिफोर्नियापरित्यागात् पूर्वं एका भक्तिमती शिष्या स्वामिने 'सैन्टाक्लैरा' प्रान्ते पर्वतस्याधः निर्जने प्रदेशे १६० एकड-भूमेर्दानमकरोत्। स्वामी तद्दानं स्वीकृत्य तत्र वेदान्तसाधनायाः केन्द्रमेकं स्थापयितुं प्रबबन्ध। कैलिफोर्नियानिवासस्य चरमे भागे सः पैरेस-प्रदर्शनीद्वारा आयोजिते धर्मेतिहाससभायां योगदानार्थं निमन्त्रणं समासादयत्। तदामन्त्रणं अभ्युपगम्य तस्मिन् सम्मेलने योगदानार्थं मई-मासस्यान्तिमे भागे स न्यूयार्कार्थं निरगच्छत्। मध्येपथि शिकागो-डेट्रएट-स्थानयोः कानिचिद् भाषणानि दत्वा स न्यूयार्कमगात्। अत्रापि स्वामिना प्रतिशनिवासरे प्रतिभानुवासरे च गीतायाः सम्बन्धे भाषणानि देयान्यभूवन्।···

परन्तु तस्य स्वास्थ्यं सर्वथा समीचीनं नावर्तत। अकाले वार्धक्यमाक्रामदिव। स अमेरिकातः सौप्रास्थानिकमादाय २० तारिकायां जुलाईमासे पैरिसमभिप्रतस्थे। तत्र लेगेट-दम्पत्योः प्राघुणकरूपेण न्यवसत्। पैरिसे पाश्चात्त्यैः अनेकैः कविभिः, दार्शनिकैः, वैज्ञानिकैः, गायक-गायिकाभिः, शिक्षयित्रीभिः, चित्रकरैः, शिल्पिभिः, अन्यैश्च गुणिभिःसाकं तस्य परिचयो जातः। अस्मिन्नवसरे स फ्रन्सीसी-भाषामपि सम्यगधिजगाम।··

शिकागो-सर्वधर्मसम्मेलनस्य फलं निरीक्ष्य कैथोलिक-सम्प्रदायिनो जनाः पैरिसे धर्मसम्मेलनायोजनस्य विरुद्धां तीव्रामापत्तिं समुद्भावयन्। अस्मात् कारणात् पैरिसे विश्वप्रदर्शन्या उद्योगेन केवलं धम-इतिहास-सम्मेलनस्य व्यवस्था अजायत। स्वामी तस्मिन् सम्मेलने केवलं भाषणद्वयं प्रादात्। परन्तु तस्य फलमपूर्वं समजनि। पाश्चात्त्यसंस्कृतज्ञ-पण्डितानां एवं दार्शनिकानां विरोधे समुत्थाय स वैदिकं धर्मं प्रतिष्ठितं चकार। प्रथमे भाषणे—'वैदिको धर्मः प्रकृतिपूजया समुत्पन्नोऽस्ति'

पाश्चात्यपण्डितानां एतत् मतं स शास्त्र-युक्तिभ्यां प्रत्याख्याय जर्मन-पण्डितेन ओपार्टे इत्यनेन सह शास्त्रार्थमकार्षीत्। शिवपूजा वेदात् उद्धृताऽस्ति तथा वेद एव हिन्दुधर्मस्य बौद्धधर्मस्य तथा भारतस्य अन्यधर्माणां मूलभित्तिरस्ति—इदमपि स प्रतिष्ठितं व्यधत्त।

अन्यस्मिन् भाषणे बुद्धदेवात् चिरपूर्वं श्रीकृष्णस्य आविर्भावं तथा गीताया रचनं महाभारतादनन्तरं नाभूत् इदं प्रमाणितं विधाय भारतीय-चारुकला-साहित्यज्यौतिषाणां उपरि ग्रीक-प्रभावमस्वीकृतवान्। उपस्थितपण्डितमण्डल्यां विशिष्य नूतनेषु भूयांसः स्वामिमतमन्व-मोदन्त।···

स्वामी तस्मिन्नवसरे मासत्रयं पैरिसमध्युवास। अनेके विख्यात-विद्वांसस्तथा मनीषिणः तस्य भावेन प्रभाविता बभूवुः। पाश्चात्यदेशेषु फ्रान्सीयायाः सभ्यतायाः प्रभावं निरीक्ष्य स मुग्धोऽभवत्। 'प्राच्य और पाश्चात्य' नामके ग्रन्थे तेन व्यावर्णि—"···पैरिसः यूरोपीय-सभ्यता-गङ्गायाः गोमुखी अस्ति।···एष पैरिसविश्वविद्यालयः यूरोपस्यादर्शोऽस्ति। ···अस्य रचनाया अनुकरणं सर्वास्वपि यूरोपीयभाषासु विद्यते। दर्शनस्य, विज्ञानस्य एवं शिल्पस्य खनिरस्ति एषा पैरिसनगरी।·· अन्यत्र सर्वत्र अस्या अनुकरणं भवति।"···

द्वितीयवारं पाश्चात्यभ्रमणे स अमेरिकायास्तथा यूरोपस्य संघटन-शक्तेः पृष्ठतः या हिंसकभोगलालसा, स्वार्थः, एवं प्राधान्य-प्रतिष्ठायाः अदम्या चेष्टा तथा साम्राज्यवादस्य लोलुपा दृष्टिः वर्तते, तस्या आविष्कारमातेने। पाश्चात्यसभ्यतायाः बाह्येन चाकचिक्येन स पुनर्नाकृष्टो बभूव। स निवेदितां प्राह—"···पाश्चात्यजीवनयात्रा अट्टहासवद् वर्तते। परन्तु तस्याधो विद्यते रोदनम्। तस्याः परि-समाप्तिरपि रोदने एव भविष्यति। हासपरिहासादिकं यत्किञ्चित् अस्ति तत्सर्वमापातत उपर्युपरि एव—परन्त्वस्या आभ्यन्तरो भागः नितान्तं दयनीयोऽस्ति।··· अत्र (भारते) यः कश्चिद् विषादः, रोदन-परिदेवने

वर्तन्ते सर्वमुपरिष्टादेवास्ति, परन्तु अन्तर्वर्तते निर्विकारभाव आनन्दश्च ।*"

चतुर्भिर्मित्रैः साकं स्वामो २४ दिनेऽक्टोबरमासे पैरिसं मुक्त्वा क्रमेण वियना-हंगरी-सर्विया-रुमानिया-वुलगेरिया-कन्स्टन्टिनोपल्-देशान् गत्वा मिस्रदेशं समाययौ । त्रिचतुराणि दिनानि तत्र न्युष्य द्रष्टव्यस्थानान्यद्राक्षीत् । किन्तु पैरिस-दर्शनानन्तरं यूरोपस्य किमपि नगरं तस्मै नारोचत । किञ्च पाश्चात्त्यानां भोगलालसा तथा प्राधान्य-प्रतिष्ठार्थं परस्परस्पर्धा च तस्यान्तरं नितान्तमपीडयताम् । स भारतं परावर्तितुं व्याकुलोऽभवत् एवं सहचराननुमान्य प्रथमं यं प्लवमासादयत् तेन भारतं परावर्वृते ।

तस्यान्तरे असीमाह्वानं अश्रूयत ।··· प्राच्य-प्रतीच्ययोर्मेलन-प्रचेष्टा, वेदान्तप्रभावेण 'धूमायमानज्वालामुखीमुखात् यूरोपस्य परि-त्राणेच्छा'–सर्वमपि मनस एकस्मिन् कोणे सन्नतमवातिष्ठत । स निर्वाणा-ह्वानस्योत्तरं प्रायच्छत् ।

—:-*-:—

* भगिनीक्रिस्टिन्याः स्मृतिकथया ज्ञायते यत् स्वामी १८९६ ई० वत्सरे तामवोचत्—"आगामि आन्दोलनं यस्य नवयुगस्य सृष्टिं करिष्यति, तत् रूसदेशात् चीनदेशाद् वा आगमिष्यति ।··· पृथिव्यामद्य तृतीयं युद्धं चलति । अस्मिन् युद्धे वैश्यानां प्राधान्यमस्ति । परन्तु चतुर्थे शूद्राणां (हापितसर्वस्वानां) प्राधान्यं भविष्यति ।"

मुम्बईनगरात् स्वामी विवेकानन्दः सहसा (१९०० ई०) दिसम्बर-मासस्य नवम-दिवसे रात्रौ वेलुडमठमुपातिष्ठत्। स्वामि-महोदयं समासाद्य मठवासिनां मनस्सु आनन्दाः स्थानं नालभन्त। मठे केवलं तदैव प्रसाद-( भोजन ) संकेतरूपो घण्टानिनादो जातः। सोऽपि सर्वैः सह प्रसादं भक्षितुमेव समासीनः। अतो नानाप्रमोदसंलापेन सर्वा एव निशा व्यतीता जाताः। आनन्दस्रोतो मठे प्रवहति स्म।

जीर्णदेहं भग्नञ्च स्वास्थ्यमादाय स स्वामिपादः प्रत्यावृत्तः। मठ-मागत्यैव स "कप्तान"-सेवियरस्य लोकान्तरगमनवार्त्तामाकर्ण्य सेवियर-रमणीं दुर्वहादेतस्मात् शोकभारात् सान्त्वयितुं झटिति मायावतीं गन्तु-मुद्युक्तोऽभवत्।

तन्त्र्या एतामेव गमनवार्त्तां तत्र प्रेरयामास, स्वामिनं शिवानन्दं शिष्यञ्च सदानन्दं सङ्गिनं कृत्वा दिसम्बरमासस्य सप्तविंशतितमे दिवसे बहिर्गत्वा तत्रैव मासे ऊनत्रिंशत्तमे दिने काठगोदामस्थानमुपातिष्ठत्।

तदानीं हिमालयप्रदेशे अतिमहान् प्राकृतिको दुर्योगः, प्रबला वात्या, अतिवृष्टिः, तुषारपातः, करकापातश्च समभवन्। स्वामि-पादस्तु तत्सर्वं विपत्पातं नैव गणयित्वा जनवरीमासस्य (१९०१) तृतीयदिवसे मायावती-मुपाजगाम। तमेवाश्रममालोक्य स नितरामानन्दितोऽभवत्।

सेवियरदम्पती वक्षःशोणितधारयेव श्रीश्रीस्वामि-पाद-परिकल्पित-माश्रमं हिमालयप्रदेशे निर्मितवन्तौ।

सेवियरस्य मृतदेहोऽपि तस्मादेवाश्रमादधो नातिदूरवर्त्तिनि स्थाने समदह्यत। स्वामिपादमासाद्य सेवियर-पत्नी कियतीं सान्त्वनामलभत। जुलाईमासस्य त्रयोदशदिने स्वरूपानन्दस्वामिनो जन्मतिथिरुद्यापिता

जाता। परेद्युरेव सेवियरमहोदयस्य जन्मदिनमासीत्। यदि सोऽजीविष्यत्, तदा तस्य वयोमानं षट्पञ्चाशत् वर्षाण्यभविष्यत्।

स्वामिपादस्तु पञ्चदशदिनानि तत्र मायावत्यामनयत्। सेवियर-पत्न्या सह संलापातिरिक्तं आश्रमस्थैः साधुभिः सह बहूनि गुरुत्व-पूर्णानि संलाप-समालोचनान्यन्वहं तस्य सञ्जातानि आसन्। आश्रम-मध्यासीन एव चिरतुषारमण्डिताभ्रभेदीनि गिरिशृङ्गाणि समालोक्य स्वामिमहोदयो ध्यानलग्नोऽभवत्। एकदा स सेवियर-रमणीमाह स्म, यत् "अहं जीवनस्यान्तिमे भागे सर्वमन्यत् कर्मजातं विहाय अत्रैव स्थास्यामि। ग्रन्थविरचनं सङ्गीतालापं च समाश्रित्य कालं नेष्यामीति।"

मायावतीमध्युष्य तेन नानादेशानां बहूनां कार्याणां निर्देशो देयः, बहूनि च पत्राणि लेखनीयानि आसन्। "प्रबुद्धभारतार्थं" त्रय एव सुचिन्तिताः सन्दर्भास्तेन रचिता जाताः। ते च—"आर्य-जातिः तामिलजातिश्च" "सामाजिक-समस्यासभायाः अधिवेशनप्रत्युत्तरम्," "थियोसफी-सम्बन्धिमन्तव्यं च" इति। एतत्सन्दर्भत्रयातिरिक्तं ऋग्वेदस्य "नासदीय-सूक्त"स्य मनोज्ञोऽनुवादोऽपि तेन तत्रैव स्थित्वा व्यधायि। स्थानस्य स्वाभाविकोच्चताप्रभावेण मायावत्यां सः अत्यधिक-श्वासकष्टमनुभूय श्वासरोगेण (दमा) निरतिशय-पीड़ितो जातः। तादृशदुर्योगमध्यत एव जनवरीमासस्याष्टादशदिने स मायावतीं परित्यज्य चतुर्थेऽहनि समायां भूमौ पीलीभीतनामकस्थाने समागत्य वाष्पीययानमारुरोह।

किन्तु स स्वसङ्गिनं गुरुभ्रातरं शिवानन्दमवदत्, "भोः महा-पुरुष! सम्प्रति त्वम् अस्मान् विहाय वेलुडमठार्थं अर्थान् संग्रहीतुमेव गच्छ।"

तत्प्रसंगेन स्वामि-महोदयस्तु आह स्म—"वेलुडमठस्य सर्वे संन्यासिनो भारतवर्षस्य चतुर्दिक्षु धर्मप्रचारं लोकानाञ्च शिक्षादानं कुर्वन्तः समन्तात् भ्रमिष्यन्ति। एवञ्च मुद्राणां सहस्रद्वयमन्ततः संगृह्य मठस्य धनागारे रक्षिष्यन्तीति।" स्वामिशिवानन्दोऽपि

सविनयं तत्रभवत्स्वामिपादनिर्देशं शिरसि समाधाय तत्पालनाय सम्मतिं व्यज्ञापयत्। स्वामिपादस्तु जनवरीमासस्य चतुर्विंशतितमे दिवसे ( १९०१ ) वेलुडमठं प्रत्यावृते।

मठं प्रत्यावृत्य स संघटनकार्यमारब्धवान्। इतो मध्ये कति वा नवीन-ब्रह्मचारिणो मठमेत्य कार्यनिरता जाताः। स हि नियमित-भावेन दैहिकीं व्यायामचर्चामन्वहं प्रवर्त्तयामास। शास्त्रादिपाठेपु अत्यधिका-ग्रहातिशयं प्रचारयामास। ध्यानभजनादिकं पूर्णोत्साहेन प्रववृते।

अतिप्रत्यूषे संकेतघंटाया निनादोऽभवत्। सर्वेऽपि ध्यानगृहं प्रविश्य ध्यानमग्ना भवितुमचेष्टन्त। शारीरिकीं अस्वस्थतां विना केनापि कारणेन निर्दिष्टकाले यदि कोऽपि ध्यानाय ध्यानगृहं न विशति तर्हि, तत्रैव दिने तस्मै आहारो न दीयते स्म, तस्य मधुकरी भिक्षा-व्यवस्था आसीत्। किं वहुना, प्रवीणसंन्यासिनां कृतेऽपि तस्य विधेः परिवर्त्तनं न भूतम्। अहो! कीदृशी कठिना नीतिः। किन्तु स्वामि-पादस्तु तत् प्रवर्त्तितमकरोत्। नेतुरादेशं सर्वेऽपि मेनिरे।…

इतः पूर्ववंगीया भक्ताः स्वामिपादं तत्र नेतुं नानारूपेण अचेष्टन्त। तेपामाग्रहातिशय्यमालोक्य स मार्चस्य अष्टादशदिने कतिपयान् संन्यासिनः समभिव्याहृत्य ढाका-नगरमगच्छत्। विपुलतरं सम्वर्द्धनं तत्राभवत्। तत्रत्यानां जनानाम् आन्तरिकी श्रद्धा स्वामि-सहोदयं विमुग्धमकरोत्। तत्र स भापणद्वयमेव दत्तवान्। अपि च बहवो लोका तेन सह संलापं कृत्वा मानवेषु श्रीभगवद्दर्शनस्य नवीनामनु-प्रेरणामुपलभ्य धन्या अभवन्।

कस्मिंश्चित् विशिष्टदिने, स खलु "लाङ्गलबन्ध"-नामकस्थान-मुपेत्य सहस्रैर्यात्रिभिः साकं ब्रह्मपुत्रनदे सस्नौ। इयमेव किंवदन्ती यत् परशुरामस्तत्रैव तीर्थे समवगाह्य मातृवधजनितात् पापान्मुक्तो-ऽभवत्। ढाका-नगरात् स श्रीश्रीरामकृष्णदेवस्य गृहस्थ-भक्तस्य प्रख्यात-नाम्नो नागमहाशयस्य जन्मभूमिं नारायणगंजं निकषा—"देवोभोग"-

ग्राममाजगाम। ढाकावस्थानसमये स्वामिपादः श्वासरोगेण असह्नीयकष्टमन्वभवत्। एकदा शारीरविषयकमौदासीन्यमवलम्ब्यावदत् यत् "भवतु यदि मरणमपि संजायेत, तेन वा किं एति, याति वा? यदेव वस्तु अयच्छम्, विचारजगते तत् सार्द्धसहस्रवर्षाणामाहार्यम्।"

ढाका-प्रदेशात् स्वामिपादस्तु चट्टग्रामं निकषा सुप्रसिद्धं चन्द्रनाथतीर्थमालोक्य आसामप्रदेशान्तर्गत-गोआलपाडां गौहाटीं च परिभ्रम्य सुमहातीर्थं "कामाख्या"मेव द्रष्टुमगच्छत्। तादृशमस्वास्थ्यमनुभवन्नपि स स्वामिपादस्तत्रत्यानामधिवासिनां विशेषाग्रहेण गौहाटीनगर्यां त्रीण्येव भाषणानि दत्तवान्। गौहाटीनगरे कामाख्यायां च तस्य शरीरमतीवास्वस्थमभवत्। बहुमूत्ररोगेण सार्द्धं श्वासरोगश्च अदृश्यत। केचन च "शिलाङ"-नामक-गिरौ गन्तुमुपदिदिशुः। तत एव स स्वामिपादः शिलाङ् नामकगिरिमियाय।

सुशीतल-रमणीये पार्वतस्थाने समागत्य स नितराम् आनन्दितो जातः। आसामप्रदेशीय - चीफ्-कमिशनर-"सर-हेनरी-कटन्"-नामको महाशयः स्वामिपादस्यास्वास्थ्य-संवादं विज्ञाय तस्य सन्दर्शनमेव न व्यधात्, अपि तु तत्रत्य-प्रधान-चिकित्सकस्य (सिविलसर्ज्जनस्य) तत्त्वावधाने तस्य चिकित्साव्यवस्थामकरोत्। स्वयमपि दिवापूर्वाह्णे सायं च गत्वा चिकित्सातत्त्वावधानं व्यधात्। बहून्यपि संलापालोचनानि च अभवन्। फलतः स एव कटनसाहेबः स्वामिपादं प्रति विशेषतः समाकृष्टो जातः, तेनानुरुद्धः स्वामिपादः शारीरिकास्वस्थतायां सत्यामपि "भारतीया सभ्यता तस्या आदर्शश्च" विषयमिममालम्ब्य सुगभीर-विचार-पूर्णामेकां मनोरमां वक्तृतां कृत्वा सर्वान् मोहमुग्धानिव अजनयत्। स कटन्साहेब-विषयमाह यत्—"इममेव जनमेकमपश्यम्, यः खलु भारतीयं अभावाभियोगं तत्त्वतो ज्ञात्वा अस्य देशस्य यथार्थं कल्याणमेव कामयते।"

कियन्ति दिनानि शिलाङ्-नगरमध्युष्यापि रोगस्य लवमात्रेणापि उपशमो न जातः। अतः स मईमासस्य मध्यांश एव वेलुडं प्रत्यावर्त्तते स्म। तदैव भग्नस्वास्थ्यमादाय स वेलुडमठस्य प्रासादीय-द्वितले सुरधुनीं निकषा सूर्यकर-समीरातिशयवति गृहे प्रायशः सप्तैव मासान् व्यतीयाय।* स समधिकगमनागमनं कर्तुं नाशक्नोत्। स्फीतयोश्चरणयोः शोथचिह्नं चकास। आयुर्वेदीय-चिकित्सा अभवत्। जलपानं लवणाहारश्च पूर्णरूपेणैव रुद्धौ जातः।

स तु स्वामिपादः चिकित्सानियमान् स्वीकृत्यैवास्ते स्म। मासद्वयादपि अधिककालं सैव चिकित्सा जाता। तया तु कियानुपकारोऽदृश्यत। तादृशीं शारीरिकीमवस्थामादायापि स स्वामिपादः प्रत्यहमुद्याने कार्यमकरोत्। पालितानां गो-छाग-हंस-कुक्कुर-हरिण-सारसानां तत्त्वावधानं कृत्वा तैः सह खेलन्नेव स्वामिपादो अधिकं कालं अनयत्। मटरूनामकछागशिशोः कण्ठे क्षुद्रघण्टां पर्यधापयत्। स हि नृत्यन् स्वामिपादेन सह अभ्रमत्। सोऽपि बालक इव तेन सहाक्रीडत्।...

---

* वेलुडमठस्य द्वितले यस्मिन्नेव गृहे स्वामि-पादोऽवसत् अधुनापि तद्गृहं तादृशरूपेणैव सुरक्षितमास्ते। तत्र तद्व्यवहृत-लौहखट्वा-आसन्दी-प्रभृतीनि उपवेशनोपकरणानि, लिखनोपकरणम्, आनन्ददायकं सुखासनं, वस्त्रादीनि, अलमारीति तद्रक्षणद्रव्यं, "तानपुरा"-"पखावज"-प्रभृतीनि वाद्ययन्त्राणि, ध्यानाय प्रसारितकुथमुपवेशनस्थानं, परिव्राजकजीवनस्य दीर्घा यष्टिः, सुदीर्घ आदर्शः, सर्वाण्येव द्रव्याणि तद्रूपेणैव सुसज्जितानि सन्ति। श्रीरामकृष्णप्रतिमूर्त्तिर्दीर्घा तद्रूपेणैव भित्तौ दोदुल्यमाना आस्ते। महतीं खट्वां कदाचिदेव स व्यवहरति स्म। भूतले क्षुद्रखट्वायां वा अशेत। साम्प्रतं तद्गृहं मन्दिररूपेणैव परिणतं जातम्। प्रत्यहं पुष्पमाल्यैः सज्जितं भवति। देशान्तरीय-यात्रिणो वेलुडमठमभ्येत्य तद्गृहदर्शनं तत्र श्रद्धानिवेदनं च विहितवन्तः।

नवीनो ग्रंथः "एन्साइक्लोपेडिया-ब्रिटानिका"-नामकः क्रीतो जातः। अत्यल्पेष्वेव दिनेषु विपुला एव ते ग्रन्थास्तेनाधीता जाताः। भारतीय-विभिन्नप्रान्तेभ्यः बहवो लोकाः स्वामिपादस्य दर्शनाकांक्षया समागच्छन्। कमपि जनं स न विमुखमकरोत्। अस्मिन्नेव विषये स चिकित्सकस्य नियमान् पूर्णभावेन न प्रत्यपालयत्।

तत्रैव वर्षे स्वामिपादः प्रतिमासु यथाशास्त्रं श्रीश्रीदुर्गादेवी-मपूजयत्। संन्यासिनस्तां पूजां कर्त्तुं नाधिकारिणः। तदर्थं श्रीश्रीसारदा-देवी स्वीयनाम्ना पूजासंकल्पं समादिदेश। पूजायाः पूर्वस्मिन्नहनि श्रीमातरं मठस्थानतिदूरवर्त्तिनि नीलाम्बर-महोदयस्य उद्यानालये भक्ताः समानयन्। तस्या एव उपस्थितौ महता समारोहेण सत्त्वमय-परिस्थितिमध्ये दिनत्रयं पूजा सञ्जाता, "दीयतां भुज्यताम्"-शब्देन मठप्रांगणं मुखरितमभवत्। नौवतस्थानवाद्यस्य मधुरतानेन बृहद्-ढक्काया सुगम्भीरशब्देन च भागीरथीवक्षः प्रकम्पितमेव जातम्। बेलुड-वाली-उत्तरपाडा-दक्षिणेश्वरग्रामाधिवसिनो बहवो ब्राह्मणा निमन्त्रिता अभवन्। दरिद्रनारायणानां सपरितोषभोजनं पूजोत्सवस्य विशिष्टमङ्गकार्यमेव आसीत्।

श्रीश्रीदुर्गापूजावसाने स्वामिपादः प्रतिमासु श्रीश्रीलक्ष्मीपूजां श्रीश्रीश्यामापूजां चाकरोत्, बेलुडमठे श्रीश्रीदुर्गापूजाद्यनुष्ठानफलेन प्राचीनपथावलम्बिनोऽपि बुध्यन्ते स्म, यत् स्वामिमहोदयो न केवलं वचसा, अपि तु मनसा कार्येण च कियान् हिन्दुभावापन्न इति। विरुद्ध-समालोचकानामपि मनसो विद्वेषभावः समूलमपनीतो जातः।

अद्वैतवादी संन्यासी अपि स्वामी शास्त्रविहितविभिन्न-देव-देवीनां मूर्त्तौ पूजोपासनानां तात्त्विकीं मर्यादां समपालयत्। श्रीश्रीगुरुदेव-पदांकमनुसृत्यैव स कार्याण्यकरोत्। स कमपि शास्त्राचारं लोकव्यव-हारञ्च दूरीकर्त्तुं नाविर्भूतः। अपि तु तदखिलं पूर्णमेव विधाय अन्तर्हितः।...

श्रीश्रीश्यामापूजायाः परं स्वामिपादः स्वीयजनन्याः अभिप्राय-मनुसृत्य कालीघट्टे मातुः श्रीश्रीकालिकां द्रष्टुमेवागच्छत्। शैशवे स्वामिनः कस्मिंश्चित् कठिनव्याधिसमये तस्या जननी कालीघट्टे मातरं श्रीश्रीकालिकां पूजयित्वा श्रीमन्दिरे पुत्रं लोटाङ्गं कारयितुं मनसा प्रत्यजानात्। किन्तु प्राक् तत् नानुष्ठितमेवाभवत्। स्वामिशरीरं नितरा-मस्वस्थमालोक्य तस्या जननी पूर्वसंकल्पं स्मरन्ती पुत्रमादाय काली-घट्टमगच्छत्।

स्वामी आदिगंगायां स्नात्वा सार्द्रवस्त्र एव श्रीमन्दिरमभ्येत्य श्रीश्रीमातुः पूजादिकं समाचचार। देव्याः समीपे वारत्रयं लोटाङ्गं कृत्वा सप्तकृत्वः मन्दिरं प्रदक्षिणीकृत्य समीपस्थनाट्यमन्दिरमेत्य हवनमकरोत्। स्वामी श्रीश्रीकालिकां पूजयितुं द्रष्टुञ्च समागत इत्येव-माकर्ण्य बहवो लोकाः मन्दिरे समवेता जाताः।

वेलुडं प्रत्यावृत्यावदत् स्वामी—"इदानीमपि कालीघट्टे कीदृश-मुदारभावमपश्यम्. विलायतदेशात् प्रत्यागतं मां विदित्वापि मन्दिर-मध्ये गमनं न प्रतिविघ्नन्ति ते। परन्तु परम-समादरेण मां मन्दिरं नीत्वा पूजादिकं विधातुं सहायतामेवाकुर्वन्।"

मठं परितो भूमिं मृद्भिः पूरयितुं सन्थालवासिनो जनाः कर्म कुर्वन्ति। स्वामी तान् सर्वान् सन्थालनिवासिनो जनान् हृदयेना-स्निह्यत्, तैश्च सह स्वात्मजनानुरूपं मिलति स्म। तेषां सुखदुःखवार्त्ताम-शृणोच्च। एकदा तु तस्य स्वामि-महोदयस्याभिलाषो जातः, एतान् सपरितोषं भोजयामीति।

सन्थालदलपतिना कृष्णेन सह स एव भोजनप्रस्ताव उत्थापितो जातः। तदैव कृष्णोऽब्रवीत् "युष्माभिः स्पृष्टमन्नादिकमद्य वयं नाश्नीमः, यतो विवाहो जातः। युष्मत्स्पृष्टं लवणं यदि वयमश्नीमस्तदा जाति-च्युता भविष्यामः" इति। स्वामी प्रत्युवाच "लवणं कथं खादिष्यथ?

लवणं विना अन्नव्यञ्जनादिकं पक्त्वा युष्मभ्यं दास्यामः, तेन यूयं तु खादिष्यथ ।" कृष्णस्तु तया व्यवस्थया सम्मतोऽभवत् ।

तदनुसारेणैव स्वामी दधि-मोदक-पूरिका नानाव्यञ्जनानि च निर्माय तैः सपरितोषं सान्थालवासिनः सर्वानेव कर्मकरान् अभोजयत् । ततः प्राह स्वामी, "एते खलु नारायणः । अद्याहं श्रीमते श्रीश्रीनारायणाय दधिमिष्टान्न-भोगमयच्छम् ।"

ततः स्वशिष्यं शरच्चक्रवर्त्तिनमाह, "एतान् साक्षात् नारायणमिवापश्यम् । ईदृशं सरलं मनः, एतादृशमकपटं स्नेहार्द्रभावं न कुत्राप्यपश्यम् ।" ततो मठस्य संन्यासिनो ब्रह्मचारिणश्च लक्ष्यीकृत्यावदत् "...अहो ! देशस्य दरिद्राणां कृते कोऽपि न चिन्तयति, ये खलु जातेर्मेरुदण्डकल्पाः, येषान्तु श्रमेणैवान्नानि जायन्ते, ये खलु मलवाहका निकृष्टत्वेन गणनीयास्ते यदि सकृदेव स्वस्वकार्यात् विरमन्ति, अधुनैव सर्वास्वेव नगरीषु हा-हा-ध्वनिरुत्थास्यति । तान् प्रति सहानुभूतिं प्रदर्श्य, शोके दुःखे च तान् सान्त्वयित्वा तेषां मनः सुस्थं कर्त्तुमिच्छेत् एतादृशः, देशेऽस्मिन् कोऽपि नास्ति ? पश्य, हिन्दूनां सहानुभूतिमनासाद्य माद्राज-प्रदेशे सहस्रशः "पेरिया"-जातीयाः खृष्टधर्मावलम्बिनः संवृत्ताः । एतन्न जातु मन्यतां, केवलमुदरपूर्त्ति-निमित्तं जनाः खृष्टधर्ममवलम्बन्ते । वयं तु दिवानिशं तान् "मा स्पृश", "मा स्पृश" इत्युक्त्वैव अवजानीमः । देशेऽस्मिन् तात ! दयाधर्मस्य स्थानमस्ति किम् ? केवलम् अस्पृश्यताप्रवर्त्तकानां संघस्यैव बलवत्ता । तादृशप्राणशून्यस्यैवाचारस्य वदने सम्मार्जनीप्रहारः क्रियताम् , परञ्च पदाघातो विधेयः । इष्यते, युष्माकं स्पृष्टास्पृष्टिपथस्य बन्धनं छित्वा अधुनैव बहिर्गत्वा समन्तादन्वेषणं करोमि, 'कः कुत्र पतितः, सहायहीनो, दीनः, दारिद्र्यपीड़ितोऽस्ति' इत्येवमुद्घोष्य तान् सर्वान् श्रीरामकृष्णनाम्ना आहूय आनेष्यामीति । एते यदि न दैन्यमुक्ता भवन्ति, तर्हि दुर्गतिनाशिनी माता नैव प्रबोधं लप्स्यते ।..." दिव्येनैव चक्षुषा अहं

पश्यामि—एतेषु मयि च एकमेव परं ब्रह्म, एकैव शक्तिर्महती, केवलं विकासस्यैव न्यूनाधिक्यम् ।

सर्वाङ्गे रक्तसंचालनमन्तरेण कमपि देशं कस्मिन्नपि काले कुत्रापि प्रबोधमायान्तं किमपश्यः ? एकमपि अङ्गं यद्यकर्मण्यं भवति, सबलेष्वपि अन्येषु अङ्गेषु तेन देहेन किमपि महत् कार्यं न सम्पद्यते । एतद् ध्रुवमवेहि ।"

स्वामिन आह्वाने सर्व एव देशः प्रतिध्वनितः प्रबुद्धो जातः । दरिद्रान् दुःख-कवलनात् विमोच्य रक्षितुं, स्पृष्टास्पृष्टिपरिहारं विधाय पतितान् सामाजिक-बन्धनिर्यातनात् पातुं देशवासिनः प्रबुद्धा जाताः । हृताधिकारे मानवान् पुनः प्रतिष्ठापयितुं स्वामी यत् कार्यमारेभे तस्य देहावसानेन सह न तत् विलुप्तं जातम् ।

* * *

आसीत् स्वामिनः मनसि जातीयमैक्यं एकः गभीरतरचिन्ता-विषयः, यतः, तत्रैव पूर्णरूपेण जातीयमभ्युत्थानं निहितमस्ति । तदै-वैक्यं वेदान्तभित्तौ प्रतिष्ठापनीयम् । वेदान्तः शिक्षयति, यत्, यावन्तः प्राणिनो वर्त्तन्ते, ते सर्वे एकात्मनो विभिन्नरूपा एव । साम्प्रतं जातीय-जीवनेषु यदेतावन्तो विभेदप्रकाराः समुत्तिष्ठन्ते, तत् सर्वमेव केवलमात्म-तत्त्वस्य दैनन्दिनकृत्यविधौ समनुशीलनाभावस्यैव फलम् ।

भारतीयजातीयजीवने सर्वेषामैक्यसम्बन्धिनी स्वामिनः विचार-धारा सातिशयं मूल्यमावहति, साम्प्रतिकसामाजिकवैषम्यं, मारात्मक-जातिभेदः, धर्मक्षेत्रसंघर्षस्य शोकावहः परिणामः, उन्नतावनतेषु दुर्लङ्घ्यं व्यवधानं, स्पृष्टास्पृष्टिनीतिप्रभृतीनि जातीयैक्यसम्पादनस्य महान्ति परिपन्थीनि । एतानेव विषयान् वेदान्तानुगप्रयोगेण सुसंस्कृत्य समाजे प्रवर्त्तयितुं स पक्षपाती आसीत् । तन्मतेन सर्वेषामेव भेदाना-मिदमेकमात्रसमाधानम् । एतेनैव धर्मक्षेत्रे विरुद्धानां भावानां समन्वयः,

समाजक्षेत्रे नवीनो लोकतन्त्रवादः, अन्यक्षेत्रेषु च सर्वेषामेव तुल्याधिकारः, समभोगवादश्च नवीनरूपायणेन प्रतिष्ठास्यन्ति।

सर्वमेनं भाववादं व्यावहारिकभूमौ दैनन्दिनकार्येषु सार्वात्म्यवादप्रयोगाय व्यवहर्तुं जातीयतायाः समाजतन्त्रस्य च यदेव चित्रं स्वामिनः मानसपटे अङ्कितं जातमासीत्, तत् सर्वं समासेन स वचोभिः प्रकाशयति स्म—"Vedantic brain and Islamic body" अस्यार्थः—भारतीयजातीयजीवनेषु वेदान्त एव धर्मगतस्य ऐक्यस्य आदर्शो भविष्यति। एवं सामाजिकजीवनेषु साम्यस्य समाधिकारस्य च प्रेरणा इस्लामीयधर्मात् ग्रहीतव्या इति।

अस्माकं हिन्दूनां समाजोऽद्य अवनतेः संकीर्णतायाश्च ईदृशि सोपाने अधो नामितः, यत् तस्य तूर्णमेव परिवर्त्तनं प्रयोजनीयम्। समाजस्य एतादृशी दशा स्वामिनः सविशेषोत्कण्ठाविषय आसीत्। वेदान्तशास्त्रमेव मुक्तस्वरेण उच्चैर्मानवात्मनां महिमानं समुद्घोषयति। तस्यैव वेदान्तस्योत्पत्तिभूमिरेतदेव भारतवर्षम्, किन्त्वस्मिन्नेव भारते मानवाः सर्वतोऽधिका हेया, अवहेलिताः, अवमानिता तथा लांछिताश्च।

स्वामी भगिनीं निवेदितामाह, "यदि देशभक्तिं दिदृक्षसे, तर्हि जापानदेशवासिनः पश्य। यदि च पवित्रतां, तर्हि हिन्दून्। एवञ्च यदि तत्त्वतो मनुष्यत्वं द्रष्टुमिच्छसि, तर्हि यूरोपीयानेव पश्य।

प्रतिमानवं स्वस्वाधिकारे प्रतिष्ठाप्य क्रमशस्तमुन्नीय स देवत्वं गमयितव्यः। तदेव सम्भाव्यते केवलं वेदान्ततत्त्वस्य व्यवहारद्वारा कार्यतः प्रयोगेणैव। तेनैव हिन्दूनां समाजो बलीयान् भविष्यति, हिन्दूधर्मश्च सुप्रतिष्ठामाप्स्यतीति।"

अवदच्च स्वामी "पश्येदं चित्रं, हिन्दूनां सहानुभूतिमनासाद्य माद्राजदेशीयाः सहस्रशः पेरियाजातयः खृष्टधर्मावलम्बिन्यो जाताः। एतन्न जातु मन्तव्यं, यत् स्वोदरपूर्त्तय एव ते खृष्टीयाः संवृत्ताः।

वयन्तु नक्तन्दिवं 'मा स्पृश, मा स्पृश' इत्येवमुक्त्वा तान् दूरतः परित्यजामः।…"एते बहुलक्षसंख्यका एव हिन्दवो धर्मान्तरं परिगृह्णन्ति, तदपि सामाजिकनिर्यातनस्यैव फलमिति स्वामिनः मतम्। तस्मात् हिन्दवो यदि सबलजातिरूपेण परिणमयितव्याः स्युस्तदा हिन्दूसमाज-मध्ये इस्लामिकसाम्यस्य समाधिकारस्य च प्रवर्त्तनमेव तस्य एक उपायः। भविष्यद्हिन्दूसमाजविषये एषैवासीत् स्वामिनः परिकल्पना। किन्तु स बलात् कमपि नियमं आचारञ्च विभज्य नवीनघटने नैवासीत् पक्षपाती।

स्वामी प्राच्ये प्रतीच्ये च देशे यत् सार्वभौमं वेदान्ततत्त्वं प्रचार-यामास तस्य संक्षिप्तपरिचयप्रसंगेनाह, "वेदान्तस्य त्रीण्येव सोपानानि अवस्था वा। द्वैतं, विशिष्टाद्वैतम्, अद्वैतं च। जगति सर्वे एव धर्माः अस्यैव वेदान्ततत्त्वीयसोपानत्रयस्यैवान्तर्गताः। अर्थात् सर्व एव धर्मा वैदान्तिकधर्मतत्त्वस्य शाखाविशेषभूताः। शाखानिवहो यथा मूलात् वृक्षाच्च सम्भूतः, तथा जगतः सर्व एव धर्मा वेदान्तमूलादेव बहिर्भूताः। द्वैतवाद एव यूरोपीयाणां सेमिटिकजातीनां च भावस्य मध्यतः खृष्टीयधर्मरूपेण मुसलिमधर्मरूपेण च परिणतः। वेदान्तस्य तात्त्विकाद्वैतवादो योगानुभूतेराकृत्या बौद्धधर्मनाम्ना अभिहितः। एते पुनस्त्रयो मतवादा एव प्रयोजनानुसारेणार्यजातिषु विभिन्नसाधना-नुष्ठानपद्धतिं विस्तार्य हिन्दूधर्मरूपेणैव पर्यणमन्। तस्मात् जगतः सर्वेषामेव धर्माणां सामग्रिकस्वरूप एव वेदान्तधर्मः। द्वैतं, विशिष्टा-द्वैतं, अद्वैतं च मतं समतीत्य कस्यापि धर्मस्य सम्भूतिर्नैव सम्भाव्यते।"

श्रीश्रीरामकृष्णदेवो विभिन्नधर्मस्य साधनाय सर्वधर्मसमन्वयेन, "यावन्ति मतानि, तावन्त एव पन्थान" इति मतप्रतिष्ठया धर्मेषु सर्वैक्यस्य काञ्चनाध्यात्मिकीं भित्तिं समस्थापयत्।

स्वामी कस्मिंश्चित् पत्रेऽलिखत्, "वयं मानवान् एतादृशं किञ्चित् स्थानं नेतुमिच्छामः, यत्र वेदा न सन्ति, बाइबिलं नास्ति,

कोराणमपि नास्ति। तथापि आदर्शस्वरूपे तत्र स्थाने गन्तव्ये वेद-बाइबिल-कोराणानां सामञ्जस्यमेव प्रयोजनीयम्। मानवास्तु शिक्षणीया एव, यत् नानाधर्मास्तु तस्यैवाद्वितीयस्यैकस्य शाश्वताध्यात्मिकसत्य-स्वरूपस्य विभिन्नमभिव्यक्तिमात्रम्। तस्यैव सत्यस्य नाम विश्वस्य परमा एकता। य एव पन्था यस्याभिलषितः तेनैव पथा स सत्याभिमुखं अग्रेसरिष्यति। अस्माकं मातृभूमये हिन्दूधर्मस्य इस्लामधर्मस्य च, एतयोर्द्वयोर्महतोर्भावयोः संयोगः। वैदान्तिकमस्तिष्कं, इस्लामीया संहतिश्च एतयोर्द्वयोरुपरि देशस्य सार्वात्म्योन्नतेरेकैवाशा देदीप्यते। मानसनेत्रेणैवाहं स्पष्टतो द्रष्टुं शक्तो यत् साम्प्रतिकविश्वृंखलतायाः संघर्षस्य च मध्यत एव भविष्यत्कालस्य पूर्णं भारतं वैदान्तिकमनो-वृत्तिं इस्लामीयदेहं च समादाय अपराजेयमहिमानमासाद्य समुत्तिष्ठते।"

सर्वास्वेव भूमिषु वेदान्तस्य प्रयोगोपर्येव भारतीयचरमाभ्युदयो निर्भरतां विधत्ते।···

१८०१ खृष्टाब्दस्य अन्तिमे भागे कलिकत्तामहानगर्यां जातीय-महासमितेरधिवेशनमुपलक्ष्य सर्वप्रान्तेभ्यः अनेके महोदयाः स्वामिनं साक्षात्कर्तुमुपागता आसन्। स्वामिना तु तैः सह यावन्तो देश-हितकराः संलापा गठनात्मककार्यं मूलीकृत्याक्रियन्त तत्रादर्शवेद-विद्यालयस्थापनमन्यतममासीत्।

तस्मिन्नेव वेदविद्यालये विशिष्टोपाध्यायाः प्राचार्याः प्राचीनार्य-ऋषीणामादर्शमनुसृत्यैव वेदोपनिषदादिविभिन्नधर्मशास्त्राणि, आर्य-संस्कृतिं, संस्कृतसाहित्यञ्च प्राध्यापयिष्यन्ति। तत्राध्ययनसमापनान्ते कृतिनश्छात्रा देशाद्देशान्तरं औपनिषदधर्ममेव प्रचारयिष्यन्तीति।

स्वामि-परिकल्पितवेदविद्याभवनमद्यापि पूर्णाङ्गरूपेण नैव संस्था-पितं जातम्। किन्तु वेलुडमठे, भवानीपुरस्थगदाधराश्रमे, एवमन्यान्य-विभिन्नशाखाकेन्द्रेषु च वेदोपनिषदादिविभिन्नधर्म-दर्शन-शास्त्रा-ध्यापनाय योग्यतमा अध्यापकाः नियुक्ता जाताः।

जाह्नवीतीरे कलिकत्तासन्निकटे महिलानां कृते बेलुडमठ-सदृशस्य कस्यचित् मठस्य संस्थापनेच्छा स्वामिन आसीत्। "स एव मठो गार्गीमैत्रेयी-सदृशीनां, किं बहुना ततोऽप्युच्चस्तरीय-भाव-सम्पन्नानां नारीणामाकरस्वरूप एव भविष्यति। तस्यैव महिला-मठस्य संन्यासिन्योऽपि एषणात्रयं विहाय "आत्मनो मोक्षार्थं जगद्धिताय च" परकल्याणव्रते जीवनमुत्सृज्य त्याग-वैराग्य-तपस्या-दिभिः, कायेन मनसा वाचा च पवित्रतायाः सेवाधर्मस्य च आदर्शेन स्वस्वजीवनं निर्माय देशहितकरकर्मसु विशेषतो यथार्थ-स्त्रीशिक्षा-विस्तारे स्वात्मानं नियोजयिष्यन्ति।"

यद्यपि स्वामी तमेव मठं प्रतिष्ठापयितुं नाशक्नोत्। तथापि १९५४ खृष्टाब्दे बेलुडस्थ-श्रीश्रीरामकृष्णमठमिशनयोः अध्यक्षाणां यत्नेन जाह्नव्याः पूर्वकूले दक्षिणेश्वरीयकालीमन्दिरस्यानतिदूरे "श्रीसारदा-मठ"-नाम्ना कश्चन महिलामठः स्थापितो जातः। तत्र च "सारदा-मिशन"-नामकः रेजिस्ट्रीकृतः कश्चन तन्मठपरिचालकसंघश्च निर्णीतो जातः। सम्प्रति तद्युग्मप्रतिष्ठानस्य संन्यासिनीगणः ब्रह्म-चारिणीगणश्च स्त्रीशिक्षा-विस्तार-कर्मणि, अन्येष्वपि नारीकल्याण-करकार्येषु व्रतिनौ जातौ।

* * *

१९०१ खृष्टाब्दीय-शेषांशे जापानदेशीयौ द्वौ महान्तौ नागरिकौ स्वामिना सह साक्षात्कर्त्तुमायातौ। तयोरेकः तत्रत्यबौद्धमठस्याध्यक्षः नाम्ना रेवरेण्ड ओदा, शिष्टस्तु जापानदेशीयो विख्याततनामा दार्शनिकः शिल्पी च नाम्ना मिस्टर ओकाकुरा। तौ तु जापानदेशे परवर्तिनि परिकल्पिते धर्मसम्मेलने समुपस्थितेरामन्त्रणं स्वामिनं विज्ञापयितु-मागतौ। तयोरान्तरे समामन्त्रणे मुग्धचित्तः स्वामी तन्निमन्त्रणं स्वीचकार। मि० ओकाकुरा स्वामिनः सङ्गमेव लब्धुं बेलुडमठमध्य-वसत्। तयोरन्तरङ्गभावोऽतीव हृद्यो मर्मस्पर्शी चाभवत्।

अन्योऽन्यस्मिन्नेतादृशं स्नेहानुरक्तं आसीत्, मनसि प्रतिभाति स्म यत् द्वावेव सोदरौ सुदीर्घदिनात् परं पृथिव्या एकस्मात् प्रान्तभागात् अन्यप्रान्तभागमुपेत्य एकत्र मिलितौ। तयोर्भगवतस्तथागतस्य बौद्ध-धर्मस्य च विषये गुरुत्वपूर्णमालोचनमभवत्। ओकाकुरा-नाम्नो जापानीयस्य विशेषानुरोधेन स्वामी बोधगयां गन्तुं सहमतः सन् १९०२ खृष्टजानवरीमास एव तेन सह तत्रागच्छत्। ततो द्वावेव तौ वाराणसीमागच्छताम्। पूर्वव्यवस्थानुसारेण स्वामी काश्यां "गोपाललाल"-नाम-निकेतनेऽवातिष्ठत। मि० ओकोकुरा स्वामिसकाशात् अनुमतिमादाय भारतीय-विभिन्न-बौद्ध-तीर्थ-दर्शनाय अगच्छत्। स्वामी तु तेन सह कञ्चन साधुं पर्यटनाभिज्ञं मार्गप्रदर्शकरूपेण व्यवस्थापयामास।

स्वामिनः समागमनेन काशीधामनि सर्वत्र चांचल्यं जातम्। प्रतिदिनं बहवः पण्डिताः, विद्वांसो गृहस्थाः संन्यासिनश्च तेन सह साक्षात्-कर्त्तुं समायाताः। भिङ्गादेशीय-महाराजः कञ्चन मठं संस्थापयितुं स्वामिनमनुरुरोध। परं च कियन्तमप्यर्थं तत्कार्याय साहाय्यरूपेण दातुमपि तस्मै प्रतिशुश्रुवे।*

स्वामिप्रचारित-दरिद्र-नारायण-सेवायाः आदर्शेन केचन युवानः काश्यां कञ्चित् क्षुद्रमार्त्तसेवाकेन्द्रं समस्थापयत्। तत्र च सेवकाः पथि गंगातीरे च घट्टेऽपि पतितं परित्यक्तं दुःस्थं पीड़ितं च जनमानीय औषधपथ्यादिभिः सयत्नं तानसेवन्त। स्वामिनः आगमनसंवाद-

---

* स्वामी भिङ्गाराजप्रस्तावेन सम्मतो भूत्वा वेलुडमठं प्रत्यावृत्य तस्यान्यतमगुरुभ्रातरं स्वामिशिवानन्दं काश्यां मठस्थापनार्थं प्रहितवान्। स्वामी शिवानन्दः काशीमागत्य १९०२ ईशवीयवर्षे स्वामिनः देहत्यागस्याव्यवहित-पूर्वमेव काशीस्थं वर्तमान-श्रीरामकृष्ण-अद्वैताश्रमं प्रतिष्ठाप्य स्वामिनः अन्तिममभिलाषं पूर्णमकरोत्।

मवाप्य हृष्टस्सन् स एव युवकसंघस्तेन सह साक्षात्कृत्य तेषां क्षोदीयसीं चेष्टां तद्वार्त्तां च विज्ञाप्य स्वामिनमतोषयत्। स्वामी तु तदाकर्ण्यैव सविशेषमानन्दं प्रकाशयामास। उवाच च "वत्साः! एष एव प्रकृतो मानवधर्मः, यूयं सत्यमेव पन्थानमनुसृत्य गच्छथ। आशीर्वादं करोमि, श्रीभगवान् युष्माकं सहायो भवतु। साहसेन वक्षःस्थलं परिपूर्य स्थिराः सन्तोऽग्रेसरत। यूयं दरिद्रा इति मा स्म हताशा भवत। अर्था आगमिष्यन्ति। युष्माकमस्यां क्षुद्रानुष्ठानभित्तौ भविष्यत्काले एतादृशं महत् कार्यं सम्पत्स्यते, यस्य यूयं कल्पनामपि कर्त्तुं न शक्ताः।"

स्वामी तस्यैव प्रतिष्ठानस्य Poor Men's Relief Association (दरिद्रदुःखमोचनसंघः)-नाम परिवर्त्य "रामकृष्ण होम अव् सर्विस्" इति नवीनमेव नाम कृतवान्। यूनामुत्साहविवृद्धयै तेषामेव प्राथमिक-कार्यविवरणे साधारणजनसकाशे स साहाय्यरूपार्थ-प्रार्थनया एकमावेदनपत्रमप्यलिखत्।

स्वामिस्नेहपुष्टं तत्सेवानिकेतनं साम्प्रतं "रामकृष्ण मिशन होम अव् सर्विस्" इति नाम्ना समस्ते उत्तरप्रदेशे एकः श्रेष्ठः सेवाश्रमो जातः।

वाराणस्याः सलिल-समीरण-प्रभावेण स्वामिनः स्वास्थ्यं कियदेवोन्नतमभवत्। श्रीरामकृष्णदेवस्य जन्मोत्सवदिनात् कियत् पूर्वं स बेलुडमठं प्रत्यावर्त्तत। प्रत्यावर्त्तनानुपदमेव स सविशेषमस्वस्थः जातः। चरणौ स्फीतौ जातौ, सर्वस्मिन्नेवांगे जलसंचारो जातः। एकमपि पदं गन्तुं नाशक्नोत्। स हि शय्यामाश्रयितुं विवशोऽभवत्। उत्सवायोजनं प्रवृत्तम्। किन्तु स्वामिनः नितरामस्वास्थ्यवशात् मठवासिनां केषामपि मनसि नानन्दो स्थानं लेभे।

साधारणोत्सव-दिवसे यावद् दिनमानमवर्द्धत, मठप्राङ्गणमुत्सवकोलाहलेन मुखरितमेव जातम्। प्रायस्त्रिंशत्-सहस्रमितानां

लोकानां समागमो जातः। तत्र बहवो नरा नार्यश्च अन्नप्रसादभोजन-रता;। भूयो भूयो महाराजस्य श्रीगुरोः ( श्रीरामकृष्णदेवस्य ) जय-ध्वनिरुदतिष्ठत्। स्वामी पुनर्नीरवमवस्थानं न सहते स्म। अतिकृच्छ्रेण गवाक्षस्य लौहदण्डमाश्रित्य दण्डायमानो जातः। परं च विह्वलनयनः समवेतभक्तमण्डलमभिदृष्टिं निक्षिप्य समवतस्थे। अधिककालं तथा अवस्थातुं न शशाक। अहो! श्रीरामकृष्णस्य नाम्नैव एतावतां जनानां समागमो जात इति विचिन्त्य शय्यामधिशेते स्म।

सेवकस्तु तस्य शिरसि समीर-संचालनाय प्रवृत्तः।...अपराह्णे लोकसङ्गमेलनं यदा शिथिलितं जातं तदा तस्य गृहगवाक्ष उन्मोचितो जातः। स हि स्वगृहमध्युष्यैव सर्वं उत्सवस्य अन्तिमं दृश्यं द्रष्टुं प्रवृत्तः।

—०-०—

अनेनैव विधिना मार्चाख्यो मासो व्यतीतो जातः। इतोऽधिकं मासत्रयं सोऽस्मिन् मर्त्यधाम्नि न्यवसत्। कदापि शरीरं स्वस्थं बभूव कदापि वा अस्वास्थ्यं वर्द्धितमभवत्। स रोगस्य समुपहितावस्थायाम् भारतस्य पुनर्जागरणचिन्तामकरोत्। सा चिन्ता सदैव तस्य मनो व्याकुलितं चकार। १८६५ खृष्टाब्दे एकादशे जानवारीदिने शिकागोनगरात् स्वामी कञ्चन माद्राजप्रदेशीयं शिष्यमलिखत्—"···यावत्कालं मम देहविमोक्षो न जातस्तावत् सदैव कर्माणि कुर्वन्नेव चरिष्यामि। एवञ्च मृत्योः परमपि जगत्कल्याणाय कार्यं करिष्यामि।···सुमहदपि कार्यजातं केवलं स्वार्थत्यागेनैव सम्पद्यते।" उत्तिष्ठत, जाग्रत इति।*

स्वामिनः कार्यं चिन्ताजगत्येव प्रसारितमासीत्। स जगत्कल्याणाय यानेव विचारप्रवाहानरक्षत्, ते फलप्रसवमन्तरेण मुधा न नंक्ष्यन्ति। परवर्त्तिनो जनाः स्वामिनः भावेन अनुप्राणिता एव तदीयमारब्धं कार्यजातं स्वशिरस्सु एवारोपयिष्यन्ति। मृत्योः परमपि तदीयः अलक्ष्य-

---

* स्थूलदेहत्यागात् परमपि स जगत्कल्याणायैव सूक्ष्मदेहेन कार्यं करोति। एतावतीं महतीं जीव-कल्याणप्रेरणां श्रीविवेकानन्दस्य प्राणेषु श्रीश्रीरामकृष्णदेव एव प्रबुद्धामकरोत्। असावेव काशीपुरस्थित उद्याने देहं संसारञ्च विस्मृत्य निर्विकल्पे समाधौ निमज्जनस्य प्रार्थनां श्रीश्रीरामकृष्णदेवचरणपद्मे कृतवान्।

हस्तः विभिन्नदेशेषु परश्शतप्राणेषु दीपवर्त्तिकां प्रज्वालयिष्यति। चिरमेव तदीयकर्म प्रचलिष्यति।*

महाप्रस्थानाय स्वामी प्रस्तुतोऽभवत्। किन्तु तदा नितरामस्वास्थ्यकालेऽपि स स्वीयगुरुपदमनुसृत्य कानपि प्रार्थिनो न पराङ्मुखानकार्षीत्। जीवनस्यान्तिमं दिनं यावत् स लोकानशिक्षयत्। स्वीयप्राणेषु प्रज्वलितां वह्निशिखां स बहुष्वेव प्राणेषु संक्रामितां चकार। स खल्ववदत्—"यदि देशवासिनां मनांसि प्रबोधयितुं शतशो मरणयातना अपि भोक्तव्या एव स्युस्तदापि तत्र नाहं पराङ्मुखः स्याम्।"

---

* १९२१ खृष्टाब्दे स्वामिनः जन्मोत्सवदिवसे सस्त्रीको महात्मा गान्धिः, पण्डितो मोतीलालनेहरू, मिस्टरमोहम्मदआलीप्रभृतयः कतिसहकर्मिसमभिव्याहारेण वेलुडमठमालोकयितुमागच्छन्। ते खलु स्वामिनः निवासगृहस्थितानि तद्व्यवहृत-द्रव्याणि सश्रद्धमालोकयन्। जनसमूहानां विशेषाग्रहेण महात्मा गान्धिः स्वामिनः गृहपार्श्वस्थिताद् अलिन्दादेव हिन्दी-भाषया संक्षिप्तामेकां वक्तृतामकरोत्। तत्र कथा-प्रसङ्गेन एव सोऽवदत्—"अहमत्र असहयोगस्यान्दोलनं चरखाकार्यं वा प्रचारयितुं नागतः। स्वामिनो विवेकानन्दस्य जन्मदिने तस्य पुण्यस्मृतिमुद्दिश्य श्रद्धामेव ज्ञापयितुमहमत्र समागतवान्। स्वामिनः पुस्तकावलीमहमाद्यन्तं सर्वामेव यथायथं समनोयोगमधीतवान्। तत्फलेन पूर्वं स्वदेशं प्रति यादृशौ मम प्रेम स्नेहश्च आस्तां, तौ अधिकतरमुपचितौ जातौ।...युवकान् प्रति एष एव ममानुरोधः, स्वामिविवेकानन्दो यदेव स्थानमधिवसति स्म, यत्र च देहं तत्याज तत्स्थानस्य भावधारां अन्ततः कियत्परिमितामपि न संगृह्य अद्य रिक्तहस्तेन मा प्रत्यावर्त्तध्वम्।"

स्वामिनः समसामयिकानां परवर्त्तिनां वा भारतीय-मुखोज्ज्वलकारिभारताधिवासिनामुपरि तस्य जीवनस्य तदीयोपदेशानाञ्च प्रभावः कियानपतत् तत् महात्मनो गान्धेः भाषणेन प्रकाशितं जातम्।

क्रमशो जगद्व्यवहारकार्येषु स सम्यगुदास्ते स्म ; एवं सुगभीर-ध्यानेषु निमग्नोऽभवत्। कर्मसम्पादनाय मन्त्रणार्थं पृष्टोऽपि स प्राह स्म, "एतेषु कर्मसु नाहं स्वशिरश्चिन्ताकुलितं कर्त्तुमिच्छुः।" तदीयामन्तर्मुखतामालोक्य गुरुभ्रातरः शङ्किता अभवन्। श्रीश्रीराम-कृष्णदेवस्यैव वचनं तेषां स्मृतिपथमागतम्—"असौ यदा स्वस्वरूपं ज्ञास्यति तदैव देहमिमं हास्यतीति।"

एकदा कश्चित् गुरुभ्राता तमपृच्छत् "भोः स्वामिन्! को भवान् (किं—स्वरूपं भवत इति)? तत् किमवबोद्धुं समर्थो भवान्?" तदैव स सुगम्भीरस्वरं प्रत्युवाच, "अथ किम्। अहं ज्ञातुमीशोऽस्मि"। श्रीरामकृष्णदेवः यदेवानुभूतिद्वारं कुञ्जिकया समवरुध्य एतावन्तं कालमरक्षत्, साम्प्रतं (स्वामिनः) मुक्तिकालमायान्तमवेत्य तामेव कुञ्जिकां तूर्णं निरर्गलममोचयत्।

देहत्यागस्य सप्ताहात् पूर्वं स्वामी कञ्चन शिष्यं पञ्जिकामानेतु-मादिशत्। स तु समनोयोगं पञ्जिकायाः पत्राणि पुनः पुनरावृत्य द्रष्टुमारेभे। मनसि प्रतिभाति यत् कस्मैचित् कार्यविशेषाय शुभदिनं स निरूपयति। ततः स्वगृहे एव तां पञ्जिकां समस्थापयत्। तस्य देहावसानात् परं पञ्जिकावलोकनतात्पर्यं सर्वे बुबुधिरे।

देहत्यागस्य दिनत्रयात् पूर्वमपराह्णे मठ-प्रान्तर-भूमौ भ्रमन् वेलुड-मठस्थितं साम्प्रतिकं स्वामिनः समाधि-मन्दिर-स्थानं प्रदर्श्य तेन उक्तम् यत्, "मम शरीरं जीवरहितं सत् अत्रैव सत्कृतं करिष्यथ" इति।

शिष्टानि कतिदिनानि स अतीव स्वस्थः प्रफुल्लमनाश्चादृश्यत। देहोऽपि तस्य ज्योतिःपूर्ण एवाभवत्। कोऽपि नावबोद्धुमीष्टे, यत् अन्तिमदिनमेतावदन्तिकस्थमिति।

१९०२ खृष्टाब्दीयजुलाईमासस्य चतुर्थदिने शुक्रवासरे सोऽतीव-प्रत्यूषे शय्यां तत्यज। प्रातः चायपानसमये गुरुभ्रातृभिः सह कियतः संलापान् कृतवान्। कति पुरातनीयाः कथाः! दिवा अष्टवादन-

समये स देवगृहं प्रविश्य द्वारगवाक्षादीन्यवरुध्य गृहमध्यादेवार्गलं निरुध्य ध्यानस्थोऽभवत् । एकादशवादनं यावत् गभीरध्यानमग्न आसीत् । एतावन्तमधिकं कालं ध्यानमग्नं तमालोक्य गुरुभ्रातरो विशेषतश्चञ्चलमनसो जाताः । कञ्चित् श्यामासङ्गीतं गायन् स मन्दिराद्‌वतीर्य्य चत्वरभूमावेव धीरमभ्रमत् । तदा तन्मध्ये एकमद्भुतं भावान्तरमजायत । स्वामी प्रेमानन्दः समीप एवासीत् । सोऽशृणोत् यत् स्वामी अव्यक्तस्वरमाह—"यद्यन्यः कोऽपि एको विवेकानन्दः अस्थास्यत्, तदा स बोद्धुमीशोऽभविष्यत् विवेकानन्दोऽयं किं कुर्वन्नन्तर्हितो जातः" इति । आकर्ण्य तत् प्रेमानन्दो सविशेषं विचलितोऽभवत् । किन्तु स्वामिनः गंभीरभावमालोक्य स किमपि न प्रष्टं साहसिको जातः ।

शारीरिकीमस्वस्थतामवेक्ष्य स्वामिनः आहारस्य पृथक् सविशेषव्यवस्था कृता आसीत् । किन्तु तस्मिन्नेव दिने स सर्वैः सह समुपविश्य सानन्दं भुङ्क्ते स्म । परन्तु अवदत, "शरीरं मे सुष्ठु स्वस्थमेव वर्त्तते" इति । भोजनात् परं क्षणं विश्रम्यैव स एकवादनसमये ब्रह्मचारिणो व्याकरणमध्यापयितुं प्रवृत्तः । धारावाहिकक्रमेण घण्टात्रयमध्यापयामास ।

अपराह्णे स्वामिप्रेमानन्दमादाय वेलुडस्थितविपणिं यावत् परिभ्रमन् समागतः । अवदत् च, "शरीरमिदानीं मे स्वच्छन्दम् ।" वेदविद्यालयस्थापनसम्बन्धे अनेका आलोचना अभवन् ।

प्रेमानन्दस्तु अपृच्छत् "वेदपाठेन कस्तावदुपकारो भवितेति ?" स्वामी प्रत्युवाच "अन्यः कोऽप्युपकारो यदि नैव भविष्यति, न भवतु, किन्तु एते खलु कुसंस्कारास्तु समपनीता एव भवितारः ।"

सन्ध्यायाः प्राक् मठं प्रत्यावृत्य सर्वैः सह स्वामी कियत्क्षणं यावत् नानासंलापान् कृतवान् । सन्ध्याकालः, सप्तवादनं जातम् । आरार्तिकस्य घण्टानादः श्रूयते । स्वामी स्वस्यैव द्वितलस्थगृहमभ्येत्य

गंगामालोकयन् समवातिष्ठत । सम्मुखे पूतसलिलाया जाह्नव्याः पूर्वतटे श्रीरामकृष्णदेवदेहस्य यत्रैव दाहसंस्कारः जातः तदेव श्मशानम् । सेवकं ब्रह्मचारिणं बहिरुपविश्य जपितुमादिश्य स्वयमपि हस्तेन जपमालामादाय पूर्वाभिमुखः जपप्रवृत्तोऽभवत् । प्रायशः मुहूर्त्तात् परं ब्रह्मचारिणमाहूय गृहस्य द्वारगवाक्षादीन्युन्मोच्य स्वशिरसि व्यजनं कर्तुमादिदेश । स हि हस्ते जपमालामादाय वामपार्श्वेन शेते स्म । एतत् प्रतिभासते, यत् स ध्याने मग्नो जातः । मुहूर्त्तात् परं स पार्श्वपरिवर्तनमकरोत् । तदापि स जपमालाहस्त एवासीत् । एकं सुदीर्घं निःश्वस्य स्थिरो जातः । कश्चनाव्यक्तः सकरुणः शब्दोऽभवत् । हस्तश्च कम्पितो जातः । अन्त्येनैकेन सुदीर्घनिःश्वासत्यागेन सहैव तस्य शिर एकस्मिन्नेव पार्श्वे अवसन्नं संवृत्तम् । ··भ्रुवोर्मध्ये निबद्धा दृष्टिरास्ते स्म । मुखमण्डले स्वर्गीयमेव ज्योतिरदीप्यत । तदा रजन्या दशनिमेषाधिकं नवमवादनं जातम् ।*

सेवको ब्रह्मचारी धावित्वा एतमेव संवादं विज्ञापयितुं निम्नतलं जगाम । तदानीमेव प्रसादभोजनाय घण्टाध्वनिरुदतिष्ठत् । द्रुतमेव सर्वे तत्र समागच्छन् । नाड़ी न समुपलभ्यते । श्रीरामकृष्णदेवस्य नामकीर्त्तनं समारब्धम् । जाह्नव्यास्तीरान्तरे चिकित्सकमाह्वयितुं जनः प्रेरितः । कलिकत्तानगर्यामपि गुरुभ्रातॄन् निकषा स एव संवादः प्रेरितो जातः ।

रजन्यां दशवादनात् परं चिकित्सकः समेत्य कृत्रिमैरुपायैश्चैतन्यं

---

* स्वामी सारदानन्दस्तु १९०२ ईसवीयस्य जुलाईमासीयचतुर्विंशतितमे दिने सान्फ्रांसिस्को-वेदान्त-समितेः सभापति-डाक्टर-लोगनमेकेन पत्रेणैव व्यज्ञापयत्, तेनावगम्यते—स्वामी जुलाईमासस्य चतुर्थेऽहनि शुक्रवासरे रात्रौ दशनिमेषाधिक-नवमवादनसमये भौतं देहं तत्याज (मायावती-अद्वैताश्रम-प्रकाशितायाः स्वामिनः आंग्लभाषानिबद्धायाः जीवन्याः चतुर्थसंस्करणस्य ७६८ पृष्ठं द्रष्टव्यम् ) ।

सम्पादयितुं वहुशोऽचेष्टत। किमपि न फलं दृष्टम्। मध्यरात्रेः परं चिकित्सकोऽवदत्, "स्वामी महासमाधिमविन्दत।"

प्रातः बहूनामेव जनानां मठे सम्मेलनं जातम्। नरा नार्यश्च स्वामिनः अन्तिमदर्शनार्थं सङ्घश एव मठे समागताः। द्विवाद्विवादनात् परं स्वामिनः पूतदेहः खट्वोपरि निम्नभूमौ अवतारितो जातः। अन्तिमकृत्यादिकं यथाविधि निर्वर्त्य स्वामिनः देहं नवीनेनैव गैरिकवसनेन पुष्पमाल्यादिभिश्च सज्जीकृत्य शङ्खघण्टाध्वनिं कुर्वन्त एव भक्ताः कर्पूरैर्धूपैश्च तस्य आरार्तिक्यं चक्रुः। गुरुभ्रातरः संन्यासिनो ब्रह्मचारिणश्च शिष्यवृन्दं एवमन्ये च भक्ता नरा नार्यश्च स्वामिनः शरीरं प्रदक्षिणीकृत्य तदीयपादपूजामकुर्वन्। ततः श्रीगुरुमहाराजस्य स्वामिनः च जयध्वनिभिः सह शोभायात्रां कुर्वन्तो जनाः मठस्य पूर्वदक्षिणदिशि, बिल्ववृक्षस्य पार्श्वे, तेनैव निरूपिते स्थाने जाह्नवीकूले, तदीयदेहं समानीय चन्दनकाष्ठैः सुसज्जितचितायां समारोप्य, वैदिकमन्त्रपाठं कुर्वन्तो नानास्तवादिकं पठन्तः अन्त्येष्टिक्रियां समापयामासुः।*

---

* १९०२ ईसवीयस्य जुलाईमासस्य चतुर्थेऽहनि स्वामिचरणः शरीरं जहौ। तदा तस्य वयोमानं पञ्चमासाधिकत्रयोविंशतिदिनाधिकानि ऊनचत्वारिंशद् वर्षाण्येव। ढाकानगरे एकदा स प्राह; "यद्यधिकं स्यात्, इतः परं वर्षमेकं स्थास्यामीति।" समयान्तरे स अवदत्—"चत्वारिंशतः परं न स्थास्यामीति।" श्रीअमरनाथ-शिवस्तस्मै स्वेच्छामरणवरमददात्।

परेद्युः स्वामिनः भस्मीकृतदेहस्य सञ्चितान्यस्थीनि भविष्यद्-वंशधरेभ्य एव सुरक्षितानि। तदेव भस्मास्थि नित्यमेव वेलुडमठे समर्चितमस्ति। स्वामिचरणस्य चिताशय्याया उपरिष्टादेव तस्य समाधिमन्दिरं निर्मीयते स्म।

स्वामी रामकृष्णानन्दस्तु माद्राजदेशे तस्यामेव रात्रौ ध्यानसमये स्वामिनः परिचितं कण्ठस्वरमशृणोत्; स (स्वामी) प्राह "भोः शशिन्, शशिन्! शरीरं तदहं निष्ठीवनमिव दूरं न्यक्षिपमिति।"

विवेकानन्दस्य आत्मा देहपञ्जरात् मुक्तः असीमचिन्मयपरमात्मना सहैव एकीभूतो जातः। स खलु जगतामभ्युदयाय वेदान्तस्यैव वाणीं निरदिशत्—मानवात्मनां अमरत्वं निर्विशेषैकत्वं चेति।

भारतवासिनः प्रति सोऽवदत्, "अयि! भारतवासिनः! मा जातु विस्मर्यन्ताम्—युष्माकं नारीणां आदर्शभूताः, सीता, सावित्री, दमयन्ती च। मा जातु विस्मर्यताम्—तवैवोपास्यः सर्वत्यागी शङ्कर उमानाथः! तव विवाहः, त्वदीयं धनं, त्वदीयं जीवनं, केवलमिन्द्रिय-सुखाय न, स्वीयव्यक्तिगतसुखाय च न भवन्ति। मा जातु विस्मर्यताम्—जन्मनः प्रभृति त्वं मातृ-तृप्त्यर्थमेव बलिरूपेणोत्सृष्टः।

मा जातु विस्मरत—नीचजातयः, मूर्खा दरिद्रा अज्ञाश्चर्मकारा, मलपरिष्कारका अपि तवैव भ्रातरः। तवैव रक्तं तेषु। अयि! वीराः! साहसमवलम्बध्वम्। साहङ्कारमुद्घोष्यताम् अहं भारतवासी एव। ते खलु भारतवासिनो ममैव भ्रातरः।

उच्चैः कथयत, मूर्खा भारतवासिनः, दीना हि भारतवासिनः, ब्राह्मणाश्चाण्डालाश्च भारतवासिनः, सर्व एव ममैव भ्रातरः। भारत-वासिनो मम प्राणाः, भारतीयदेवा देव्यश्च मम ईश्वराः। भारतीयः समाजो मे शिशुशय्या, मम यौवनस्योपवनं, मम वार्द्धक्यस्य वाराणसी एव।

उच्चैर्ब्रूत, "भारतीया मृत्तिका मम स्वर्गः, भारतीयं कल्याणं ममैव कल्याणम्। एवं नक्तन्दिवं पार्थयध्वं—हे गौरीनाथ! अयि

---

स्वामी विज्ञानानन्दस्तु तस्यामेव रजन्यां—"इलाहाबादे" "ब्रह्मवादि-क्लाब" इति समितेर्देवगृहमध्ये ध्यानस्थ आसीत्। ध्यानावस्थायां तस्य दर्शनं जातं, यत् श्रीठाकुररामकृष्णदेवस्योत्संगे एव स्वामी सुसमासीनो जातः।··· परेद्युस्तारवार्त्तायोगेन वेलुडमठात् स्वामिनः देहत्यागवृत्तमवगम्य समवबोध जातस्तद्दर्शनस्य किं तात्पर्य्यम् इति।

जगदम्बे ! सत्यं मनुष्यत्वं मे देहि ! मातः ! मम दुर्बलतां, मम कापुरुषत्वं दूरमपनय। मां यथार्थं मानुषमाधेहि इति।"

---

ॐ मधु वाता ऋतायते, मधु क्षरन्ति सिन्धवः।
माध्वीर्नः सन्त्वोषधीः ॥१॥
मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः।
मधु द्यौरस्तु नः पिता ॥२॥
मधुमान्नो वनस्पतिर्मधुमान् अस्तु सूर्यः।
माध्वीर्गावो भवन्तु नः ॥३॥
शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा।
शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥४॥
—ऋग्वेदः १।६०।६-६

ॐ शान्तिः शान्तिः शान्तिः।

# स्वामि-विवेकानन्दजीवनस्य संक्षिप्तघटनापञ्जिका

१८६३ ई० जनवरी १२, पौषसंक्रान्तिः, कृष्णा सप्तमी तिथिः, सोमवारः सूर्योदयस्य किञ्चिदनन्तरं ( ६-४९ मिनट ) कलिकत्तायां जन्म ।

१८८१ ई० नवम्बरमासे ( कलिकत्ता ) सिमुलिया-विभागे सुरेन्द्र-नाथमित्रस्य भवने श्रीरामकृष्णदेवस्य प्रथमदर्शनम् ।

१८८१ ई० पौषमासस्यैकस्मिन् दिने रामचन्द्र-सुरेन्द्रनाथाभ्यां सह शकट्यां दक्षिणेश्वरे श्रीरामकृष्णदेव-चरणोपान्त आगमनम् ।

१८८४ ईसवीयहायनस्यारम्भे बी० ए० परीक्षायाः कियद्दिनानन्तरं स्वामिनः पितृवियोगः ।

१८८५ ईसवीयदिसम्बरस्यैकादशदिवसे श्रीरामकृष्णदेवस्य कॅन्सर-रोगचिकित्सार्थं काशीपुर-विभागस्योद्यानभवने आगमनम् । गुरुदेवस्य सेवायां स्वामिनः आत्मनियोगः ।

१८८६ ईसवीयागस्तमासस्य षोडशदिवसे दोलनपूर्णिमायां रात्रौ एकवादनानन्तरं षण्मिनिटसमये श्रीरामकृष्णदेवस्य महासमाधिलाभः ।

१८८६ ईसवीयोत्तरायणारम्भसमये कतिपययुवभक्तैः सार्कं आँटपुरे बाबूरामस्य भवने गमनम्, संघबद्धता-संकल्पग्रहणं च ।

१८८७ ईसवीयजानवरीमासे कस्मिंश्चित्समये बराहनगरमठे संन्यासग्रहणम् ।

१८८८ ई०, बराहनगरमठात् परिव्राजकरूपेण निष्क्रमणम् ।

वाराणसी-अयोध्या–आगरा–वृन्दावन–हाथरस–हृषीकेश–प्रभृतिस्थानेषु कतिपयमासान् प्रव्रज्यायां व्यतीत्य बराहनगरमठे प्रत्यावर्तनम्।

१८९० ईसवीयजनवरीमासे पुनः प्रव्रज्यायां निष्क्रमणम् तथा प्रायः चतुर्मासानन्तरं बराहनगरमठे प्रत्यावर्तनम्।

१८९० ईसवीयजुलाईमासे स्वामिपादो बराहनगरमठात् दीर्घ-प्रव्रज्यायां निर्जगाम। ततो हिमालयात् कुमारिकापर्यन्त-समग्रभारतस्य तीर्थेषु विभिन्न-स्थानेषु च निष्किंचनावस्थायां परिभ्रमणम्।

१८९३ ईसवीयहायनस्य मईमासस्यैकत्रिंशदिवसे मुंबईनगरात् जलयानेन अमेरिकादेशस्य धर्ममहासम्मेलने योगदानार्थं यात्रा।

१८९३ ईसवीयहायनस्य जुलाईमासस्य षोडशदिवसे प्रशान्त-महासागरमतिक्रम्य कनाडाराज्यस्य वंकुवर-बन्दरे (पोताश्रये) अवतीर्य रेलशकटं समारुह्य शिकागोनगरे गमनम्।

१८९३ ईसवीयसितम्बरमासस्यैकादशदिवसे सोमवारे धर्ममहा-सभायाः शुभोद्बोधनमभवत्। स्वामिमहोदयः तस्यां सभायां भाषणं दत्तवान्। सप्तविंशतारिकातः धर्ममहासभाधिशनं प्राचलत्। तेन स्वामिपादेन विभिन्नदिनेषु द्वादश-भाषणानि दत्तानि। तस्य सम्मेलन-स्यानन्तरं स्वामिमहोदयः अमेरिकामहादेशस्य विभिन्नस्थानेषु पर्यटन् अनेकानि भाषणानि प्रदत्तवान्।

१८९५ ईसवीयहायनस्यागस्तमासस्यारम्भे स अमेरिकातो वेदान्त-प्रचाराय इङ्गलन्डदेशं प्रतस्थे। तत्र मासत्रयं यावत् बहूनि भाषणानि दत्तानि।

१८९५ ईसवीयहायनस्यान्तिमभागे इङ्गलन्डतः अमेरिकागमनाय वाष्पीयजलयानेन प्रतस्थे। १८९६ ईसवीयहायनस्य फरवरीमासे "न्यूयार्क-वेदान्त-सामतिं" संस्थाप्य न्यूयार्कनगरप्रभृतिस्थानेषु पुनः भाषणदानं प्रारभत।

१८९६ ईसवीयहायनस्याप्रैलमासे १५ तारिकायां न्यूयार्कनगरतः द्वितीयवारं इङ्गलण्डदेशं गतवान्। तत्र मासचतुष्टयं यावत् वेदान्त-प्रचारस्यानन्तरं यूरोपमहादेशस्यानेकस्थानेषु पर्यटय पुनरपि इंगलण्डे मासत्रयं भाषणदानम्।

१८९६ ईसवीयहायनस्य मईमासस्याष्टाविंशदिवसे सुप्रसिद्ध-संस्कृताध्यापक-मेक्समूलरमहोदयेन साकं साक्षात्कारः।

१८९६ ईसवीयहायनस्य दिसम्बरषोडशदिवसे लन्दनत्यागः। अनन्तरं दिसम्बरत्रिंशदिवसे नेपल्सनगरतः वाष्पीययानेन भारता-भिमुखी यात्रा।

१८९७ ईसवीयस्य १५ जनवरीदिवसे कोलम्बोस्थाने अवतरणम्, विपुलसम्वर्धना च।

१८९७ ईसवीयस्य ६ फरवरीदिवसे मद्रासागमनम्। उद्दीपना-वर्धकभाषणदानम्।

१८९७ ईसवीयस्य २० फरवरीदिवसे जलयानद्वारा कलकत्ता-खिदिरपुरे पदार्पणम्। २८ फरवरीदिवसे विराडभिनन्दनम्।

१८९७ ईसवीयस्य १ मईदिवसे जगत्कल्याणाय रामकृष्ण-मिशन-संस्थायाः प्रतिष्ठा।

१८९७ ई० ६ मईदिवसे अलमोडायात्रा। हिमालये मठस्थापनस्या-योजनम्।

१८९७ ई० ९ अगस्ते अलमोडां त्यक्त्वा उत्तर-भारतस्य पंजाब-प्रान्ते काश्मीरे च यात्रार्थं निर्ययौ। विभिन्नस्थानेषु पंचमासपर्यन्तं वक्तृताप्रदानम्।

१८९८ ई० ३ फरवरीदिवसे बेलुडस्थाने गंगायाः पश्चिमतीरे मठार्थं भूमिक्रयणम्।

१८९८ ई० ३० मार्चे—गुरुभ्रातॄन् तथा शिष्यान् समादाय दार्जिलिंग-गमनम् ।

१८९८ ई० ११ मईमासे द्वितीयवारं अलमोडाप्रस्थानम् । १० जूने अलमोडातः पाश्चात्त्यशिष्यैः सह काश्मीरयात्रा, अमरनाथदर्शनम् । क्षीरभवान्यां दैववाणीश्रवणम् ।

१८९८ ई० १३ नवम्बरे—कालीपूजाया दिने बागवाजारे 'निवेदिता-वालिका-विद्यालय'स्य प्रतिष्ठा । स्त्रीशिक्षा-प्रवर्तनम् ।

१८९८ ई० ९ दिसम्बरे—वेलुडस्य नवीनभूम्यां श्रीश्रीठाकुरस्य विशेषपूजानन्तरं वेलुडमठस्थापनम् ।

१८९९ ई० २ जनवरीमासे—नीलाम्वरवावू-उद्यानभवनतः नवे मठे स्थायिभावेन मठस्य स्थानान्तरणम् ।

१८९९ ई० २० जूने—कलिकत्तातः पोतद्वारा पाश्चात्त्यदेशेषु द्वितीयवारं गमनम् । ३१ जुलाईमासे लन्दने अवतरणम् तथा १६ अगस्ते अमेरिकाप्रस्थानम् ।

१९०० ई० २० जुलाईमासे—अमेरिकां त्यक्त्वा यूरोपागमनम् । तत्र पैरिसस्य बृहद्धर्मेतिहास-सम्मेलने योगदानं तथा यूरोपस्य विभिन्न-स्थानानां दर्शनम्, भारतं प्रति प्रस्थानम् । ९ दिसम्बरे रात्रौ वेलुडमठे प्रत्यागमनम् ।

१९०० ई० २७ दिसम्बरे—मायावतीं प्रति प्रस्थानम् । पञ्चदश-दिनानि मायावत्यामवस्थाय २४ जनवरीमासे १९०१ ई०—मायावतीतः वेलुडमठे पुनरागमनम् ।

१९०१ ई० १८ मार्चे—पूर्ववंगं प्रति प्रस्थानम् । ढाका-चन्द्रनाथतीर्थ-कामाख्या-शिलांगानां यात्रां समाप्य मईमासस्य मध्यभागे वेलुडमठे आगमनम् ।

१९०१ ई० अक्टोबरमासे बेलुडमठे प्रतिमायां दुर्गादेव्या आराधनम्, लक्ष्मीपूजा-कालीपूजा-समापनम्।

१९०२ ई० जनवरीमासे बोधगया-दर्शनं कृत्वा काशीधामागमनम्। १९०२ ई० श्रीरामकृष्णदेवस्य जन्मोत्सवात्पूर्वं बेलुडमठे परावर्तनम्।

१९०२ ई० ४ जुलाईमासे शुक्रवासरे रात्रौ नववादनानन्तरं १० निमेषेषु स्वामिनः महासमाधौ लीनता।

—:*:—

अस्य ग्रन्थस्य प्रणयने ग्रन्थकारः निम्नलिखित-पुस्तकेषु निर्भरतां प्रपेदे—

१—श्रीश्रीरामकृष्णकथामृतम् ( श्रीम० कथितं)—अनेकखण्डात्मकम् ।

२—श्रीश्रीरामकृष्णलीलाप्रसंगः (श्रीठाकुरस्य दिव्यभावः तथा नरेन्द्र-नाथः )—स्वमिसारदानन्द-प्रणीतः ) ।

३—पत्रावली–स्वामिविवेकानन्दस्य प्रथमभागः द्वितीयभागश्च ।

४—भारते विवेकानन्दः, उद्बोधनकार्यालय-प्रकाशितः ।

५—श्रीरामकृष्णभक्तमालिका ( स्वामिविवेकानन्दजीवन्या अंशः )—स्वामिगम्भीरानन्द-प्रणीता ।

6—The Master as I saw Him, by Sister Nivedita.

7—The Life of Vivekananda and the Universal Gospel by Romain Rolland.

8—The Life of Swami Vivekananda (in one vol.) by His Eastern and Western Disciples, Published by Advaita Ashrama, Mayavati.

९—स्वामी विवेकानन्दः ( द्वौ खण्डौ )—श्रीप्रमथनाथबसु-प्रणीतः ।

१०—परिव्राजकः, प्राच्यः तथा पाश्चात्त्यः, वर्तमानभारतम्, भावबार-कथा ( Object of Contemplation )—स्वामि-विवेकानन्द-प्रणीतानि ।

एतदतिरिक्तं श्रीरामकृष्ण-मठ-मिशनात् प्रकाशितानेकग्रन्थेभ्योऽपि सहायता प्राप्ता ।

—:-०-:—

# स्वामिविवेकानन्दोपदेशद्विशती

## अवतारः

स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे ।
अवतारवरिष्ठाय रामकृष्णाय ते नमः ॥१॥

रामकृष्णावतारे तु स्थितं सर्वमनन्तकम् ।
अनन्तप्रेम, भक्तिश्चानन्ता, ज्ञानमनन्तकम् ॥२॥

सहस्रयुगपर्यन्तं यल्लब्धं त्रिश्वहिन्दुभिः ।
रामकृष्णेन तल्लब्धमेकस्मिन्नेव जन्मनि ॥३॥

सर्वजातीयवेदानां रामकृष्णस्य जीवनम् ।
विद्यते भाष्यरूपं तद्वेदार्थानां प्रकाशने ॥४॥

कस्यापि देशस्य गतेतिहासे
न त्वादृशो धर्मसमन्वयोऽस्ति ।
प्रत्यक्षमीशः खलु रामकृष्णो
लघुर्मतोऽस्य त्ववतारवादः ॥५॥

यस्मिन्दिनेऽसौ नरजन्म लेभे
तस्माद्दिनात्सत्ययुगं प्रवृत्तम् ।
भेदा विवादास्त्वखिला विनष्टाः
अस्पृश्यवर्गः प्रियतामुपेतः ॥६॥

लुप्तो हिन्दुख्रिस्तमोहम्मदीय-
बौद्धादीनां भेदभावः समन्तात् ।

एको वर्णो वेद एको ऽधुनास्ते
शान्तिस्थानं नूतनं भारतं नः ॥७॥

"भक्तिज्ञाने कर्मयोगौ समेत्या-
भेदः सम्पद्येत सद्भावनानाम् ।
जायेतैवं नः समाजो नवीनः"
प्रेष्ठः श्रेष्ठश्चावतारोपदेशः ॥८॥

"विश्वासोऽस्तु" गुरोर्वाचि निश्चिता भारतोन्नतिः ।
कर्तव्याः सुखिनः सर्वे निःस्वाः साधारणा जनाः ॥९॥

## देशभक्तिः

उमानाथस्तवोपास्यः सर्वत्यागी च शंकरः ।
धनजीवनसौख्यानि न सन्त्यात्मसुखाय ते ॥१०॥

बलिस्वरूपो जनितोऽसि मातु-
श्छाया विराजस्तव यः समाजः ।
विपन्नचण्डाल - दरिद्रमूर्खा-
स्त्वद्रक्तमांसान्वितबान्धवास्ते ॥११॥

उच्चैर्वचो ब्रूहि सधैर्यगर्वो
"भ्राता मदीयः खलु भारतीयः ।
स ब्राह्मणो वास्त्वथवातिशूद्रः
स निर्धनो वास्तु निरक्षरो वा ॥१२॥

ममेश्वरो भारतदेवदेव्यो
मातुः शुभं यत्कुशलं मदीयम् ।
दत्त्वा बलं मे बलिनी पुनस्त्वं
मां मातरित्थं पुरुषं विधेहि ॥१३॥

ग्रस्यते मृत्युना जन्तुरेकवारं स्वजीवने ।
मातुरुन्नतये तस्मात्साहसं कुरु साहसम् ॥१४॥

द्यौरुत्तमा भारतभूर्ममेयं
दोलास्वरूपा मम बाल्यकाले।
यूनस्तथा सुन्दरनन्दनं च
वाराणसीयं मम वृद्धभावे ॥ १५ ॥

तूष्णीं रहः सिक्ततुषारसम्पत्-
सम्पर्कतः पाटल-कुड्मलानाम्।
विकासवत् विश्वविचारधारा
प्रभाविता भारतभाववृन्दैः ॥ १६ ॥

आसाव्यते विश्वमदम्यशक्त्या
विना निनादं खलु भारतेन।
ध्रुवं नवीनं युगमाविरास्ते
न ज्ञायते तु प्रभवः कुतस्त्यः ॥ १७ ॥

नाशोन्मुखं नः किमु भारतं स्या-
दहो तदाध्यात्मिकताविनाशः।
गता ध्रुवं धर्मसहानुभूति-
र्मृता सदाचारविचारवार्ता ! ॥१८॥

विनाशितादर्शजगत्प्रभावता
प्रतिष्ठिता चाशु विलासिता भवेत्।
प्रतारणा पाशविकं बलं विधि-
र्धनं पुरोधा बलिरस्मदात्मनः ! ॥१९॥

न भारतं रुद्धसमुन्नति स्या-
न्न चैति निद्रावशतामिदानीम्।
शक्तिः पुनः कालमिमं विजेतुं
संत्यक्तनिद्रः खलु कुम्भकर्णः ॥२०॥

ऊर्जस्विकालायसनिर्मिताभि-
वज्रं वपुः स्नायुशिराभिरस्तु ।
सेवार्थमस्मत्प्रियमातृभूमे-
रीहा बलं चास्तु यदद्वितीयम् ॥२१॥

अनेन सदुयत्नपरा भवेम
प्राप्तुं वयं विश्वरहस्यबोधम् ।
उदन्वदन्तस्तलमभ्युपेम
प्राणव्ययेनाप्युदयार्थसिद्ध्यै ॥२२॥

कालोऽयं कठिनश्रमस्य भवतो भ्रातर्वचः श्रूयता-
मुत्थाय द्रुतमारभस्व समये मन्येऽतिनिद्रा तव ।
माता प्राप्तनिजासना बलवती तन्द्राभिभूता मनाक्
तस्या आयतिरुज्ज्वला परमसौ युष्मत्प्रयत्नाश्रया ॥२३॥

भविष्यन्महद्भारतं कर्तुमीहा
यदि स्यादुपायत्रयं संविधेयम् ।
अदम्यं बलं निर्मितिः संघशक्ते-
र्विकीर्णा समीहा तथैकत्वसूत्रा ॥२४॥

आयान्तु मित्राणि भवन्तु वीरा
बहिर्विनिर्गत्य निजान्धकूपात् ।
विधाय दृष्टिं परितो विशालां
पश्यन्तु राष्ट्राणि कथं प्रयान्ति ॥२५॥

प्रेमास्ति चेन्मानवजातिमात्रे
स्वजन्मभूमौ च तथा त्वदीयम् ।
आयाहि गन्तुं पुरतो न पश्चाद्
यतामहे सत्तमलक्ष्यसिद्ध्यै ॥२६॥

तुदन्तु सुहृदः सर्वे रुदन्तु तव बान्धवाः ।
श्रेयसो न गतिः पश्चान्नित्यमग्रगतिर्भवेः ॥२७॥

उपेक्ष्यते यज्जनताजनार्दनो
महत्तदंहः क्रियते निरन्तरम् ।
ध्रुवं हि तन्नः पतनस्य कारणं
न विस्मरातो जनतासमुन्नतिम् ॥२८॥

निष्फला राजनीतिः स्यात्समुदायकृतेन या ।
तत्तच्छिक्षान्नवासानामुपायान् परिचिन्तयेत् ॥२९॥

न तादृशे विश्वसिमीश्वरेऽहं
यो मह्यमन्नं न ददाति भूमौ ।
प्रयोजनं स्वर्गसुखेन किं मे
शिक्षान्नशून्या यदि भारतीयाः ॥३०॥

ईर्षा द्वेषं परित्यज्य सहान्यैर्भव सोद्यमः ।
स्वदेशबन्धुवर्गार्थमिदमावश्यकं परम् ॥३१॥

उत्थाय धारय धुरं त्वरितं जगत्यां
जानासि जीवितमिदं क्षणभंगुरं ते ।
जातोऽसि यत्किमपि लक्ष्म त्यज स्वकीयं
जाताः स्थिताः कति न वा पशवो म्रियन्ते ॥३२॥

भयं पुत्र ! परित्यज्यानिशमग्रेसरो भवेः ।
निर्भीका एव शोभन्ते नराः केसरिणो यथा ॥३३॥

विमुक्त्यै देशस्य प्रयतनपरोऽथास्य जगतो
भव, त्वय्येवास्ते शृणु सकलसेवाभरधृतिः ।
उदेत्वन्तर्ज्योतिः सततमधिजीवात्मनिहितं
रुचिर्वेदान्तस्य प्रतिगृहमिदानीं प्रविशतु ॥३४॥

आदौ समाप्लावितमस्तु भावै-
राध्यात्मिकैरुन्नतभारतं नः ।
ततोऽनु सामाजिक - राजकीय-
विचारधाराभिरुदेतु कार्यम् ॥३५॥

आजीवनं भवत कार्यपरा, भवत्सु
स्थित्वाद्य मृत्युमनु चापि भवेन्ममात्मा ।
आयाति याति ननु पार्थिवजीवनं नो
नित्यानि किं विभवमानयशःसुखानि ?॥३६॥

द्वावेव भवदादर्शौ सेवा त्यागस्तथा तयोः ।
चेद् भारतेन तादात्म्यं शेषं संपत्स्यते स्वयम् ॥३७॥

अभिलषसि यदि त्वं भारत ! स्वां समृद्धिं
विकिर जगति सर्वं रत्नजातं स्वकीयम् ।
अपरजनपदेभ्यः प्राप्तुमिच्छेर्यदुच्चं
ग्रहणमथ च दानं लौकिको धर्ममार्गः ॥३८॥

प्रत्यग्गतौ यदभवन्मम हार्दपात्रं
तीर्थं पवित्रमधुना मम भारतं तत् ।
प्रत्यागतोऽत्रजरजः शिरसा वहामि
पुण्यो वहन्निह विभाति कथं समीरः ॥३९॥

## विश्वासो बलं च

अनन्तं बलमेव स्यात्परो धर्मः परेश्वरः ।
दौर्बल्यं परिहर्तव्यं दास्येन च सहात्मनः ॥ ४० ॥

बलं जीवनं दुर्बलत्वं च मृत्यु-
र्बलं शाश्वतं स्यादलं सिद्धिबीजम् ।

बलं सौख्यकृद् दुर्बलत्वं च दुःखं
बलान्यर्जयध्वं बलान्यर्जयध्वम् ! ॥४१॥

'बद्धोऽस्मि मूर्खोऽस्मि च दुर्बलोऽस्मि'
त्वयोच्यते चेत्तव दुर्भगत्वम् ।
दौर्बल्यचिन्ता न सखे विधेया
प्रत्यात्मसंस्थं बलमाविरस्तु ॥४२॥

बलं परं जीवनमार्गदर्शकं
क्रियाप्रधाने जगतीह सर्वशः ।
परित्यजेदुर्बलतानुसारतां
समुद्यमे सा प्रतिबन्धिका यतः ॥४३॥

श्रद्धत्त यूयं मम वीरमित्रा–
ण्यत्रागता उन्नतकार्यहेतोः ।
क्षुद्रश्वशब्दादथवापि वज्रा–
द्भीरवः कर्म निजं कुरुध्वम् ॥४४॥

तेजस्विनो जना अद्धा श्रद्धावन्तो बलान्विताः ।
निर्मलान्ता अपेक्ष्यन्ते पुरुषास्तु सपौरुषाः ॥४५॥

सर्वेऽपि दोषाः प्रभवन्त्यशक्ते–
रशक्तिरंहःकरणेऽपि शक्ता ।
स्वार्थस्य मूलप्रभवोऽप्यशक्ति–
स्तयैव लोकाः कलहे प्रवृत्ताः ॥४६॥

भ्रातर्वृथायं भवदश्रुपात–
स्त्वय्येव नास्ते निहितं बलं किम् ? ।
स्वां चेद्विजानासि बलिष्ठ ! शक्तिं
सर्वं जगत्त्वत्पदलग्नमेव ! ॥४७॥

सप्रेमभावैः सबलैर्मनुष्यैः
सत्यानुरागैरधुनास्ति कार्यम् ।
प्रतारकैः किं क्रियते सुकार्यं
तस्मात्सखे दर्शय पौरुषं ते ॥४८॥

शैत्यं. क्षुधा पार्थिवजीवनं च
न किंचिदीशो बलनायको नः ।
अदम्यविश्वाससहानुभूती
आस्तां पुरस्तादनिशं पुरस्तात् ॥४६॥

कदापि पश्चान्न विलोकनीयं
चिन्त्यं न "कर्तव्यपथे पतेत्कः" ।
नित्यं वयं भोः पुरतो व्रजामः
कश्चित्पतत्यन्यतरोऽभ्युपैति ॥५०॥

असीमधैर्यं च समुद्यमश्च
महांश्च कार्यक्षमता गुणोऽपि ।
आज्ञाकरत्वं मिलितानि सन्ति
व्यक्तेश्च राष्ट्रस्य यशस्कराणि ॥५१॥

अपेक्ष्यते व्यक्तिबलिष्ठतादौ
श्रद्धाथ लक्ष्यं प्रति तत्परत्वम् ।
एतत्समग्रं त्वयि विद्यते चे-
त्कश्च्यावयेत्त्वां निजकार्यमार्गात् ॥५२॥

## त्यागः दानशीलता च

श्रूयतां निश्चिते मृत्यावादर्शोऽस्तु महांस्तव ।
वरं मृत्युमुखे वासो महादर्शस्य पालने ॥५३॥
विकिरतितरां कोऽस्मिंल्लोके प्रकाशपरम्परां ?
गतयुगगतो धर्मस्त्यागः पुनः समुदेष्यति ।

जगति सदयाः स्वात्मोत्सर्गप्रसक्तहृदो ध्रुवं
बहुजनहितश्रद्धा बुद्धाः शतं प्रभवन्त्यपि ॥५४॥

निःस्वार्थः सर्वदा कर्मण्यधिकं फलमश्नुते ।
तथा स्वाचरणं कर्तुं नरा धैर्यं न कुर्वते ॥५५॥

आस्ते जीवनमेव भंगुरमिदं तुच्छोऽभिमानस्तथा
यत्सांसारिकभोगजातमखिलं नानाविलासान्वितम् ।
यो जीवेदपरार्थसाधनकृते तस्यैव जन्मोज्ज्वलं
प्राणन्तोऽपि मृतोपमाः खलु नरा ये स्वार्थिनः केवलम् ॥५६॥

कल्याणाय स्वराष्ट्रस्य सर्वस्य जगतस्तथा ।
स्वात्मोत्सर्गविधेरन्यन्महत्कार्यं न विद्यते ॥५७॥

हिन्दो स्वाभाविकी श्रद्धा जीवितं शाश्वतं तव ।
तदर्थं चिन्तितः कस्मात्कल्याणं जगतां वरम् ॥५८॥

कल्याणं जगतां विधातुमनिशं वाञ्छन्ति ये सज्जना–
स्ते सम्पत्सुखलाभमानयशसामीहां त्यजन्तु द्रुतम् ।
तेषां पोट्टलिकां विधाय सहसाऽगाधे क्षिपन्त्वम्बुधौ
कुर्वन्त्वीशपदाम्बुजं स्वशरणं वाक्यं सतामीदृशम् ॥५९॥

औदार्यं प्रियतापि जन्तुषु भवेन्मित्रेष्वमित्रेषु च
स्वान्तेऽनन्तसहानुभूतिरनिशं दुःखाभिभूते जने ।
सद्विद्याधनसम्पदन्वितनरेऽसूयानिवृत्तिस्तथा
दोषाविष्करणाद्विरक्तिरपरस्यैतत्सतां लक्षणम् ॥६०॥

## सेवा

प्रतिष्ठितश्चारुशरीरमन्दिरे
त्वयात्मदेवः सततं निषेव्यताम् ।
प्रभुर्न चेत्त्वं प्रभुमत्र सेवितुं
प्रयोजनं तेऽस्ति किमन्यमन्दिरैः ॥६१॥

नारीं नरं चाखिलजीवलोकं
सेवस्व नारायणभावतस्त्वम् ।
दयाप्रदाने ननु कोऽसि तेषां
सेवाप्रदानं चर धर्ममर्म ॥६२॥

शिवं सखे वन्दितुमीहसे चिरं
शिवात्मजानां क्रियतां समर्चनम् ।
सम्पूजयेद्यः परमेशपुत्रकान्
स एव साक्षाज्जगदीशपूजकः ॥६३॥

दुर्भिक्षदुःखगदपीडितलोकशोकं
हर्तुं प्रयात भुवने भुवनेशतुष्ट्यै ।
प्राणव्ययादपि जनाः सुखिनः क्रियन्तां
जाता हि पश्यत वृथा शतशो म्रियन्ते ॥६४॥

उच्चैः स्थितः करगृहीतपणो विनोदा-
न्मा ब्रूहि "भिक्षुक गृहाण दयापरोऽहम् ।"
दाता भवत्युपकृतोऽत्र परं ग्रहीत्रा
सौभाग्यमेतदिह ते स्वसहायकर्तुः ॥६५॥

ईशः स्थितो दलितदुर्बलदुःखितेषु
येऽर्हन्ति सेवनमलं प्रियबान्धवास्ते ।
सेवस्व तान्मृगयसे कथमीशमन्यं
गंगातटे खनितुमिच्छति कोऽपि कूपम् ॥६६॥

यावज्जनाः सन्ति सहस्रशोऽन्ये
शिक्षाविहीनाश्च बुभुक्षिताश्च ।
अर्थे न तेषां यदि शिक्षिताः स्मो
तदा कृतघ्नान्खलु धिग्धिगस्मान् ॥६७॥

दुर्गतान्वीक्ष्य यत्स्वान्तं द्रवीभवति तत्क्षणात् ।
स महात्मा स्तुतेः पात्रं निर्विकारस्त्वसज्जनः ॥६८॥

परोपकारः सत्कार्यं यद्यपि स्यात्सकारणः ।
शिवज्ञानाज्जीवसेवा कार्यं पुण्यतमं परम् ॥६९॥

न केवलं मूर्तिषु विद्यते शिवः
परं दरिद्रेषु च दुर्गतेषु च ।
शुभाकृतिर्निर्मल ! तत्कृते कृता
समर्चना सारमतोऽवधार्यताम् ॥७०॥

यावज्जीवसमष्टिकारणवशादेको महाकाशवत्
यावद्वर्गविभिन्नजातिषु ततो यो दीनहीनेषु च ।
यो दुष्टेषु च दुःखितेषु च पुनर्व्याप्तः समानोऽनिशं
तस्याराधनहेतुना जनिततौ कष्टं समीहे महत् ॥७१॥

## प्रेम तथा निःस्वार्थता

मयानुभूतं निजजीवनेऽस्मि-
न्निर्व्याजमन्तःकरणं नराणाम् ।
सद्भावना शाश्वतिकं च हार्दं
जेतुं जगत्सर्वमलं त्रयं स्यात् ॥७२॥

एकोऽपि युक्तस्त्रिगुणैरमीभिः
सहस्रशोऽपि च्छलनापराणाम् ।
नृणां पशूनामपवित्रमर्थं
भवे भवेन्नाशयितुं समर्थः ॥७३॥

अस्मदाशावलम्बोऽस्ति हीनदीनजनाः परः ।
एत एव नितान्तं हि यान्ति विश्वासपात्रताम् ॥७४॥

विश्वासस्त्वीश्वरे कार्यो न च्छलेन प्रयोजनम् ।
परदुःखैर्दुःखितानां भवेदीशः सहायकृत् ॥७५॥

भव्यो निःस्वार्थभावोऽत्र सदाचारो विभाव्यते ॥
परं स्वार्थपरत्वं च दुराचारो विचार्यते ॥७६ ॥

वसुना यशसा न विद्यया
प्रियतायाः सफलत्वमाप्यते ।
चरितेन सता विदार्यते-
ऽदमनीया ननु भित्तिरापदाम् ॥ ७७ ॥

साफल्यस्य रहस्यं स्यादहंभावान्निवर्तनम् ।
तेन सिद्ध्यन्ति कार्याणि प्रभावोऽपि महान्भवेत् ॥७८॥

विस्तारो जीवनं प्रोक्तं संकोचो मृत्युरेव च ।
स्नेह एवास्ति विस्तारः स्वार्थः संकोच उच्यते ॥७९ ॥

प्रेमैव नो जीवनधर्म एको
यः स्निह्यति प्राणिति स प्रकाशम् ।
यः स्वार्थसक्तः स मृतोऽस्ति जीवन्
स्नेहेन मृत्युश्चिरजीवितत्वम् ॥८०॥

धार्यते यद्वदस्माभिः श्वासोच्छ्वासेन जीवितम् ।
तथैवाहेतुकं प्रेम भवेज्जीवनकारणम् ॥ ८१ ॥

चरित्रहीनत्वमवाप्य लोका
धर्मं गतप्राणमकार्षुरद्य ।
अपार्थहार्दं चरितं त्वपेक्ष्यं
सौहार्दभावः कुलिशप्रभावः ॥ ८२ ॥

पवित्रता चेतसि धैर्यमग्र्यं
तथा स्वधर्माध्यवसायता च ।

गुणत्रयं स्यात्सफलत्वहेतु-
स्तथापि सर्वोपरि हार्दभावः ॥८३॥

## शिक्षा

मानवान्तःस्थितायास्तु पूर्णताया विकासिता ।
सच्छिक्षा प्रोच्यते सद्भिर्नो चेच्छिक्षा निरर्थिका ॥८४॥

या स्वावलम्बं न ददाति शिक्षा
'शिक्षाभिधानं' कथमाप्नुयात्सा ।
विद्यार्थिनः पाठगृहेष्वजीर्ण-
रुजाधुनाक्रान्ततया विशीर्णाः ॥८५॥

साधारणेष्वथ पुनर्वनितासमाजे
शिक्षासमः किमपरोऽस्ति परोपकारः ।
विद्याबलं प्रसृतमत्र यदा प्रतीच्यां
लोकोन्नतिः समभवत्परितस्तदानीम् ॥८६॥

मस्तिष्कं परिपूरितं यदि भवेदावेदनाराशिभिः
संबोधानुभवौ विना परिणमेत्तत्केवलं संकरे ।
सांकर्येण भवेदशक्तिरनिशं नाशोन्मुखो, त्वं ततः
शिक्षामाश्रय सच्चरित्रनरताधोपाकविद्याकरीम् ॥८७॥

## स्त्रीशिक्षा

न स्यात्स्त्रीणां सुधारेण विना संसारमङ्गलम् ।
एकपक्षाः पक्षिणः किमुड्डयन्ते विहायसि ॥८८॥

स्वोपज्ञमार्गैर्महिलाः स्वकीयाः
कुर्वन्तु सर्वाः सरलाः समस्याः ।

नान्यस्तदर्थं यततां स्त्रियः किं
न भारतीयाः सुतरां समर्थाः ॥८९॥

स्यादाद्यशक्तेर्जगतो जनन्या
विनोन्नतिं नोन्नतिरद्य नृणाम् ।
इत्येव हेतोः किल रामकृष्णै-
र्गुरुकृता स्त्री परिपूजिता च ॥ ९० ॥

सावित्री दमयन्ती च सीता च जनकात्मजा ।
आदर्शभूतास्ताः सन्ति शृणु भारत ! भारतीम् ॥९१॥

यस्मिन्समाजे किल भारतीये
जगत्यसामान्यगुणान्विताया: ।
जाता जनिः सा जनकात्मजाया
जानाति कर्तुं ललनादरं सा ॥९२॥

आसीत् स्त्रीणां ज्ञानलाभाधिकारः
पूर्वं कस्मादद्य ता वञ्चिताः स्युः ।
यद्वत्त्यक्ता ब्राह्मणैरन्यवर्णा-
स्तद्वन्नार्यश्छिन्नसर्वाधिकाराः ॥९३॥

पूर्वं चासीदग्निहोत्रादिकार्ये
साकं पत्या स्थित्यपेक्षा वधूनाम् ।
अद्यत्वे ता हन्त नार्हन्ति गेहे
शालिग्रामस्पर्शमात्रं विधातुम् ॥९४॥

कुत्रापि शास्त्रे विहितं किमस्ति
"स्त्री ज्ञानभक्त्योरधिकारशून्या" ।
सीता पदाङ्कानुकृतिः परं तत्
समुन्नतेरद्य विशेषमार्गः ॥९५॥

निन्दन्ति नारीरनिशं नरा ये
तासां कृते तैर्विहितं किमस्ति ?
क्षिप्ताः परं ताः स्मृतिकारवालैः
"स्वातन्त्र्यहीना" "नरकस्य पन्थाः"॥९६॥

यदि स्युर्घृणिताः कीटा इव नार्यस्ततः कथम्।
मनुनोक्तं यत्र नार्यः पूज्यन्ते तत्र देवताः। ॥९७॥

पाश्चात्त्यकृत्यनुकृतिर्यदि भारतस्य
नारीजनेन विहिता त्यजता स्वलक्ष्यम्।
ताभिः सहैव भविताऽवनतिर्नराणां
सर्वो भविष्यति पुनर्विफलः प्रयत्नः ॥९८॥

## धर्मः

न कोऽपि धर्मो 'नरदिव्यभावं'
यथोच्चकैर्गायति हिन्दुधर्मः।
स एव चित्रं बत ! दुर्बलेषु
पादप्रहारं कुरुते नितान्तम् ॥९९॥

आदर्शेऽस्मिञ्जीवने मानवानां
शिक्षा भक्तिज्ञानयोगत्रयस्य ।
धर्माणां सल्लक्ष्यमेतत्समेषां
वेदान्तस्तत्सिद्धये स्यात्समर्थः ॥१००॥

स्पर्शास्पर्शौ नास्ति हिन्दुत्वचिह्नं
संस्कारोऽयं केवलं निन्दनीयः।
दृष्टं नाम क्वापि शास्त्रप्रमाणं
सामाजिक्यास्तून्नतेर्विघ्न एषः॥ १०१॥

न धर्मदोषोऽस्त्यथवात्र कोऽपि
पाखण्डिनो यच्छलनापराश्च ।

परार्थनाम्ना विविधैरुपायैः
प्रतारयन्ति च्छलशून्यचित्तान् ॥१०२॥

पुराणधर्मात्तु पुरोहितानां
त्यागाद्भवेदुत्तमहिन्दुधर्मः।
तेनाथ पाश्चात्त्यसमाजवर्गः
प्रभावितः स्यादिति निश्चयो मे ॥१०३॥

धर्मं विनास्माकसमाजवर्गो
भवेदरण्यं पशुभिर्विकीर्णम्।
भोगा विलासा न मनुष्यधर्मो
ज्ञानं परं जीवनसाध्यमुच्चैः ॥१०४॥

धर्मस्त्वलौकिकोपायः पशुर्येन नरायते।
नराश्चापीश्वरायन्ते विना धर्मं नरः पशुः ॥१०५॥

प्रत्यक्षं शाश्वतं यत्प्रकटयति पुनर्जीवनं मानवानां
ज्ञानादज्ञानसान्द्रं पशुमपि मनुजं द्राक्करोति प्रभावात्।
तं साक्षादीश्वरेऽयं विपरिणमयति स्वेन्द्रजालादिवान्ते
धर्मः किं किं न कुर्याज्जगदुपकृतये कल्पवृक्षेण तुल्यः ॥१०६॥

सर्वगं परमं तत्त्वं नासि चेद् द्रष्टुमीश्वरः।
अध्यात्मज्ञानसूर्यस्य नोदयस्तव मन्दिरे ॥१०७॥

त्वयीश्वरो यः सकलेऽपि विद्यते
न बुध्यते चेदियमज्ञता तव।
समग्रमेकं यदि भिन्नता कुतः
परं हितत्वं प्रति जीवमन्दिरम् ॥१०८॥

'ईश्वरः खलु जगत्पिता' स्वयं
प्रार्थनासु भवतेदमुच्यते।

प्रत्यहं व्यवहृतौ परं परं
मन्यसे न किमिति स्वबान्धवम् ॥१०९॥

त्वमंशभूतोऽस्यविनाशिवस्तुनः
समष्टिरेषाप्यविनाशिनी मता ।
अतः स्वकीयां प्रकृतिं विभावयन्
समष्टिसेवामिह कर्तुमर्हसि ॥११०॥

मानवे मानवे मान्या दिव्यता यादितः स्थिता ।
प्रकटीकरणं तस्या धर्म इत्युच्यते बुधैः ॥१११॥

नोच्चैर्वादा नापि सिद्धान्तधारा
नाप्यस्माकं चारुनानामतानि ।
धर्मः, किन्तु स्वानुभूतेरवाप्तिः
किं चैतस्याः कार्यजाते प्रकाशः ॥११२॥

मूर्तिर्ग्रन्था मन्दिरे प्रार्थनायाः
सिद्धिप्राप्त्यै केवलं सन्त्युपायाः ।
साक्षात्कारः स्वात्मनो दिव्यताया
उच्चैर्ध्येयं या हि नित्यं पुरस्तात् ॥११३॥

यदा संतोषः स्यात्क्षणिकसुखतुच्छेन जगता
घृणा दृष्ट्वा लोके कपटपरिपूर्णां व्यवहृतिम् ।
यदा च द्वेषः स्यादनृतवचने नास्तिकजने
तदा धर्मापेक्षं भवति खलु सश्रद्धहृदयम् ॥११४॥

अवाप्य ज्ञानमीशस्य चिन्तनं तस्य नित्यशः ।
प्रत्यक्षं तेन सम्भाषा प्रोच्यते धर्मलक्षणम् ॥११५॥

स्नेहः सम्पूर्णसंसारे स्थितप्राणिषु निर्मलः ।
उदारता तथा तेषु धर्मस्य निकषः स्मृतः ॥११६॥

पावित्र्यं निर्मलत्वं सुकृतिततिरतिः सर्वभूतानुकम्पा
धर्मस्यैकस्य सम्पन्न खलु समभवन् किं न सर्वत्र सन्तः ?
"अन्ये लुप्यन्तु धर्मा मम भवतु पुनः सर्वधर्मप्रधानो"
यद्येवं कोऽपि वाञ्छत्यखिलजनदयापात्रमेतं धिगस्तु ॥११७॥

श्रूयतामधुना मित्र ! धर्म-भेदो विनंक्ष्यति ।
सर्वधर्मपताकासु वंचनं लिखितं भवेत् ॥११८॥

'सहयोगो विरोधो न' 'स्वीकृतिर्न विनाशनम् ।'
'शान्तिः समन्वयश्चापि' 'न कलिर्न मते भिदा' ॥११९॥

मतानि शास्त्राणि च मन्दिराणि
क्रियाकलापाः समनुष्ठितिश्च ।
यदङ्गभूतानि स मुक्तिलाभो
धर्मस्य सर्वस्वमिदं ब्रुवन्ति ॥१२०॥

धर्माश्रयं त्वं कलहं न कुर्या
अज्ञानमूलः कलहोऽनिशं स्यात् ।
असारतत्त्वाश्रयमेव नूनं
किं धार्मिकस्यास्ति कलेर्न बीजम् ? ॥१२१॥

पावित्र्यमाध्यात्मिकता विधातुं
स्वं नीरसं दूरमितो यदैव ।
तदैव धर्मे कलहा भवन्ति
भवत्यशान्तिश्च जगत्यनन्ता ॥१२२।

न वैदिकास्तान्त्रिकाश्च न च वेदान्तिनो वयम् ।
पौराणिकास्तथा न स्मः केवलं 'स्पृश मा' वयम् ॥१२३॥

धर्मोऽस्माकं शिष्यते पाकगेहे !
देवोऽस्माकं पाकपात्रस्वरूपः !

ध्येयं चास्ते 'मा पवित्रं स्पृशेर्मा'-
मित्थं सर्वे स्वात्मनाशं व्रजामः ! ॥१२४॥

धर्मोपदेशस्तु बुभुक्षितानां
वैधेयता स्यादथ वा प्रमादः ।
रिक्तोदराणां किमु धर्मभावः ?
क्षुत्पीडितांस्तोषय भोजनेन ॥१२५॥

व्यष्टेर्यथा जीवनलक्ष्यमेकं
तथा समष्टेरपि निश्चितं स्यात् ।
अङ्गीकृतं भारतवासिभिर्य-
ल्लक्ष्यं पुरा तैर्न कृतः प्रमादः ॥१२६॥

## विविधम्

### ( भारतमहिमा )

प्राच्यां तु भारतादेव सर्वं प्राचीनकालतः ।
प्रससारात्र संसारे प्रीतिर्ज्ञानं तपः शिवम् ॥१२७॥

धर्मस्यावासभूमिः प्रभवपदमिदं नित्यशो दर्शनानां
नानावीरैः सुधीरैरविरतमवनात्स्वस्तिकालादनादेः ।
विश्वप्रेमप्रकर्षः प्रकृतिमधुरिमा मार्दवं भावनाना-
मेभिर्लोकस्य कर्तुं प्रभवति सततं नेतृतां भारतं नः ॥१२८॥

आघातप्रतिघातसंकटशतैरुद्यत्समाजप्रथा-
चाराणां ततिभिश्च संकुलमभूदाक्रान्तमेत्यारिभिः ।
आस्ते प्राणबलान्वितं तदपि यत्तुङ्गाद्रिशृङ्गोपमं
मन्ये भारतजीवनं खलु जगत्याद्यन्तशून्यं ध्रुवम् ॥१२९॥

न ज्ञातो ग्रीसदेशोऽभवदवनितले रोमवार्तापि नासीत्
यूरोपस्थाश्च लोका गहनवनगता दीर्घमासन्नसभ्याः ।
ध्वान्तच्छन्नेतिहासं जगदिदमखिलं, दुर्बला किंवदन्ती
तत्रासीदुच्चशैलस्थिरतरवसतिः संस्कृतिर्भारतीया ॥१३०॥

आदर्शानां जन्मभूर्विश्रुतानां
सद्भावानामाकरो भारतं नः ।
अस्मादेवाध्यात्मिकज्ञानधारा-
पूरः पूर्वं प्रस्थितोऽभूज्जगत्याम् ॥१३१॥

संसारे पुनरप्यस्मिन्पूरोऽयं प्रसरिष्यति ।
नवजीवनसंचारो ध्रुवं येन भविष्यति ॥१३२॥

का पुण्यभूमिरुचिता जगतीतलेऽस्मिन्
किं स्थानमत्र परमीश्वरलाभसिद्ध्यै ?
नृणां च कर्मफलभोगपदं किमास्ते ?
तत्रोत्तरं शृणुत भारतभूरियं नः ॥१३३॥

क्षेत्रं किमस्ति बलशीलदयागुणाना-
मन्तर्दृशोऽप्यर्जन यत्र परो विकासः ।
जाता च यत्र परमात्मविचारचर्चा
तत्रोत्तरं शृणुत भारतभूरियं नः ॥१३४॥

महामहिममण्डिता भवति भारती भूः पुरा
समुज्ज्वलतरा ध्रुवं स समयोऽचिरादेष्यति ।
गृहीतजनुषोऽत्र संश्रुतमहर्षयः पूर्ववत्
समग्रजगतो जनान् सुपथगान्विधास्यन्ति ते ॥१३५॥

## ( बन्धुसेवा )

आनन्दिता भवत बान्धवसेवनार्थं
युष्माभिरेव मधुरोऽवसरोऽद्य लब्धः ।
आप्लावितं भवति येन जगत्समग्रं
वृद्धिं स याति खलु धर्मसमुद्रपूरः ॥१३६॥

निःस्वान्नित्यं दुःखितानीशपुत्रान्
ये सेवन्ते पापिनस्तापिनश्च ।
तेषां जिह्वाग्रस्थिता भारती स्याद्
देवी चास्ते मानसे शक्तिरूपा ॥१३७॥

परार्थं त्यक्तसर्वस्वो मुक्तस्तिष्ठति मानवः ।
इतो भ्रष्टस्ततो भ्रष्टो 'मुक्तिर्मे स्यादिति ब्रुवन्' ॥१३८॥

## ( धर्ममहत्ता )

धर्मः परो भारतपुण्यभूमौ
जातीयशक्तेरवलम्बरूपः ।
देशस्य नो जीवनगीतशास्त्रे
धर्मः प्रधानस्वरतामुपैति ॥१३९॥

नार्हा वयं त्यक्तुमतः स्वधर्म-
मादर्शभूत-स्वबलं कदापि ।
असावधाना यदि तं त्यजेम
प्रतिक्रिया तस्य भवेददम्या ॥१४०॥

## ( भारतस्य अवनतिः )

यस्मिन्दिने 'म्लेच्छ'पदं प्रसिद्धं
छिन्नं विजातीयजनैः सखित्वम् ।

तस्मिन्दिने भारतभाग्यसूर्यो-
ऽप्यस्ताचलं गन्तुमिव प्रवृत्तः ॥१४१॥

## ( कर्म अकर्म च )

आत्मभावविकासस्य कारणं कर्मसंज्ञितम् ।
अनात्मभावो येन स्यात् तदकर्मेति संस्मृतम् ॥१४२॥

सबलाः कार्यकर्तारो विश्वं जेतुमलं दश ।
सहस्रशोऽपि वैधेया न समर्था भवन्ति ते ॥१४३॥

पशुर्नरत्वमाप्नोति सत्कर्मवशतः परम् ।
नरः पशुत्वं लभतेऽसत्कर्मवशतोऽवशः ॥१४४॥

## ( स्त्री-महिमा )

जातान्यजातिषु जगत्यबलोन्नतिर्या
सा योषितां किल सुयोग्यपदस्य लाभात् ।
याधोगतिश्चिरमभूदिह भारतेऽस्मिन्
सा शक्तिरूपमहिलासु निरादरेण ॥१४५॥

## ( मानवोन्नतिः )

समानाधिकारा जना जीवने स्युः
परं दुःखिता जन्मतो जातिभेदात् ।
अतः कर्मणो वर्ण इत्येव सत्यं
समाजोन्नतावस्ति धर्मोच्चतत्त्वम् ॥१४६॥

अयि ! कठोरतरं खलु जीवनं
तनुतरं क्षणजीवि च तत्फलम् ।
पिहितमस्ति तवाग्रमथाप्रभं
तदपि धीरतयाग्रसरो भवेः ॥१४७॥

उत्तिष्ठ जागृहि द्राक्त्वं स्वप्नेनालं तवाधुना।
स्वलक्ष्यप्राप्तिपर्यन्तमुद्यमं न परित्यजेः ॥१४८॥

सहानुभूतेरथ कार्यशक्ते-
रभाव एवास्ति विपन्निदानम्।
दोषं तमादौ परिहृत्य शीघ्रं
कुरुष्व कार्यक्षममात्मदेहम् ॥१४६॥

असीमशक्तिर्निहिता शिवेन
व्यक्तौ, विजानाति नरः कथं ताम्।
सर्वेऽपि तुल्यावसरं लभन्तां
बलीयसीतः परमेश्वरेच्छा ॥१५०॥

विजयः प्रकृतेरस्या मुख्यं लक्ष्यं नृजन्मनः।
न जातो मनुजो जातु गन्तुं प्रकृतिदासताम् ॥१५१॥

सश्रद्धकर्मठजनस्य ससीमबुद्ध्या
विज्ञानभौतिकविचारविशालतायाः।
कर्तुं समन्वयमहं हृदयं समीहे
गम्भीरमब्धिरिव यच्च नभो विशालम् ॥१५२॥

सुखं नराणां पुरतोऽभ्युपैति
प्रायो विपच्छेखरितोत्तमाङ्गम्।
प्रयोजनं यस्य सुखेन तस्मा-
त्स तत्परः स्याद्विपदोऽनुगन्तम् ॥१५३॥

कल्याणमध्यात्मसमाजनीति-
त्रयेऽवलम्बेत विशुद्धभावम्।
सर्वेषु देशेष्वथ सर्वकाले-
ष्वभिन्नता स्मासु च बान्धवेषु ॥१५४॥

## ( ज्ञानमहिमा )

गम्यमुच्चतमं तत्त्वं जीवनस्य श्रुतं स्मृतम् ।
तत्त्वमन्वेषय भ्रातः ! ध्रुवं लाभो भविष्यति ॥१५५॥

ज्ञानं परं प्रतिगृहं प्रविशेदितीत्थं
चक्रं प्रवर्तयितुमिच्छति मानसं मे ।
येन स्त्रियश्च पुरुषाश्च जगत्यमुष्मिन्
स्वात्मेष्टनिर्णयविधिं परिभावयन्तु ॥१५६॥

## ( सेवाभावः )

यथाहं भारतीयोऽस्मि तथा संसारसेवकः ।
संदेहकल्पनाजालप्रसारोऽत्र निरर्थकः ॥१५७॥

## ( सदाचारः )

आचारवान् भव सुहृद् बलवान्कृतान्त-
स्याह्वानतोऽपि गतभीरमलान्तरस्त्वम् ।
व्यर्थैव धार्मिकविवादपरम्पराऽऽस्ते
दुष्कर्मजातमिति कातरकार्यमेतत् ॥१५८॥

## ( सत्यं उपकारश्च )

अपकाराादुपकारोऽसत्यादपि चातिरिच्यते सत्यम् ।
अनन्तगुणमेतत्खलु यस्यास्ते तस्य जीवितं सफलम् ॥१५९॥

## ( भारतोन्नतिः )

भारताभ्युदयोऽवश्यं भवितेशविधानतः ।
अरुणोदयवेलासावुत्थातव्यं गता निशा ! ॥१६०॥

( बलमहत्ता )

शुष्काद् गीतापाठात्पदकन्दुकखेलनं तु भद्रतरम् ।
शक्तेर्महत्त्यपेक्षा, गीतापठनं भवेत्ततः सफलम् ॥१६१॥

( व्यक्तिमहत्ता )

भ्रातस्त्वमेहि बलवाननुभूय 'सोहं'
भस्मीभविष्यति मनोमलिनत्वमस्मात् ।
जागर्ति शक्तिरनिशं त्विह या प्रसुप्ता
त्वं च प्रचण्डबलमूर्तिरिव स्वयं स्याः ॥१६२॥

( दलितवर्गः )

श्रमिका भारतस्यैते दलिताश्चिरकालतः
अपूर्वकार्यकर्तारोऽप्यहं तानभिवादये ॥१६३॥

दरिद्राणां कुटीरेषु भारतं वसति ध्रुवम् ।
परमुन्नतये तेषामस्माभिर्वत किं कृतम् ? ॥१६४॥

सांसारिकेषु विषयेषु भवन्त्यसुज्ञा
निःस्वा जनास्तदपि दुर्जनताविहीनाः ।
ते सन्ति शुद्धहृदयाश्छलशून्यभावा
हिंसाविचाररहिता हितकार्यसक्ताः ॥१६५॥

निम्ना जना जेतृनिपीडनेन
त्रस्ताः स्वकीयैरवमानिताश्च ।
चिरात्स्वकार्यप्रसितास्तथापि
श्रमस्य नापुः फलमद्य यावत् ॥१६६॥

## ( पुराणाभिमानः )

केचिद्वदन्त्यवनतेः किल कारणं नो
व्यर्थं ममत्वमतिपूर्वपरम्परासु ।
ज्ञातं मया परमिदं विपरीतमेव
त्यागः पुराणविभवस्य महान्प्रमादः ॥१६७॥

## ( हनूमदादर्शः )

सर्वदास्तु तवादर्शो हनूमान्बलवान्सुधीः ।
जीवितं मरणं वास्तु स न दध्यौ जितेन्द्रियः ॥१६८॥

## ( ज्ञानी भक्तश्च )

अगाधप्रेमहृदयोऽद्वैतानुभववान्स्वयम् ।
ज्ञानीश्वरेण तादात्म्यवांश्च भक्तो निगद्यते ॥१६९॥

निन्दको ज्ञानिनो भक्तो ज्ञानी भक्तस्य निन्दकः ।
द्वावप्येतौ मतौ धूर्तौ न भेदो ज्ञानिभक्तयोः ॥१७०॥

## ( ईश्वरः )

यदीश्वरस्य सत्तायां विश्वासो विद्यते तव ।
पदे पदे तत्स्मृतिः स्यात्स्मृतिरेवेशसेवनम् ॥१७१॥

यदीश्वरः स्यान्नरदेहधारी
हानिर्भवेत्किं तदनन्तशक्तेः ?
चैतन्यरूपस्य शरीरलाभो
न बाधकः स्यात्तदनन्ततायाम् ॥१७२॥

## ( भक्तिः )

भक्तिर्निरन्तरमसौ मनुजान्तरस्था
या कामकाञ्चनपिधानवशाददृश्या ।
दूरीकुरु त्वमिदमावरणं क्षणेन
स्वान्तः स्थिताथ भवति स्वयमेव दृश्या ॥१७३॥

## ( बन्धः )

सौवर्णो वाप्यायसो वास्तु बन्ध-
श्छेद्यो, द्वन्द्वं द्वेषरागाद्यपास्यम् ।
हैमो बन्धोऽप्यस्तु तुल्यः कठोरो
दासो दासः पूजितस्ताडितो वा ॥१७४॥

## ( मुक्तिः )

अन्वेष्टव्या कुत्र मुक्तिः सखे ! सा
लभ्या नेहामुत्र वा मन्दिरे वा ।
शास्त्रग्रंथे वा न मा दुःखितो भू-
र्यस्मादेकस्त्वं तदालम्बभूमिः ॥१७५॥

## ( उपासना )

अनुष्ठानानि शास्त्राणि सम्प्रदायास्तथैव च ।
साक्षात्कारस्य सिद्ध्यर्थं साधनानीव केवलम् ॥१७६॥

## ( अहंभावः )

देहमानससंयोगादहंभावोद्भवो भवेत् ।
'जानामी'त्युपलब्धिस्तु प्रमाणं स्या'दहं'स्थितौ ॥१७७॥

( वेदमहत्ता )

दृष्टो विरोधो यदि वेदवाक्यैः
शास्त्रं पुराणं न भवेत्प्रमाणम् ।
विश्वेऽत्र वेदाननुभासितं य-
ज्जानीहि वेदोद्भवमेव सर्वम् ॥१७८॥

( शिक्षाप्रचारः )

शिक्षा-संस्था-माध्यमेन प्रचारः
कर्तव्यः स्याल्लोकसाधारणेन ।
गत्वा पश्चात्तैरितः प्रत्यगारं
बोद्धव्याः स्युर्बान्धवा निर्धनास्ते ॥१७९॥

( मूर्तिपूजा )

साक्षादियं चेन्न विमुक्तिहेतु-
स्तथापि निंद्या न हि मूर्तिपूजा ।
अद्वैतबोधागमसाध्यसिद्धि-
योग्यं मनः सा कुरुते जनानाम् ॥१८०॥

( अध्यात्मम् )

नरस्य दिव्यां प्रकृतिं पुरस्ता-
दुद्धार्य्य तज्जीवनकार्यवृन्दे ।
प्रवेशनीयं कथमित्युपायः
संक्षेपतो लक्ष्यमिदं मदीयम् ॥१८१॥

अध्यात्मतत्त्वविभवस्य भुवि प्रसारो
नित्यं विधेय इति भारतधर्मकार्यम् ।

यद्ग्रीक-हूण-शक-मोघल-तुर्कयानैः
सम्पीडितं भवदपि स्थिरसंविदास्ते ॥१८२॥

वैज्ञानिकाविष्कृतिमात्रमस्मिन्
कथं जगत्यर्हति सभ्यताख्याम् ।
मनुष्यजातौ कियतीश्वरस्य
व्यक्तिः प्रमाणं खलु सभ्यतायाः ॥१८३॥

आत्माव्यक्तब्रह्म सर्वोऽपि बाह्यः
स्वान्तःसंस्थो यः प्रकृत्यन्तरायः ।
तं संयम्य ब्रह्मभावप्रकाशो
लक्ष्यं लोके जीवनस्योच्चमास्ते ॥१८४॥

कर्मोपास्तिज्ञानचेतोजयाना-
मेकोपायेनाथ वा तैरनेकैः ।
व्यक्तीकृत्य स्वात्मनो दिव्यरूपं
मुक्तेर्लाभं कर्तुमर्हस्यनन्तम् ॥१८५॥

नय त्वं मामम्ब ! त्वरितमतिदीप्तं परपदं
निशानाथो यस्मिन्द्युमणिरपि खद्योतसदृशः ।
वृथा स्वप्नानेतांस्तिरय मम लीलान्तसमये
विभिद्येदं दीर्घं निगडमधुना मोचय सुतम् ।१८६॥

व्यष्टिः परं ब्रह्म विभागशून्यं
मायावशादेव पृथक्त्वमेति ।
मायापि चैकीभवितुं स्वभावा-
त्तद्भेदशून्यं यतते प्रयातुम् ॥१८७।

'अहं' पूर्णशक्तिप्रकाशस्वरूपं
तथा भावनेयं जनैर्'ज्ञान'मुक्तम् ।

स्वरूपं तु सापेक्षमेतेन सिद्ध्ये-
दपेक्षायुता शुद्धसंवित्कुतः स्यात् ? ॥१८८॥

ज्ञानातीता पूर्णता सत्स्वभावा
ज्ञानाज्ञाने पूर्णतांशस्वरूपे ।
सापेक्षत्वं पूर्णतातोऽस्ति नीचै-
रज्ञानेन ज्ञानमेतादृशं स्यात् ॥१८९॥

बन्धनात्सदसतोर्विमोचनं
मुक्तिरित्यभिहिता मनीषिभिः ।
अस्तु हैममथवाप्ययोमयं
वस्तुतस्तु निगडं तदुच्यते ॥१९०॥

माया सादिरनादिर्वा सान्ता सा व्यष्टिरूपतः ।
समष्टिरूपतोऽनन्ता तथानादिश्च मन्यते ॥१९१॥

वस्त्वेकमेव न द्वैतं चैतन्यं वाप्यचेतनम् ।
अज्ञानाख्या परं माया द्वैतभेदकरी भवेत् ॥१९२॥

आदौ यदा स्याद्विषयाक्षयोगो
न द्वैतबोधस्य तदावकाशः ।
क्षणे द्वितीये सविकल्पभानं
सत्यादिसंवित्खलु निर्विकल्पा ॥१९३॥

घनान्धकारः परितो विसर्पन्
दृष्टिं विलुम्पन्नयमन्तमेतु ।
मृत्योर्न यन्मृत्युमथाभिलाषः
'स्व'-नाशको नश्यतु दीर्घशान्त्यै ॥१९४॥

एको मुक्तः सर्ववेद्यस्य वेत्ता,
नाम्ना रूपेणापि हीनः समानः ।

साक्षी सर्वस्वप्नजातस्य बीजं
मायाधारो विश्वरूपोऽयमात्मा ॥१९५॥

तातो माता पुत्रजाये च मित्रं
स्वप्नं सर्वं नास्ति किंचिद्यथार्थम् ।
यद्येकस्त्वं कः पिता कश्च मित्रं
त्वत्तो भिन्नं नास्ति सर्वं त्वमेव ॥१९६॥

आध्यात्मिकत्वं खलु नः समाजे
रक्तप्रवाहोऽमलजीवनस्य ।
ओजोऽन्वितो यावदसौ प्रवाहो
निष्कण्टकस्तावदयस्य पन्थाः ॥१९७॥

न कोऽप्यभावः परिपीडयेन्नो
दरिद्रता मानसदुर्बलत्वम् ।
अध्यात्मधर्माश्रयतास्ति याव-
न्नाशोन्मुखं स्यात्किमु भारतं नः ॥१९८॥

शुद्धोऽसि पूर्णोऽसि बलान्वितोऽसि
यदस्ति पापं न तवास्ति किंचित् ।
दौर्बल्यचिन्ता न सखे विधेया
प्रत्यात्मसंस्थं बलमाविरस्तु ॥१९९॥

कदाप्युच्चैर्गच्छन्समयजलधेर्वीचिवशतो
लुठन्नीचैस्तूर्णं तदपि निजधारामनुसरन् ।
इतः श्रान्तो मातः क्षणिकसुखदुःखात्मजगत-
स्तथा दूराद् द्रष्टुं परमपरतीरं त्वपरतः ॥२००॥

## ( जनताजनार्दनः )

त्वत्सम्मुखो विविधरूपधरो य ईश-
स्तं सन्त्यजन्नु कुह मार्गयसे वृथैव ।
यः स्नेहतत्परमनाः खलु जीववृन्दे
जानाति सेवितुमसावनिशं परेशम् ॥२०१॥

## ( स्वामिजीवनलक्ष्यम् )

जीर्णं वस्त्रमिव त्यजामि सुखतस्तूर्णं स्वकीयं वपुः
पूर्णं कर्तुमथापि कार्यमनिशं लोके यतिष्ये ध्रुवम् ।
यावद्ब्रह्ममयं समग्रमिति न ज्ञानं जगत्यां जनैः
तावत्प्रेरयितुं प्रयत्नपरता मन्ये मदीयं तपः ॥२०२॥

## ( समर्पणम् )

स्वामिशब्दैर्विरच्येदं नव्यं श्लोकशतद्वयम् ।
त्वदीयं वस्तु भगवन् ! तुभ्यमेव समर्पये ॥२०३॥

इति साहित्याचार्य-एम्० ए०-भण्डारकरोपाह्व - त्र्यम्बकशर्मणा
विरचिता श्रीस्वामिविवेकानन्दोपदेशद्विशती समाप्ता ।



# श्लोकशतात्मकं स्वामिविवेकानन्दचरितम्

ज्ञानज्योतिर्नाशितध्वान्तजालं
सानन्दार्कं श्रीविवेकाख्यदीपम् ।
कुर्वन्तं तं लोकमालोकपूर्णं
सीमातीतस्नेहसारं नतोऽस्मि ॥ १ ॥

शाके समुद्रवसुपर्वतभूमितेऽब्दे
पौषेऽसिते गिरितिथौ वियतोऽवतीर्य ।
दिव्यर्षिमण्डलगतः क्षितिमण्डलस्य
स्वं मण्डनं मुनिवरः कुरुते स्म कोऽपि ॥२॥

विश्वस्य नाथेन यतः प्रदत्तो
दत्तः स धन्यः खलु विश्वनाथः ।
धन्यास्य जन्या भुवनेश्वरीयं
गता जगन्मङ्गलमातृभावम् ! ॥ ३ ॥

एकान्तमेकान्तरतस्य तस्य
स्वतन्त्रबुद्धेः स्थिरमानसस्य ।
ज्ञानस्य लिप्सा वयसैव सार्धं
वृद्धिं गता शुद्धविचारशक्तेः ॥ ४ ॥

दिक्कालतोऽमितमतिप्रभवप्रभावः
स्वालौकिकप्रतिभयातिभयाशयः सन् ।
को वेद यच्छिशुरयं पुनरल्पकाले
कर्ताद्भुतं नरमहत्त्व-समत्व-सख्यैः ॥ ५ ॥

दयार्द्रभावस्य विभोर्भवेऽस्मि-
न्विभाव्यते भेद इवात्र केन।
नीचोऽयमुच्चैः सधनोऽधनोऽयं
स्पृश्योऽयमस्पृश्यतयान्वितोऽयम् ॥ ६ ॥

बालोऽयमष्टादशवर्षकल्पः
शनैरनल्पैः कलितो विकल्पैः।
श्रीरामकृष्णेक्षणगोचरोऽभूत्
सुरेन्द्रनाथस्य गृहे नरेन्द्रः ॥७॥

प्राच्या प्रतीची, किमु भारतीभू-
र्विश्वेन, भूमिस्त्रिदशालयेन।
तरङ्गिणी किं मिलितार्णवेन
क्षणे यदान्योन्यमपश्यतां तौ ॥८॥

प्रतिक्षणं सद्गुरुणा प्रतीक्षितः
प्रतीयते स्मेक्षणमात्रतः क्षणात्।
प्रमोदितो हारिनरेन्द्रगायन-
स्वरेण देवोऽजनि भावसंस्थितः ॥९॥

विलोकितः स्नेहमयेन चक्षुषा
"पुनस्त्वमायास्यसि दक्षिणेश्वरम्।"
निमन्त्र्य चेत्थं गुरुणा विसर्जितो
ययौ नरेन्द्रोऽपि गृहं 'तथा'-वदन् ॥१०॥

अशान्तमालोक्य सुतं नितान्तं
पिता विधातुं गृहिणं तमैच्छत्।
'योगस्य भोगस्य न साहचर्यं
भवेन्मयी'त्थं जनको न्यषेधि ॥११॥

सहायकः कः परमेशदर्शने
भवेदिति व्याकुलितान्तरोऽभवत् ।
निजेन रामाख्यसुहृद्वरेण स
प्रयातुमैच्छत्किल दक्षिणेश्वरम् ॥१२॥

"मनस्त्वमायाहि निजं निकेतनं"
नरेन्द्रगीतं मधुरस्वरान्वितम् ।
समाधिमग्नं विदधौ यदा गुरुं
तदैव शिष्योऽजनि चित्रितान्तरः ॥१३॥

'कदापि दृष्टो भवतेश्वरः किं ?'
नरेन्द्रपृष्टः समुवाच देवः ।
न केवलं दृष्टचरो मयेत्थं
संदृश्यतेऽयं परिभाष्यते च ॥१४॥

"नरः स्वयं द्रष्टुमलं तमीश्वरं"
निशम्य देवस्य मुखादिदं वचः ।
विशिष्य विश्वासभरोऽस्य सद्गुरौ
दिने दिनेऽस्मिन् ववृधे समादरात् ॥१५॥

आकर्षणेनास्य तथाद्भुतेन
स्वान्ते नरेन्द्रोऽपि चमत्कृतोऽभूत् ।
कदाचिदेकः स्वयमस्य पार्श्वं
गतः पुनस्तद्गतमानसः सन् ॥१६॥

संस्पृष्टगात्रः स गुरोः पदेन
स्वयं ददर्शाथ भयाभिभूतः ।
अहं तया सार्धमनन्तलीनो
हीनो बृहद्भौतिकसर्ग एषः ॥१७॥

कदापि नासीद्विनिमीलिताक्षः
परेषु विश्वासपरः परं सः ।
हेमेव वह्नौ तु परीक्षमाणो
गुरुं प्रमाणं विदधे नरेन्द्रः ॥१८॥

बी० ए० सनाथोऽपि स विंशवर्षे
जातोऽन्वनाथः स्वपितुर्वियोगात् ।
स्नेहः परं तस्य गुरौ गरीया-
नभूदभूमिर्विपदां बहूनाम् ॥१९॥

त्यागस्तपः प्रेम गुरौ पवित्रे,
भक्ते वलं तीव्रमतिर्विवेकः ।
आकृष्यमाणावितरेतरेण
प्रायस्तदैकत्वमिवान्वभूताम् ॥२०॥

पितुर्वियोगोऽन्यजनापवादो
वृत्तेरभावः स्वकुटुम्वचिन्ता ।
इत्थं विपद्वृन्दसमावृतः स-
न्नभूत्ससंदेह इवेश्वरेऽपि ॥२१॥

"यदीश्वरः स्यादनिशं दयामयो
किमस्य राज्ये विषमत्वदर्शनम् ।
समङ्गलश्चेत्किमिहास्त्यमङ्गलं"
विचिन्त्य देवं शरणं चकार सः ॥२२॥

देवो नरेन्द्रागमनेन सद्यः
प्रेमोर्मिमालाकुलितान्तरोऽभूत् ।
शान्तोऽन्यथा पर्वणि पर्वणीन्दू-
दयेन सोल्लास इवाम्बुराशिः ॥२३॥

उवाच वाचं स्वगुरुं नरेन्द्रः
"सांसारिकी कष्टपरम्परेयम् ।
या बाधते मोचयितुं ततो मां
योगस्त्वया कोऽपि विचिन्तनीयः" ॥२४॥

देवोऽब्रवी"द्विश्वसता त्वयैवं
साभ्यर्थनीया जननी नरेन्द्र ! ।
तस्या यद्देवेच्छसि लप्स्यते तत्
सश्रद्धमेतां शरणं व्रजेति" ॥२५॥

गुरोरनुज्ञामधिगम्य शिष्यः
शीघ्रं प्रयातो भवतारिणीं सः ।
न केवलं सा प्रतिमोपलात्मा
प्रतीकरूपा ध्रुवमाद्यशक्तेः ! ॥२६॥

अनन्तसौन्दर्यमयीं समोद-
स्तां चिन्मयीं स्नेहयुतां विलोक्य ।
विस्मृत्य सर्वं जननीं ययाचे
ज्ञानं, विवेकं, सविरागभक्तिम् ! ॥२७॥

एवं त्रिवारं जननीसमीपं
समेत्य तद्विस्मृतवान्यदिष्टम् ।
देवेन दिव्याञ्जनलिप्तदृष्टेः
सृष्टिर्बभूवास्य नवप्रकाशा ! ॥२८॥

अथैकदा जीवदयोपदेश-
प्रसङ्गतः सङ्गतभक्तवृन्दम् ।
"कस्त्वं दयां कर्तुमवेहि सेवां
धर्मं स्वकीयं पर"मित्यवादीत् ॥२९॥

नरेन्द्रनाथोऽप्यथ दिव्यवाणी-
रहस्यबोधेन मुदान्वितोऽभूत् ।
शिवस्वरूपाखिलजीवसेवा-
मेवाकरोज्जीवनलक्ष्यमुच्चन् ॥३०॥

ऐशे ततोऽनुशरदिग्वसुचन्द्रवर्षे-
ऽस्वस्थोऽभवत्प्रभुरसाध्यरुजाक्रमेण ।
काशीपुरे सतरुपुष्पलतावितानो
सेवार्थमन्यतरुणैरगमन्नरेन्द्रः ॥३१॥

अनुभवितुमथैच्छत्सोऽविकल्पं समाधिं
गुरुरपि वरदोऽभूद् भाषमाण'स्तथास्तु' ।
परमिदमकरोत्तत्कुञ्चिका - बद्धकल्पं
स चरति भुवि यावल्लोककल्याणकार्यम् ॥३२॥

साम्यं, मैत्री, प्रेम, बन्धुत्वमोशे
भक्तिस्त्यागः सर्वधर्मान्वयश्च ।
शिष्येणैतत्कारयिष्यन्समग्रं
देवस्तस्मै स्थाम यच्छन्नुवाच ॥३३॥

दत्तं मया सकलमेव नरेन्द्र ! तुभ्यं
जातोऽस्मि निर्धनतरः सुतरामिदानीम् ।
कार्यं विधास्यसि महज्जगति त्वमस्मि-
न्पश्चात्स्वतन्त्रहृदयः खलु तात ! गन्तुम् ॥३४॥

वदेत्किमेषोऽस्त्यवतार' इत्थं
ससंशयं शिष्यमुवाच देवः ।
"रामश्च कृष्णश्च पुरा यदास्ता-
मेकात्मभावेन स रामकृष्णः" ॥३५॥

देवे तदानन्तसमाधिलीने
दीनेक्षणैर्भक्तगणैः समेत्य ।
वैराग्ययुक्तैर्नगरे बराहे
संस्थापितोऽभून्नवभिक्षुसंघः ॥३६॥

श्रीसारदामातुरथोपदेशाद्
देवस्य पूजादिकमाचरन्तः ।
सर्वे यथापूर्वममन्दमोदाः
सेवापराः शिष्यजना अभूवन् ॥३७॥

संसारकल्याणकृते तथात्म-
मोक्षाय सर्वे शपथं चरन्तः ।
सर्वं परित्यज्य नरेन्द्रमुख्याः
संन्यासदीक्षाव्रतिनो बभूवुः ॥३८॥

नामानि कृत्वा विविधानि तेषा-
मात्मानमानन्दयुतं विवेकम् ।
चकार, सर्वे परितो भ्रमन्तः
केन्द्रं द्विजा नीडमिव स्वमीयुः ॥३९॥

अर्चां जपं शास्त्रविचारचर्चां
ययुर्दिनान्याचरतां यतीनाम् ।
ऊषुः, शिवं ते नृषु चिन्तयन्तः
सन्तोषवन्तो लवणोदनेन ॥४०॥

साकेत - वृन्दावन - पुण्यवारा-
णसी - हरिद्वार - पुराणि पश्यन् ।
पुरा, परिव्राजकसार्थनामा
स तीर्थयात्रार्थमथ प्रतस्थे ॥४१॥

तत्तीर्थयात्रामिषतः पुराण-
प्रवर्तमानैष्यदनाविलं सः ।
संदृष्टवान् भारतमानचित्रं
विचित्रजात्यादिविभेदशून्यम् ॥४२॥

'स्वानन्दबीजं परमेशलाभो
निःस्वार्थकर्माथ जगद्धिताय ।
किमेतयोः पूर्वमथान्तिमं किं ?'
चित्तं यतेर्द्वन्द्वविलोलमित्थम् ॥४३॥

"अणोरणीयान्महतो महीया"-
न्नित्यस्य नित्यामनुभूतिमिच्छन् ।
दिव्यात्मशक्तेरपि सञ्चयार्थं
हिमालयं स्वालयमेष चक्रे ॥४४॥

न विस्मरन्सद्गुरुबन्धुवर्गं
भिक्षान्नवृत्तिर्यतचित्तवृत्तिः ।
स्वर्गातिगां भव्यनिसर्गशोभां
संभावयन्स्वं समयं निनाय ॥४५॥

शृङ्गाणि पश्यन्तुहिनावृतानि
शृण्वन्पुनर्निर्झरिणीनिनादान् ।
ध्यायन्ननन्तं धृतविश्वरूपं
स्वरूपलीनः स विहीनचिन्तः ॥४६॥

तुषारशैलभ्रमणान्निवृत्तः
स्वान्तेऽनुभूता समदिव्यशक्तिः ।
मित्रैरुषित्वा कतिचिद्दिनानि
स्वयं विनिश्चित्य च कार्यमूचे ॥४७॥

"एकोऽधुनाहं भ्रमितुं समीहे
सन्त्यज्य वो भारतसंस्तवार्थम्।
वासो भवद्भिः खलु बन्धनं स्या-
दीशः सखा वर्त्मनि केवलं मे !" ॥४८॥

अकिंचनः कम्बलसंवलोऽयं
दण्डी सकुण्डीककरैकवासाः।
अयाचिताशी तरुमूलवासी
ययावयं दिव्ययतिर्पदातिः ॥४९॥

जयपुर-गिरिनार-द्वारका-पुण्यमुम्बा-
अहमदपुरमावुं सन्महीशूरभूमिम्।
अजमिर-वरबिल्मग्राम-रामेशधामा-
न्यनवरतमगच्छद् भारतं द्रष्टुमिच्छन् ॥५०॥

कुर्वन्स्फुटं भारतमूर्तिपूजा-
रहस्यमज्ञानिजनस्य चित्ते।
पश्यन्निजान्तःकरणे दरिद्र-
दीनेषु चेशं किल विद्यमानम् ॥५१॥

जीर्णशीर्णवसनार्धसंवृतान्
किंक्रियाविषयमूढमानसान्।
वीक्ष्य निःस्वमनुजानितस्ततः
साश्रुणी अभवतां तदीक्षणे ॥५२॥

वेदान्तभूमावपि भारतेऽस्मि-
न्नीचोच्चभेदः कथमीक्ष्यतेऽयम्।
कः स्यादुपायो विपदः समाप्तौ
सचिन्तचित्तः परितो बभूव ॥५३॥

प्रासादमासाद्य यथा प्रसन्न-
स्तथा कुटीः प्राप्य स दुर्बलानाम् ।
प्रवर्तयँल्लोकहिते क्षितीशान्
क्लिश्यन्भृशं क्लेशहितान्विलोक्य ॥५४॥

कुत्राप्यधीती सुदृढप्रतिज्ञः
पातञ्जलं, पण्डितमप्यकार्षीत् ।
स्वतीव्रमत्या यमतीव चित्रं
सन्दर्शयन्निश्चयमेव मुख्यम् ॥५५॥

चैतन्यदेव-गुरुनानक-राम-कृष्ण-
श्रीबुद्धशंकरलसत्तुलसी - कबीरान् ।
सोऽवर्णयन्नवनवैर्वचनैः सुवर्णै-
र्येन प्रकाशितमभूदिव लोकचित्तम् ॥५६॥

शुभाशिषा पुत्रविभूषिताङ्कं
स खेतडीभूतिपतिं चकार ।
सन्नर्तकीगानविशुद्धभावः
'सर्वं खलु ब्रह्ममयं' बुबोध ॥५७॥

आतुषारविलसद्धिमाचलं
भारतीयधरणीं समादरात् ।
संस्पृशन्समहिशूरपार्थिव-
स्यालयेऽपचितिपात्रतां ययौ ॥५८॥

आपणे यतिवरो महीभृता
प्रार्थितोऽथ बहुमूल्यवस्तुनः ।
संक्रयार्थमवद"त्प्रदीयतां
मे यदीष्टमिह धूमवर्तिका" ! ॥५९॥

रामेश्वरप्रेक्षणमोदितान्तः
कन्यां कुमारीं चलितः प्रयातुम् ।
आरुह्य च प्रस्तरखण्डमेकं
ध्याने गभीरेऽथ यतिर्विलीनः ॥६०॥

सहस्रशोऽब्दाहितभारतीय-
तपःफलीभूतगुरोः सकाशात् ।
पारेसमुद्रं त्वरितं प्रयातुं
यतिः कृती प्रेरणमाप दिव्यम् ॥६१॥

"पुत्र ! प्रतिष्ठस्व जयाय देवी
सरस्वती त्वद्रसनासनास्तु" ।
मातुर्वरं प्राप्य स विश्वधर्म-
सम्मेलनं गन्तुमथ प्रवृत्तः ॥६२॥

कृता प्रतिज्ञा शिरसा नतेन
धर्मैकतां मानवबन्धुभावम् ।
संस्थापयिष्यामि जगत्यमुष्मि-
न्न कामयेऽहं जननि ! स्वमुक्तिम् ॥६३॥

शान्तिं साम्यं जीवसेवां च मैत्रीं
पाश्चात्त्येभ्यः श्रावयिष्यन्प्रकाशम् ।
दास्याम्येभ्यो विश्वधर्मोपदेशं
स्वे स्वे धर्मे श्रद्धया संस्थितेभ्यः ॥६४॥

इतो ददर्शायमखण्डभारतं
प्रचण्डशक्त्या चिरदास्यदण्डितम् ।
दरिद्र-नारी-नरकोटिमण्डितं
विखण्डितं जात्युपजातिकण्डनैः ॥६५॥

पुरा तु कालत्रयदर्शिभिर्युतं
महर्षिभिर्विश्वजनीनकर्मभिः ।
सुरैरपि प्रार्थितसंस्थितिक्रमं
क्रमेण शीर्णं विविधैर्दुराक्रमैः ॥६६॥

"पुनस्तथाध्यात्मिकभावधारा-
प्रसारतो भारतमातृभूमिम् ।
समुज्ज्वलां विश्वनुतस्वरूपां
गुरूपदिष्टेन पथा करिष्ये" ॥६७॥

, ॥ इति पूर्वार्धम् ॥

## उत्तरार्धम्

वर्षे गुणाङ्कवसुचन्द्रमितेऽथ मासे
ऽयं पञ्चमेऽवनिगुणे दिवसे प्रतस्थे ।
वेदान्तधर्ममुपदिश्य जगद्विजेतुं
यद्भारतं न खलु केवलजीवनार्थम् ॥६८॥

मुम्बापुरीतो निजवाष्पनौका-
पृष्ठस्थितो भारतभूमिमूचे ।
"मातः परेषां दलिते ! पदैस्त्व-
च्चिन्ताभराद् व्याकुलतां गतोऽहम्" ॥६९॥

सीलोनसिंगापुरकैंटनादि-
पुराण्यतिक्रम्य ययौ जपानान् ।
आध्यात्मिकैक्यं सह भारतेन
वीक्ष्येह लोकाभ्युदयं शशंस ॥७०॥

प्रशान्तमुल्लङ्घ्य महासमुद्रं
यतिः शिकागो-नगरीमयासीत् ।
सविस्मितो दृष्टतदीयसम्पद्-
विज्ञानशिल्पोन्नतियन्त्रशक्तिः ॥७१॥

विहस्य यतिवेषतः कतिभिरज्ञलोकैर्मुहु-
स्तिरस्कृतविमानितो ध्रुवमसौ तमःसंस्थितः ।
अयापयदयं निशां क्वचन पेटिकामाश्रयन्
हिमेन परिपीडितो रहसि बाष्पयानालये ॥७२॥

कुतोऽप्यनासादितसंस्तवस्य
यशःप्रसारेऽस्य न हानिरासीत् ।
प्रकाशदानेऽधिकृतो रविः स्या-
न्न वेति कोऽज्ञः कुरुते परीक्षाम् ॥७३॥

तद्योग्यतादर्शनचित्रितः सन्
'राइट्' - सुधीर्भाषितवान्यथार्थम् ।
"अमेरिकास्थाखिलकोविदेभ्यो-
ऽप्यसौ गरीयान्धिषणाप्रकाशे" ॥७४॥

महासभामञ्चगतोऽयमुच्चै-
"रमेरिकाभ्रातृभगिन्य" इत्थम् ।
सम्बोधयन्तैः करतालिकानां
दानात्समुत्थाय समादृतोऽभूत् ॥७५॥

स कोटिशो भारतसंस्थितानां
सभागतोऽभूत्प्रतिभूस्वरूपः ।
ओजस्विनो चास्य सरस्वतीयं
भृता भृशं विश्वजनीन-भावैः ॥७६॥

विश्वाश्रयो भारतधर्ममार्गः
साधारणो गौरववाननादिः ।
समानमानाः खलु सर्वधर्मा
गन्तव्यमेकं तु समं समेषाम् ॥७७॥

अहो ! अहोऽदः स्मरणीयमासीद्
वेदान्त उच्चासनसंस्थितोऽभूत् ! ।
प्राचो-प्रतीच्या मिलिताद्य नूनं
संसारशान्तेरिह सूत्रपातः ! ॥७८॥

"समागतोऽहं नवधर्मशिक्षा-
दाने समर्थादिह भारताच्चेत् ।
सगौरवं स्वान्तमभून्मदीय-
मुदारभावा ननु जन्मभूर्नः ॥७९॥

मण्डूकवत्संकुचितेक्षणाः स्मः
स्वधर्ममेवेह समर्थयन्तः ।
त्यक्त्वाल्पसंसारधियं कुरुध्वं
समत्वसृष्टिं सविशालदृष्टिम् ॥८०॥

अहैव तस्योक्तिवशात्प्रतीच्या-
महाय कीर्तिः प्रसृताऽनुवन्ते ।
"किं भारते ज्ञानिजनावकीर्णे
धर्म-प्रचारः सफलीक्रियेत ॥८१॥

धर्मो बहुर्भारतवासिपार्श्वे
नोद्धारकार्येण तदास्ति कार्यम् ।
चर्चस्य निर्माणमपार्थमेवं
चर्चान्नदानार्थमिहार्चनीया ॥८२॥

दया मनःशुद्धिमहानुभावता:
न लक्षणं कस्यचिदेव वर्त्मनः ।
सतां तु सर्वत्र जनोरसातले
'ममैव धर्मोऽस्ति महान्' वृथा वचः ॥८३॥

अमेरिकातो निजहिन्दुबन्धू-
न्प्रति स्वयं प्रेषितवान् प्रवृत्तिम् ।
"प्रायोऽत्र लोका धनपानभोगा-
सक्ताः परं धर्मविचारशून्याः ॥८४॥

'देशे महान्डालर एव शक्ति-
स्तिरस्क्रियन्ते धनिभिर्दरिद्राः ।
हन्यः पशुर्वन्य इवादिवासो
द्वेषेण नव्यैः करुणादरिद्रैः ! ॥८५॥

"विचारशीलास्तु नवप्रकाशं
प्राप्तुं स्थिता भारतदत्तनेत्राः ।"
विलोक्य वेदान्तसभाविभागं
संस्थापयामास यतिः प्रतीतः ॥८६॥

प्रचारकार्यस्य कृते नवीना-
ल्लोकादसावांग्लरसां चचाल ।
व्यलोकि लोकैरुप जेतृशीलै-
र्जितावनिस्थोऽप्यमितादरेण ॥८७॥

"मत्तो घृणावानधिकं न कोऽपि
मन्ये समागच्छदिहांग्लजातौ ।
परं मदन्योऽधिकहार्दसान्द्रो
न यास्यतीतः" समभाषतैषः ॥८८॥

अहो गुणग्राहकताङ्ग्लनॄणां
भक्ता यतः केऽपि निवेदिताद्याः ।
त्यक्त्वा स्वदेशं यतिना सहैव
सेवार्थमाजीवनमीयिवांसः ॥८६॥

वृद्धः सुधोर्मुल्लरमोक्षनामा
तेनागतो वाष्परथालयान्तम् ।
ऊचे"ऽनिशं वन्दितरामकृष्ण-
शिष्येण सङ्गः खलु दुर्लभोऽयम् " ॥९०॥

स यादृशं स्वैर्मधुरैर्वचोभि-
र्मनांसि नृणां प्रसभं चकर्ष ।
न कश्चिदन्यः खलु भारतीयो
न केशवो वा न च मोहनो वा ॥९१॥

प्रभावितास्तत्र विचारवन्तो
ग्रंथैरनेकैर्यतिना प्रसिद्धैः ।
संस्थापितास्तेन च भिन्नसंस्थाः
स्थास्यन्ति सर्वा अपि सर्वकालम् ॥९२॥

अमेरिकाङ्ग्लावनियुग्ममेवं
गमागमौ वर्षचतुष्टयं सः ।
कुर्वन्प्रयांश्चाप्यपरप्रदेशान्
नेपल्समार्गेण गृहं प्रतस्थे ॥९३॥

मुन्यङ्कदिग्भूमितहायनस्या-
यमादिमासेऽह्नि शराब्जसिद्धे ।
स्वामी स्वशिष्यैः सह वाष्पनौका-
यानेन लंकानगरीं प्रविष्टः ॥९४॥

सहस्रशः स्त्रीपुरुषैस्तदङ्घ्रे-
रजोऽभिवन्द्य स्वशिरोभिरूहे।
समुद्रपूरादधिकश्च तेषा-
मानन्दपूरो ववृधे मनस्सु ॥९५॥

"जगद्विजित्याद्य समागतोऽयं
जातो ध्रुवं नोऽनभिषिक्तराजः।
युक्ताः पुनर्विस्मृतसम्पदा स्मो
धन्या" जनाः प्रोचुरिमं विलोक्य ॥९६॥

सोऽप्यब्रवीत्तान् "यदकिञ्चनोऽहं
समादृतः स्नेहयुतैर्भवद्भिः।
मन्येऽद्य सम्मानितमार्यधर्मं
विश्वेऽस्मदाध्यात्मिकवैभवं च ॥९७॥

साष्टांगपातं चरणे पतन्तः
नरा नृपाश्चाप्यतिभाग्यवन्तः।
स्कन्धैः स्वयं तस्य रथं वहन्तः
प्रादर्शयन्स्नेहभरं स्वकीयम् ॥९८॥

तदुक्तवाक्यान्यरविन्दगान्धी-
जवाहरान्प्रेरणवन्त्यभूवन् ।
दृश्याद्य या भारतजागृतिः सा
तस्यैव नूनं वचसां प्रभावात् ॥९९॥

तेनाथ मुन्यङ्कदिगब्जवर्षे
शरैर्मिते मासि दिने तथाद्ये।
सेवाश्रमोऽत्यन्तपरिश्रमेण
संस्थापितोऽभूच्चिरकालसंस्थः॥ १००॥

मनुष्यकल्याणकृते कृतोऽयं
श्रीरामकृष्णेति पवित्रनामा ।
स्वमुक्तये विश्वहितार्थमस्य
प्रयोजनं सेवकवृन्दमध्ये ॥१०१॥

'मठो'ऽथ 'सेवाश्रम' इत्थमस्मिन्
शाखाद्वयस्याद्वयभावनाङ्का ।
विश्वश्रुतास्तेऽश्रुतपूर्वसेवा
देवस्य या मानववृन्दमूर्तेः ॥१०२॥

'त्वं मातृदेवो भव' 'तातदेवः'
श्रुतेरसावास पुरोपदेशः ।
'दरिद्रदेवो भव' 'मूर्खदेवः'
संयोजितोऽयं युगधर्मकर्त्रा ॥१०३॥

प्राणान्नविद्या - शुभधर्मदानैः
शाखाप्रशाखाभिरियं विराजम् ।
चिराय लोकं किल सेवमाना
मानं यशश्चाप्यतुलं लभेत ॥१०४॥

मठप्रतिष्ठामनुसम्प्रयातो
यतिर्हिमाद्रिं प्रति दर्शनार्थम् ।
संस्थापितस्तेन तथालमोडा-
ऽश्रमः प्रतीतं नवभिक्षुकेन्द्रम् ॥१०५॥

"सन्त्यज्य देवानखिलान्भवद्भिः
समाजदेवः सततं निषेव्यः ॥
अशिक्षितो यावदसौ दरिद्रो
भवेत्किमर्थेतरदेवपूजा ?" ॥१०६॥

इत्थं विलग्नो नरलोककार्ये-
प्वनास्थया शीर्णशरीरशक्तिः ।
विरामकामः परिवर्तनार्थं
पुनः प्रतीचीं स दिशं प्रतस्थे ॥१०७॥

पवित्रवेलूडमठे सनेत्रा-
काशांकचन्द्राब्जतुरीयसासे ।
भृगौ निशि ध्यानजपप्रसक्तो
महासमाध्यम्बुधिमाविवेश ॥१०८॥

"सेवा तवेयं मम जीवनैक-
व्रतं समीहे नितरां स्वमुक्तिम्" ।
पुरः कुमार्याः कृतवान्प्रतिज्ञां
"कार्यं समाप्यैव तनुं त्यजेयम्" ॥१०९॥

आनन्दसंयुतविवेकयतेश्चरित्रं
चित्रं जना जगति ये परिशीलयन्ति ।
तेषां विशुद्धहृदये नररूपदेव-
सेवामतिः स्वयमुदेति मुदे विमुक्तेः ॥११०॥

इति साहित्याचार्य-एम० ए०-अध्यापकभण्डारकरोपाह्वत्र्यंबकशर्मणा
विरचितं शतश्लोकात्मकं विवेकानन्दचरितम् ।

—:-*-:—

# स्वामिविवेकानन्दस्तोत्राणि

## श्रीस्वामिविवेकानन्दस्तोत्रम् *

प्रकटशरीरमीशं भवभारनिराशं
परहितकलितललितलीलाभासम् ।
चन्द्रमौलिनटनाथनरेन्द्रं
गुरुमिह शम्भुमीडे ॥ १ ॥

विवेकविरागघनं श्रुतिविस्फारनेत्रं
गलितमिहिरकररञ्जितगात्रम् ।
चन्द्रमौलिनटनाथनरेन्द्रं
गुरुमिह शम्भुमीडे ॥ २ ॥

छिन्नजन्मजराकीनाशपक्षं
करुणकटाक्षविनिक्षेपदक्षम् ।
चन्द्रमौलिनटनाथनरेन्द्रं
गुरुमिह शम्भुमीडे ॥ ३ ॥

गुरुगतजीवितमहो कामकाञ्चनत्यक्तं
मायिनमिव कदा व्यक्तमव्यक्तम् ।
चन्द्रमौलिनटनाथनरेन्द्रं
गुरुमिह शम्भुमीडे ॥ ४ ॥

शिरोधृतक्षयितसप्तमकलचन्द्रं
ज्ञानभक्तिकृतियोगैकचित्तम् ।
चन्द्रमौलिनटनाथ - नरेन्द्रं
गुरुमिह शम्भुमीडे ॥ ५ ॥

तस्य शिष्येण श्रीशरच्चन्द्रचक्रवर्त्तिना कृतम् ।

---

* उद्बोधनस्य विवेकानन्दशतवार्षिकीसंख्यातः संगृहीतम् ।

## श्रीमत्स्वामिविवेकानन्दस्तोत्रम्

स जयति जगति स्वामी वन्द्यो
वीरविजेतृ - विवेकानन्दः ।
मानुषमोहविवर्जितहृदयो
गुरुरिह पूर्णः सिद्धः सदयः ॥ १ ॥

भुवनेशी बहुसाधनसिद्धं
वीरेश्वरसमुदितचिद्देहम् ।
ईशनिमन्त्रितभूतलजातं
वन्दे वीरविवेकानन्दम् ॥ २ ॥

भूतपतिमहादेवनिकाय-
व्यक्तश्रद्धाभक्तिप्रणयः ।
भारतदुर्गतिदर्शनशीर्णः
पारावारोत्तार - विलग्नः ॥ ३ ॥

श्रीशिवसुन्दरदिव्यज्योति-
गैरिकमण्डितचिद्घनमूर्तिः ।
धरणिनरगणसुमङ्गलकान्तिः
स्वामिविवेकानन्दख्यातिः ॥ ४ ॥

यतिगणनन्दितभास्वरसूर्यं
संयमभूषणविक्रमवीर्यम् ॥
नवयुगनायकभारतचन्द्रं
वन्दे वीरविवेकानन्दम् ॥ ५ ॥

धिक्कृतधनिजननश्वरभोगं
प्रज्ञानिर्जितभवगतिरोगम् ।
शिवधीचेतनसेवावादं
नमत स्वामिविवेकानन्दम् ॥ ६ ॥

लोकहितकरसुसाधितकृत्यं
कामविवर्जितसंचितसत्यम् ।
दुःखनिषूदनविगतद्वन्द्वं
वन्दे वीरविवेकानन्दम् ॥७॥

दीनजनगणक्लेशविनाशं
पतितोत्तारणनीचसनाथम् ।
जीवनदायकतत्त्वालापं
वन्दे वीरविवेकानन्दम् ॥८॥

शिवमतिपूजा भूतगसेवा
सन्ततभक्त्या मानवकार्या ।
इति नवभावं जगति लपन्तं
वन्दे वीरविवेकानन्दम् ॥९॥

वैराग्यविवेकोभयसाध्यं
मायापाशच्छेदनकार्यम् ।
करतलगतसुलभं खलु तत्त्वं
स्तौमि विवेकानन्दनसिद्धम् ॥१०॥

गुरुर्बोधिन्याप्तात्समुपगमनेनैव यमिनां
वरेण्यः सम्प्राप्तः श्रुतिगतपदार्थं सुगहनम् ।
प्रसंख्यानाध्यासप्रतिपदसकृत्तत्त्वविदसौ
विवेकानन्दो नः शरणमिह भूयात्तनुभृताम् ॥११॥

इति ब्रह्मचारिमेधाचैतन्यविरचितं श्रीविवेकानन्दस्तोत्रं समाप्तम् ।

## स्वामिविवेकानन्दस्तुतिः

प्राची तु विस्मृतनिजात्ममयस्वरूपा
रूपादिबाह्यविषयैकपराप्रतीचीं ।
इत्थं विलोक्य तमसावृतशुद्धभावा
भावप्रभावमलिना कलिना धरित्रीम् ॥१॥

वेदान्ततत्त्वमुपदिश्य नवप्रकाशं
विश्वं तमःप्रसरसङ्गतमुद्दिधीर्पुः ।
यः सप्रभं सुकृतवान् कृतवांश्चिदात्म-
स्नेहान्वितो विजयते स विवेकदीपः ॥२॥

संस्थाप्य निर्मलमतिं नवभिक्षुसंघं
निःस्वार्थभावमिह धर्मसमन्वयार्थम् ।
सेवा नरस्य परमा परमेश्वरस्य
सेवेति सिद्धमकरोन्निजकर्मयोगैः ॥३॥

श्रीरामकृष्णमयधीरपरोक्षबोधः
संस्थापयन्यदयमुज्ज्वलतामयासीत् ।
लोके तदाश्रमकदम्बकमुन्नतं स्यात्
यावत्क्षपाकरविभाकरभाषिता भूः ॥४॥

इति साहित्याचार्य-एम० ए०-भण्डारकरत्र्यम्बकशर्मणा विरचिता
श्रीस्वामिविवेकानन्दस्तुतिः ।

—:*:—

## स्वामिविवेकानन्दवन्दना

मूर्तमहेश्वरमुज्ज्वलभास्करमिष्टममरनरवन्द्यम् ।
वन्दे वेदतनुमुज्झितगर्हितकाञ्चनकामिनीवन्धम् ॥ १ ॥
कोटिभानुकरदीप्तसिंहमहो कटितटकौपीनवन्तम् ।
अभीरभीर्हुंकारनादितदिङ्मुखप्रचण्डताण्डवनृत्यम् ॥ २ ॥
भुक्तिमुक्तिकृपाकटाक्षप्रेक्षणमघदलविदलनदक्षम् ।
बालचन्द्रधरमिन्दुवन्द्यमिह नौमि गुरुविवेकानन्दम् ॥ ३ ॥

( स्वामिविवेकानन्दशिष्य ) श्रीशरच्चन्द्रदेवशर्मणा विरचिता ।

## श्रीविवेकानन्दस्तुतिः

श्रीरामकृष्णपदपङ्कजचञ्चरीकः
श्रीसारदाऽभयमवाप्य विराजतेऽसौ ।
ज्योतिर्मयो विमलकान्तवपुर्नरेन्द्रो
वेदान्तधर्मपरिशीलननित्यसिद्धः ॥

जगच्छून्यं पुण्यैश्चिरमतितरां पापकलितं
जडीभूतं स्वान्तं प्रणयरहितं ग्लानिभरितम् ।
विवेकानन्दाख्यैरमृतसलिलैः सिक्तमकरोद्
विवेकानन्दाख्यां नृवर ! सुतरामादितभवान् ॥

जगन्मातृसुधासिन्धौ भवान् सर्वान् न्यमज्जयत् ।
ब्रह्मज्ञाय नमः शश्वत् स्वामिने ब्रह्मचारिणे ॥

इति काव्यतीर्थ-न्यायाचार्येण पं० श्रीसिद्धेश्वरभट्टाचार्येण विरचिता श्रीविवेकानन्दस्तुतिः समाप्ता ।

—*०*—

## श्लोकबद्धं संक्षिप्तस्वामिविवेकानन्दचरितम्

### श्लोकानां क्रमशः तृतीयाक्षरैः

"स्थापकाय च धर्मस्य सर्वधर्मस्वरूपिणे । अवतारवरिष्ठाय रामकृष्णाय ते नमः ॥"

अयं श्रीस्वामिविरचितः श्लोकः सम्पद्यते ।

गृह स्था श्रममत्यन्तं पित्रोः कुर्वन् समुज्ज्वलम् ।
वीरेश्वरप्रसादेन जातो दत्तकुले बिले ॥ १ ॥

धन्यः प तिर्विश्वनाथो भार्या च भुवनेश्वरी ।
जगच्छिवाय यद्गेहे लेभे जन्म शिवः स्वयम् ॥ २ ॥

बाल का नां स सर्वेषां नेता साहसकर्मसु ।
'नरेन्द्र' इति नाम्नाभून्मेधावी स्मृतिमानभीः ॥ ३ ॥

नित्यं य स्तेजसा ज्ञानस्थैर्य-धैर्य-बलादिभिः ।
अगमद्दर्शनादेव महतां प्रीतिपात्रताम् ॥ ४ ॥

स्वयं च रामकृष्णेन दृष्ट्वा देवर्षिमण्डलात् ।
आगतोऽयमिति प्रोक्तं 'लोककल्याणहेतवे' ॥ ५ ॥

अगा ध म्बलमालोक्य तन्दुद्धे'र्हृष्टि' उक्तवान्
'नरेन्द्रेण समः शिष्योऽदृष्टपूर्वो मया भुवि' ॥ ६ ॥

स म र्म ज्ञः सर्ववस्तुतत्त्वस्यानुभवं विना ।
कस्यापि नाकरोद्वाक्ये विश्वासं हीनदृष्टिवत् ॥ ७ ॥

स्वान्तेऽस्य संशयो जातः शनैरीशोऽस्ति वा न वा ।
नालमासीद्यतः कोऽपि वक्तुं 'दृष्टो मयेश्वरः' ॥८॥

पित्रा स मीहितं तस्य विवाहायोजनं परम् ।
तेनोक्तं भवितुं शक्यः किं योगो योगभोगयोः ? ॥९॥
स स र्वं स्वं त्यक्तुकामोऽभूत्सत्यान्वेषणाकुलः ।
उपदिष्टोऽथ मित्रेण 'ठाकुरं शरणं व्रज' ॥१०॥
गदा ध रस्य सान्निध्यान्नरेन्द्रश्छिन्नसंशयः ।
दृष्ट्वा परावरं ज्योतिर्भिन्नग्रन्थित्वमाययौ ॥११॥
'सत्क र्म ज्ञानयोरैक्यं' 'सर्वधर्मसमन्वयः' ।
'नृसेवा' 'ऽनेकतायामप्येकता' तेन शिक्षिता ॥१२॥
एतत् स्व कार्यसिद्ध्यर्थं महावाक्यचतुष्टयम् ।
स्वीकृतं तेन जातेयं विवेकोपनिषत् परा ॥१३॥
"बाह्य रू पावृतस्वान्तलोकानां मार्गदर्शकः ।
भूयास्त्वं" रामकृष्णोऽस्मै दत्तवानाशिषं स्वयम् ॥१४॥
स कोऽ पि दिव्यः पुरुषो नरदेहधरो ध्रुवम् ।
यस्मिन्संक्रामिता शक्ती रामकृष्णेन पूर्णतः ॥१५॥
गुरु णे त्थं दत्तदिव्यप्रेरणः सर्वशक्तिमान् ।
जातः शिष्यो निर्धनत्वं प्राप सद्यस्तथा गुरुः ॥१६॥
दृष्ट्वा अ खिलदेशस्य भुवो दारिद्र्यपीडिताः ।
विशालहृदयेनासीद् दृष्टिस्तस्याश्रुसंकुला ॥१७॥
अथा व गम्य 'विश्वेऽस्मिन्कार्यं धर्मप्रचारणम्' ।
इत्याज्ञां गुरुतः, सोऽगात् शिकागोधर्मसभ्यताम् ॥१८॥
निःस्व ता स्वामिनस्तस्य न बाधां विदधेऽध्वनि ।
अमेरिकायां सर्वोच्चसम्मानं प्राप्तवांश्च सः ॥१९॥
संसा र स्य जनाः सर्वेऽमर्यादज्ञानसागरम् ।
तमालोक्य स्तुतिं तस्य मुक्तकण्ठं समादधुः ॥२०॥

गौर व म्भारतस्येदं कीर्तिरेषा समुज्ज्वला ।
यत्तेन सर्वदेशेषु सत्यधर्मः प्रकाशितः ॥२१॥
अका रि जागृतेः कार्यं तेनासेतुहिमाचलम् ।
स्तुतिं मुखशतेनापि तस्य कर्तुं न शक्यते ॥२२॥
प्रति ष्ठा तेन संघस्य लोकसेवाकृते कृता ।
रामकृष्णाश्रमः स्थेयात्स यावच्चन्द्रभास्करौ ॥२३॥
सोऽयं य च्चरणासक्तां नत्वा धूलिं महीभृतः ।
स्त्रीबालयुवविद्वांसो धन्यंमन्यत्वमागताः ॥२४॥
उद्धा रा र्थं मातृभूमेः 'स्त्रीशिक्षा'-'घटनं नृणाम्' ।
'अध्यात्मा'-'भ्युदयौ' तेन चतुःसूत्री समाश्रिता ॥२५॥
सत्य म स्तून्नतिः श्रेष्ठा विज्ञाने सर्वतोमुखी ।
भारतस्य परं मेने सोऽध्यात्मं जीवनाश्रयः ॥२६॥
शुद्धा कृ तिर्दया श्रद्धा सेवाऽहिंसेश्वरागमः ।
भ्रातृता सर्वधर्माणां लक्षणं स्वामिसम्मतम् ॥२७॥
सुनि ष्णा तः स शास्त्रेषु यत्किञ्चित्प्रोक्तवान्स्वयम् ।
सर्वं वचनजातं तद्वेदतुल्यं सदातनम् ॥२८॥
जात य स्तु कृतिर्नृणां न ता ईश्वरनिर्मिताः ।
अतः सर्वे समा मर्त्या ईशाप्तेरधिकारिणः ॥२९॥
वेदां ते जीवरूपं यन्नित्यं बुद्धं च निर्मलम् ।
तदुच्चैर्घोषितं तेन 'चिन्मयः पापभाक्कथम्' ॥३०॥
समा न मीसा-कृष्णाल्लाबुद्धाद्याख्या कदम्बकम् ।
केवलं नाम्नि भेदोऽयं नार्थे भेदोऽस्ति सोऽब्रवीत् ॥३१॥
स्यात्त मः प्रसराच्छन्नं यज्जगद्भेदबुद्धितः ।
स प्रकाशं शान्तिपूर्णं विवेकानन्दवर्त्मना ॥३२॥

साहित्याचार्य-एम० ए०-भण्डारकरोपाह्वेन त्र्यंबकशर्मणा कृतं
विवेकानन्दचरितम् ।

## विवेकानन्द-प्रणतिः

यदा यदा निर्मलधर्मदर्पणे
कलङ्करेखा निपतत्यहो तदा ।
प्रजायते श्रीभगवान्दयार्णवो
विशोधनार्थं खलु दर्पणस्य च ॥१॥

यदा स्मार्ताचार्याः श्रुतिमतविरोधेन हि पुन-
र्भजन्ते साकीर्णं प्रभवति मतं भेदविषये ।
विवेकानन्दोऽयं कथयति कथां चौपनिषदी-
मभेदो जीवानां प्रतिघटपटं ब्रह्मवसतिः ॥२॥

न जातिभेदो न च वर्णदुष्टि-
र्येनापि केनापि पथा भजस्व ।
दयार्णवस्ते शरणं तथा स्या-
द्यथा नदीनां शरणं समुद्रः ॥३॥

या भेदबुद्धिर्विहिता तु शास्त्रे
साज्ञानलाभं विहिता न पश्चात् ।
ज्ञाने प्रजाते न हि विद्यते सा
समन्वयः सर्वगतो विभाति ॥४॥

उदारता यस्य हि सार्वभौमिकी
न द्वेषलेशोऽपि च यस्य मानसे ।
सर्वास्तु नार्यो जननीव पूजिता
नराश्च नारायणवत्सुमानिताः ॥५॥

वेदान्ततन्त्रेषु कथाविचारे
यस्यैव बुद्धिः कुशवत्सुतीक्ष्णा ।

'धर्मस्य तत्त्वं निहितं गुहायां'
संगृह्य यो यच्छति सर्वजीवे ॥६॥
दरिद्रनारायणसेवनव्रतं
लक्ष्यं हि यस्यैव च नित्यमासीत् ।
श्रीरामकृष्णस्य वरेण्यशिष्यं
नरेन्द्रनाथं प्रणता नमामः ॥७॥

धन्योऽसि हे धर्मसमन्वयार्थिन् !
'धर्मे गुरुर्भारतवर्षभूमिः' ।
त्वयैव देशान्तरसंस्थितेन
संस्थापितं धर्ममहासभायाम् ॥८॥

वीरा वयं नो यदि शस्त्रयुद्धे
श्रेष्ठा वयं धर्ममये च संख्ये ।
संदेहबिन्दुर्न हि विद्यतेऽस्मिन्
भवत्प्रसादादधुना पृथिव्याम् ॥९॥

श्रीरामकृष्णः खलु धर्मवृक्ष-
स्तस्यापि मूलं श्रुतिवाक् सुनित्या ।
स्कन्धो विवेकः समुदारचेता
आनन्दरूपा बहवश्च शाखाः ॥१०॥

अस्य प्रशाखाः प्रसृताः पृथिव्यां
छायादिदानैः सकलानवन्ति ।
स्कन्धात्प्रजाताः फलपुष्पवत्यः
शाखास्ततःस्कन्धमिमं नमामः ॥११॥

श्रीदक्षिणारञ्जनशास्त्रि-एम० ए०-विरचिता विवेकानन्दप्रणतिः ।

उद्बोधनपत्रिकातः स्वत्वाधिकारिणामनुमतिक्रमेण षड्विंशतिवर्षस्य षष्ठसंख्यायाः संगृहीता ।

## स्वामिपादश्रीश्रीविवेकानन्दस्मरणम् *

यदा धर्मो ग्लानिं वहति बहुधा दुर्गतिवशा-
दधर्मा वर्धन्ते जगति जनदुःखाय महते ।
तदा दीप्तप्रेमा किमपि वपुराधाय भगवान्
विनेतुं दौर्गत्यं चरति सुचिरं क्षोणिवलये ॥१॥

स्वदेशप्रीत्या यो विमलतमनीत्या प्रथितया
कयाचिद्विख्यातो जगति बहुमानं खलु भजन् ।
प्रियो नः सौभाग्यादजनि धरणौ भारतनृणां
विवेकानन्दोऽसौ जयति यतिवृत्तान्तविबुधः ॥२॥

विदित्वा वेदान्तं विविधविधिशान्तं सुमनसां
तपः स्मारं स्मारं मुनिर्नियमसारं परिचरन् ।
चरन् देशे देशे निरदिशदहो तत्त्वमतुलं
विवेकानन्दोऽसौ जयति यतिवृत्तान्तविबुधः ॥३॥

यदीयो वेदान्तः प्रथमनवसिद्धान्तमहिमा
हिमार्तानां दीप्तो रविरिव ददे शान्तिमसमाम् ।
य एकः प्रोद्दीप्तः प्रतिभयजडं धर्ममतनोत्
विवेकानन्दोऽसौ जयति यतिवृत्तान्तविबुधः ॥४॥

पवित्रे चारित्रे निरवधिविनीतेन विधिना
सुविज्ञातो लोके विविधविधिमार्गानुपदिशन् ।
महामोहध्वान्तं सपदि लयमानीय महसा
विवेकानन्दोऽसौ जयति यतिवृत्तान्तविबुधः ॥५॥

---

* उद्बोधनपत्रिकातः स्वत्वाधिकारिणामनुमतिक्रमेण त्रयोविंशतिवर्षस्य दशमसंख्यायाः संगृहीतम् ।

गुणानामाधारः शुभचरितसारो यतिवरः
प्रसारं धर्माणां विदधदपि पारे जलनिधेः ।
निधिं शास्त्राम्भोधेरनुगुणगणं यः समतनोत्
विवेकानन्दोऽसौ जयति यतिवृत्तान्तविबुधः ॥६॥

बहूनां शिष्याणां गुरुरमरधामातिथिरभूत्
समुद्देश्यं लोके सुचिरमुपदेष्टुं व्यवसितः ।
तमादर्शीकृत्य प्रचरति सती शिष्यसमिति-
स्ततो जीयादेषा सकलशुभसंपादनपरा ॥७॥

जीयात्स्वामिवरस्य भूमिवलये धर्मोपदेशावलि-
र्जीयाद् गौरवदीप्ततत्त्वविभवः प्राचीनशास्त्राश्रयः ।
जीयात्स्वामिविनीतशिष्यसमितिः सर्वोच्चभावप्रिया ।
जीयाद्भारतभूतलं सुविपुलं जन्मावनिः स्वामिनः ॥८॥

इति श्रीकालीपदतर्काचार्यविरचितं स्वामिपादश्रीश्रीविवेकानन्दस्मरणम् ।

## विवेकानन्दाष्टकम् *

स्वामिनं श्रीगुरुं नत्वा विवेकानन्दमव्ययम् ।
स्तोत्रमेतत्प्रवक्ष्यामि सर्वपापप्रणाशनम् ॥
ॐ कार-पावित्र्य-विशुद्ध-मूर्तिं
वन्दे निरङ्केन्दुविनोद-कान्तिम् ।
विवेकसंमोदहृतारिगर्वं
भवाब्धिपोतं प्रणमामि देवम् ॥१॥

---

* 'उद्बोधनपत्रिकातः स्वत्वाधिकारिणामनुमतिक्रमेण षष्ठवर्षस्य सप्तम-संख्यायाः संगृहीतम् ।

न टवर-निभरूपं नन्दि-नाथ - प्रशान्तं

नलिननयनमग्र्यं मोक्षसंसर्गहेतुम् ।

निखिलमनुजपालं संशरण्यं दयालुं

तमहमजविवेकानन्ददेवं प्रपद्ये ॥२॥

मो हान्धतमसच्छेदं शारदेन्दुशतप्रभम् ।

भास्वरं हृदयाकाशे वन्दे सत्यसनातनम् ॥३॥

वि षमविषयबाणैर्विद्धसंलुप्तबुद्धिं

सकलभवजनं यश्चावलोक्यार्द्रचित्तः ।

जननमरणदुःखं प्राप्तबोधः प्रसेहे

तमहमजविवेकानन्ददेवं प्रपद्ये ॥४॥

वे दादिशब्दसामग्रीरत्नराजीमहोदधिम् ।

स्मरामि संसृतिश्रेयःसम्पत्तिमक्षरं गुरुम् ॥५॥

का रुण्यकल्पद्रुमचारुरूपं

गुरुं प्रपद्ये भवतापनाशम् ।

विराजमानं हृदि रम्यवेषं

मूर्तं विवेकं शरणं च नाथम् ॥६॥

नं द-श्रीरामकृष्णाख्यब्रह्मशिष्यमुदारकम् ।

दा सोऽहं सततं वन्दे विवेकानन्दमक्षरम् ॥७॥

थ मभयलयकारी यो बिभर्त्येकमूर्तिं

बहुरपि भुवने यः सर्वलोकैकबन्धुः ।

अचलगुरुसुमेरोर्धीरता यत्र भाति

तमहमजविवेकानन्ददेवं प्रपद्ये ॥८॥

श्रीश्रीविवेकानन्दस्वामिपादशिष्येण श्रीशरच्चन्द्रदेवशर्मणा

विरचितमेतत् स्तोत्रं समाप्तम् ।

## श्रीविवेकानन्दस्तोत्रम् *

जीवसेवाव्रतं यस्य लक्ष्यमासीन्महीतले ।
ज्ञानमात्मगतं यो वै तेन मार्गेण संगतः ॥

कर्मिणे ज्ञानिने चैव भक्ताय स्वामिने पुनः ।
विवेकानन्दरूपाय भूयो भूयो नमाम्यहम् ॥

यत्सेवाव्रतमामनन्ति मुनयो बुद्धो जिनः शंकरः
श्रीरामः कमनीयकाम्यकवने वृन्दावने माधवः ।
जाह्नव्याः सुतटेषु गौरगहने गौराङ्गदेवो यथा
तत्सेवाव्रतमद्य साधकवरः स्वामी पुनर्घोषते ॥१॥

देवा नागाश्च यक्षाः खगभुजगगणाश्चाप्सरोवंशभूता
गन्धर्वा राक्षसा ये सकलभुवनजाश्चासुरा वृक्षजाताः ।
शत्रुर्मित्रं च ये वा निखिलनरकजा यातनास्थाश्च जीवा
आब्रह्मस्तम्बरूपं जगदिदमखिलं तृप्यतां तृप्यतां भोः ॥२॥

चण्डालो ब्राह्मणो वा गुरुरुत वयसा लाघवः पण्डितो वा
मूर्खो दीनो धनाढ्यः सकलगुणगणैरन्वितो निर्गुणो वा ।
सर्वे नारायणास्ते वयमपि च तथा यूयमप्यत्र भूता
आत्मा नारायणोऽयं प्रचरति बहुशः सेव्यतामात्मरूपः ॥३॥

द्वारे भिक्षुर्बुभुक्षुः कथयति करुणं "मुष्टिमेयं कदन्नं"
क्षुद्रो मार्जारको मे विलपति नितरां "देहि मे मत्स्यखण्डम् ।"
ते सर्वे भूतजाताः सममपि जगतां सेविताश्चेद्भवेयु-
र्नूनं सैवात्मसेवा भवति च सकला नान्यतः सेवनान्मे ॥४॥

---

* उद्बोधनपत्रिकातः स्वत्वाधिकारिणामनुमतिक्रमेण त्रयोविंशतिवर्षस्य दशमसंख्यायाः संगृहीतम् ।

एवं पुत्रश्च दाराः सकलपरिजना बान्धवाश्चार्थराशिः
सर्वं यद्वास्मदीयं भवति च भुवने तत्तु नारायणार्थम् ।
वाक्यं कायो मनो मे भवति भगवता चालितं हृद्गतेन
दीनोऽहं भगवन्तवैव नियतं दासोऽस्मि दासाधमः ॥५॥

दासोऽहं भवतो गृहाण कृपया मत्कर्मलब्धं फलम्
एवं कर्मफलं समर्प्य भगवन्नारायणोद्देशतः ।
मुक्तः कर्मफलाद्विशुद्धहृदयो योगे मनो दीयतां
मुक्तिं बन्धनतो लभस्व नियतां 'कस्त्वं' पुनश्चिन्त्यताम् ॥६॥

नाहं कायो जघन्यः कफमलसहितः पञ्चभूतात्मको वा
नाहं छेद्यो न दाह्यो न च मरणवशो नापि जातः कदाचित् ।
नाहं कर्मी न भक्तो न च सुखमपि वा दुःखलेशो मदीयः
'सोऽहं' यः षष्ठचक्रे विलसति नियतं 'सच्चिदानन्दरूपः' ॥७॥

इत्येतत्तत्त्वजातं नवतरभुवने प्राच्यपाश्चात्त्यभागे
योऽयं नव्यावतारो गुरुकुलतिलको घोषयामास नादैः ।
येनायं धर्मराज्ये सकलजनगुरुर्भारतोऽस्यां धरण्या-
मित्येतत्साधितं वै सुनिपुणवचसा पूजितः सर्वथासौ ॥ ८ ॥

हे मुक्त ! लोकस्थितसिद्धसाधो !
भक्ताधमोऽहं न च कर्मलिप्सा ।
ज्ञानामृतं किं न हि तत्प्रजाने
निराश्रयोऽहं शरणं प्रयाचे ॥

इति श्रीदक्षिणारञ्जनभट्टाचार्य-बी० ए०-विरचितश्रीविवेकानन्दस्तोत्रं समाप्तम् ।

## श्रीमद्विवेकानन्दपञ्चकम् ।*

अनित्यदृश्येषु विविच्य नित्यं
तस्मिन्समाधत्त इह स्म लीलया ।
विवेकवैराग्यविशुद्धचित्तं
योऽसौ विवेकी तमहं नमामि ॥१॥

विवेकजानन्दनिमग्नचित्तं
विवेकदानैकविनोदशीलम् ।
विवेकभासा कमनीयकान्तिं
विवेकिनं तं सततं नमामि ॥२॥

ऋतं च विज्ञानमधिश्रय-
द्यन्निरन्तरं चादिमध्यान्तहीनम् ।
सुखं सुरूपं प्रकरोति यस्य
आनन्दमूर्तिं तमहं नमामि ॥३॥

सूर्यो यथान्धं च तमो निहन्ति
विष्णुर्यथा दुष्टजनान्छिनत्ति ।
तथैव तस्याखिलनेत्रलोभं
रूपं त्रितापं विमुखीकरोति ॥४॥

तं देशिकेन्द्रं परमं पवित्रं
विश्वस्य पालं मधुरं यतीन्द्रम् ।
हिताय नृणां नरमूर्तिमन्तं
"विवेकमानन्द"महं नमामि ॥५॥

---

* उद्बोधनपत्रिकातः स्वत्वाधिकारिणामनुमतिक्रमेण चतुर्दशवर्षस्य प्रथमसंख्यायाः संगृहीतम् ।

नमः श्रीयतिराजाय विवेकानन्दसूरये ।
सच्चित्सुखस्वरूपाय स्वामिने तापहारिणे ॥

इति स्वामिरामकृष्णानन्दविरचितं श्रीमद्विवेकानन्दपञ्चकम् ।

## श्रीश्रीविवेकानन्दाष्टकम् *

दधद् दिव्यज्योतिः परमरमणीयं नयनयोः
प्रसन्नास्यः सौम्यो मुनिकनकशोभाधरवपुः ।
सुधीः सत्यद्रष्टा भुवनवरणीयः श्रुतिधरो
विवेकानन्दोऽयं मनुजतनुधारी स्मरहरः ॥१॥

किशोरो ध्यानस्थो भुजगभयशून्यो ह्यविचलो
युवा दण्डी वैश्वानरसदृशदीप्तिर्भुवि चरन् ।
स्वधर्मभ्रष्टानां कलुषितधियां त्राणनिरतो
विवेकानन्दोऽयं गहनतिमिरे भास्वररविः ॥२॥

गुरोरन्तेवासी परमपुरुषस्य प्रियतमो
नरेन्द्रः सर्वेषामवनतजनानामभयदः ।
प्रतिज्ञायां भीष्मो विपदि च महीध्रोन्नतशिरा
विवेकानन्दोऽयं कुसुमललितो वज्रकठिनः ॥३॥

गृहे वित्ताभावाद्विचलितमनाः शान्तिरहितो
गतो वारं वारं गुरुवचनतो मातृसदनम् ।
'धनं मातर्देही'त्यनुनयवचस्तु प्रतिहतं
विवेकानन्दः किं भवति धनतृष्णावशगतः? ॥४॥

गुरोः पादं ध्यात्वा किमपि नवतेजो हृदि वहन्
महासिन्धुं तीर्त्वा निखिलजगतो धर्मसदसि ।

* उद्बोधनपत्रिकातः स्वत्वाधिकारिणामनुमतिक्रमेण त्रिषष्टिवर्षस्य प्रथमसंख्यातः संगृहीतम् ।

नवीनः संन्यासी विजितजयमाल्यो बहुमतो
विवेकानन्दोऽयं भुवनविजयी भारतनिधिः ॥५॥

अविद्याया वैरी श्रुतिविहितविद्यामधुकरः
सुखे चानासक्तः परमपदचिन्तास्थिरमतिः।
जगत्सेवामन्त्रैर्जगदधिपतेः पूजनपरो
विवेकानन्दोऽयं भुवि सुविरलो मानवगुरुः ॥६॥
दरिद्राणां बन्धुर्निखिलमनुजानां प्रियकरः
समो ज्ञाने कर्मण्यविचलितभक्त्यां गुरुपदे।
समः शत्रौ मित्रेऽप्रतिममहिमोद्दीप्ततपनो
विवेकानन्दो मे हृदयगगने भातु सततम् ॥७॥
अभयवरदमूर्नीः कालिका-विश्वधात्री-
चरणकमलसंस्थौ सारदारामकृष्णौ।
शरणगतविवेकानन्दसानन्दमूर्त्ती
भवभयहरदृश्यं पश्य रे मुग्धनेत्र! ॥८॥

इति श्रीकालीपदवन्द्योपाध्यायविरचितं श्रीश्रीविवेकानन्दाष्टकम्।

## विवेकानन्दजयगीतम् *

पुरानन्तध्वान्तैरुपहतशिवज्ञानविभवे
भवे नानामार्गैरिह समुदिते दूषणशते।
हितं तत्त्वं चेतुं शितमतिरगाद्यः प्रतिदिशं
नरेन्द्राख्यः सोऽसौ जयति विषयापास्तहृदयः ॥ १ ॥
ततो गत्वा गत्वा विविधमतमाश्रित्य भजतां
समीपे . सन्देहादनुपगतमुक्तिः कथमपि।

---

* उद्बोधनपत्रिकातः विवेकानन्दशतवार्षिकीसंख्यायाः संगृहीतम्।

श्रितो यः संसिद्धं द्विजमथ जहौ संशयमलं
विवेकानन्दोऽसौ जयति जडतामुक्तहृदयः ॥ २ ॥

तमेनं विश्वासाद् गुरुमकृतदृष्टार्थमवशः
स चाप्येनं मेने कुशलशरणं भारतभुवः ।
तदादेशाद्धर्मं प्रथयितुमगाद्यो परभुवं
विवेकानन्दोऽसौ जयति जनताजाड्यहरणः ॥ ३ ॥

गुरोराशीर्वादादसमनिजशक्तेरपि बलात्
प्रसादादाद्याया वरुणदिशि संसत्परिगतान् ।
क्षणेन व्याख्यानैरकृतपरिमुग्धान्मनसि यो
विवेकानन्दोऽसौ जयति जयहेतुर्जनिभुवः ॥ ४ ॥

ततः प्रत्यावृत्तो ह्यभयमयमन्त्रान्प्रतिदिशं
चितालस्यान्संजागरयितुमना भारतजनान् ।
य उच्चार्योदात्तं व्यघटयदमीषां भयचयं
विवेकानन्दोऽसौ जयति भयहृद्भारतभुवः ॥ ५ ॥

दिशन्सेवावृत्तिं परमहितहेतुं जनिमताम्
अनैषीद्यो निष्ठां दिशि दिशि च सेवाश्रमगणान् ।
सुसन्तानः श्रेयःप्रचयजननः सर्वजगतां
विवेकानन्दोऽसौ जयति तिमिरोत्पाततपनः ॥ ६ ॥

इति महामहोपाध्याय-श्रीकालीपदतर्काचार्येण विरचितं विवेकानन्दजयगीतं समाप्तम् ।

## श्रीविवेकानन्दप्रशस्तिः *

वर्षं भारतमार्षगौरवभरं लब्ध्वापि कालक्रमात्
स्वातंत्र्यापचयाद्विचाररुचिराचारप्रचारात्ययात् ।
दैन्यालस्यविलासदास्यमभजन्त्रासं च सञ्चारयत्
प्राच्याशामुखमन्धकारविधुरीकृत्येव दुःखं दधौ ॥ १ ॥

भ्रातृद्वेषमनैक्यशेषमभितो माहंमदाः सन्मदा-
दालोक्याखिलभारतं निजपदाधीनत्वमानिन्यिरे ।
श्वेतांगास्तदनन्तरं प्रहरणप्रावीण्यतो जित्वरा
विश्वग्रासकृतत्वरा भरतभूराज्येश्वरा रेजिरे ॥ २ ॥

प्रातः सूरसमः समस्तभुवनं सम्पूरयन्नोजसा
तत्कालोचितभावविग्रहधरः श्रीरामकृष्णोऽभवत् ।
हित्वा कांचनकामकांचनरुचिं देवीपदाब्जद्वये
मग्नोऽनग्नयतीन्द्रभातिरकृतश्रीसंभृतं भारतम् ॥ ३ ॥

तत्तेजोभरयोगसुन्दरतरः श्रीमान्नरेन्द्रः सुधीः
शुद्धः श्रीगुरुवैभवानुभवतो लब्ध्वा विवेकोदयम् ।
संन्यासव्रतमादधद्दिशिदिशि स्वाधीनचेताः परि-
भ्राम्यन्नैश्वरभावभास्वररसैरासिञ्चदाशाचयम् ॥ ४ ॥

आनन्दं च विवेकमण्डितमहो नामाक्षरं धारयन्
यः पाश्चात्यविपश्चितां मनसि चिद्रूपां द्युतिं दीपयन् ।
सप्तद्वीपवसुन्धरातलमधिश्रीभारतस्याद्भुतं
गौरं गौरवसङ्गतं शुभयशः प्राकाशयत्सन्ततम् ॥ ५ ॥

वेदान्ते च गुरौ दृढस्थितिरपि प्रोद्दामकर्मप्रियो
वैराग्येऽर्पितमर्मधर्मपरमो देशानुरागानुगः ।

---

* उद्बोधनपत्रिकातः 'विवेकानन्दशतवार्षिकी-संख्यायाः संगृहीता ।

वीरत्वे पुरुषोत्तमोऽपि न रुषा ध्वंसक्रियासाधकः
संघं संघटयन्नसौ विजयते संसारसङ्गच्युतः ॥ ६ ॥

यन्माहात्म्यहिमांशुराशुतिरयन्त्रासं तमोभावजं
प्राच्यानां परश्रृंखलस्खलनकृत्सन्धाय सत्साहसम् ।
स्वैरं कैरवकोरकायितजनस्वान्तं चकार स्फुटं
सोऽयं भारतगर्वपर्वतसमो जीयाद्विवेको यतिः ॥ ७ ॥

स्फूर्तिं मूर्तिमतीमिवाद्य मतिदां जाड्यापहां यद्गिरं
व्याप्तां सप्तसमुद्रपारगमनस्फारां जुषन्ते जनाः ।
आनन्दान्तविवेकनामरचयन्पृथ्वीतले सार्थकं
जीयाज्जीवगणैकजीवनसुधाश्रीधाम सोऽयं सुधीः ॥ ८ ॥

इति भट्टपल्लीनिवासि-श्रीश्रीजीवन्यायतीर्थभट्टाचार्येण विरचिता
श्रीविवेकानन्दप्रशस्तिः समाप्ता ।

## विवेकानन्दस्तोत्रम् *

यतिसङ्घप्रतिष्ठाता तच्छिरोमणिसत्तमः ।
रामकृष्णमहाशिष्यो नेता भुवि नरोत्तमः ।
त्वमेव हि नमस्तुभ्यं विवेकानन्द ते नमः ॥ १ ॥

दिगन्तव्याप्तसत्कीर्ती राष्ट्रोद्धारकमण्डनः ।
महाराजगुरुर्दण्डी भारतोत्कर्षसाधनः ।
त्वमेव हि नमस्तुभ्यं विवेकानन्द ते नमः ॥ २ ॥

ज्ञाननेत्रस्फुरत्कायो नाट्यगानसुपारगः ।
व्याख्यानपटुपूर्णज्ञः संन्यासी श्रेष्ठचिद्घनः ।
त्वमेव हि नमस्तुभ्यं विवेकानन्द ते नमः ॥ ३ ॥

---

* उद्बोधनपत्रिकातः विवेकानन्दशतवार्षिकीसंख्यायाः संगृहीतम् ।

तारुण्योज्ज्वलरम्यांगो वेदसिद्धान्तदर्शनः ।
विश्वव्यापकहृत्प्रेमा विशालज्ञानलोचनः ।
त्वत्तो न हि परः कोऽपि विवेकानन्द ते नमः ॥ ४ ॥

भवरोगमहावैद्यो वेदान्ताभयदायकः ।
मनोमलमहाशुद्धः कमलाक्षमहाशयः ।
त्वमेव हि नमस्तुभ्यं विवेकानन्द ते नमः ॥ ५ ॥

कलिदोषमहावह्निः साक्षाच्छिवविलोचनः ।
दिव्यचारित्र्यपूर्णश्च विवेकान्धजनाञ्जनः ।
त्वमेव हि नमस्तुभ्यं विवेकानन्द ते नमः ॥ ६ ॥

राजराजशिरोरत्ननिघृष्टचरणोत्पलः ।
महामतिर्महाभागो भूगर्भव्योमपारगः ।
त्वमेव हि नमस्तुभ्यं विवेकानन्द ते नमः ॥ ७ ॥

निर्विकल्पसमाधिस्थो विचारणविशारदः ।
चिन्मात्रदिव्यपूर्णाङ्गश्चरमोन्नतिदायकः ।
त्वमेव हि नमस्तुभ्यं विवेकानन्द ते नमः ॥ ८ ॥

भारतोद्धारसंत्यक्तसर्वसौख्यातिमानवः ।
धर्मग्लानिमहारात्रिप्रभातैकसुभावनः ।
त्वमेव हि महास्वामिन्विवेकानन्द ते नमः ॥ ९ ॥

सद्योजाताय ते स्वामिन् विश्वैककमलावले ।
नमस्तुभ्यं नमस्तुभ्यं विवेकानन्द ते नमः ॥१०॥

महावीर्यधरो राजा भूपानां यमिनां तथा ।
पराक्रमप्रभावेण जितेन्द्रियो महाबलः ।
त्वमेव हि नमस्तुभ्यं विवेकानन्द ते नमः ॥११॥

मुनीनां योगिनां चैव पराक्रातमहद्यशः ।
शब्दे परे च निष्णातः पारमार्थिकदेशिकः ।
त्वत्तो न हि परः कोऽपि विवेकानन्द ते नमः ॥१२॥

धर्मग्लान्यासुता भूमिः सगौरवकृता ह्रिया ।
त्वयैव रामकृष्णाब्जमधुपानधुरन्धरः ।
त्वत्तो न हि परः कोऽपि विवेकानन्द ते नमः ॥१३॥

यतिसङ्घमहोद्यानसुखसंचारकारिणे ।
नरेन्द्रनाथदत्ताय विवेकानन्दस्वामिने ।
त्वत्तो न हि परः कोऽपि विवेकानन्द ते नमः ॥१४॥

नमस्ते पूर्णप्रज्ञाय दिव्यत्यागमहात्मने ।
नरेन्द्रनाथदत्ताय विवेकानन्दस्वामिने ॥१५॥

इति स्वामिगुणातीतानन्दविरचितं विवेकानन्दस्तोत्रम् ।

—:-*-:—

# स्वामिविवेकानन्द-विरचित-स्तोत्रादीनि

## अम्बास्तोत्रम् ❀

का त्वं शुभे ! शिवकरे ! सुखदुःखहस्ते !
आघूर्णितं भवजलं प्रबलोर्मिभंगैः ।
शान्ति विधातुमिह किं बहुधा विभग्नां
मातः ! प्रयत्नपरमासि सदैव विश्वे ॥ १ ॥

सम्पादयन्त्यविरतं त्वविरामवृत्ता
या वै स्थिता कृतफले त्वकृतस्य नेत्री ।
सा मे भवत्वनुदिनं वरदा भवानी
जानाम्यहं ध्रुवमियं धृतकर्मपाशा ॥२॥

किं वा कृतं किमकृतं क्व कपाललेखः
किं कर्म वा फलमिहास्ति हि यां विना भोः ।
इच्छा गुणैर्नियमिता नियमः स्वतन्त्रै
र्यस्याः सदा भवतु सा शरणं ममाद्या ॥ ३ ॥

सन्तानयन्ति जलधिं जनिमृत्युजालं
सम्भावयन्त्यविकृतं विकृतं विभग्नम् ।
यस्या विभूतय इहामितशक्तिपालाः
नाश्रित्य तां वद कुतः शरणं व्रजामः ॥ ४॥

मित्रे रिपौ त्वविषमं तव पद्मनेत्रं
स्वस्थेऽसुखे त्ववितथस्तव हस्तपातः ।

---

❀ 'वीरवाणी'तः इदम् अम्बास्तोत्रं संगृहीतम् ।

छायामृतेस्तव दया त्वमृतं च मात-
मुञ्चन्तु मां न परमे शुभदृष्टयस्ते ॥ ५ ॥

काम्बा शिवा क गृणनं मम हीनबुद्धे-
र्दोर्भ्यां विधर्त्तुमिह यामि जगद्विधात्रीम् ।
चिन्त्यं श्रिया सुचरणं त्वभयप्रतिष्ठं
सेवापरैरभिनुतं शरणं प्रपद्ये ॥ ६ ॥

या मां चिराय विनयत्यतिदुःखमार्गै-
रासिद्धितः सकलितैर्ललितैर्विलासैः ।
या मे मतिं सुविदधे सततं धरण्यां
साम्बा शिवा मम गतिः सफलेऽफले वा ॥ ७ ॥

इति श्रीमत्स्वामिविवेकानन्दविरचितं 'अम्बास्तोत्रं' समाप्तम् ।

## शिवस्तोत्रम् *

ॐ नमः शिवाय ।

निखिलभुवनजन्मस्थेमभङ्गप्ररोहा
अकलितमहिमानः कल्पिता यत्र तस्मिन् ।
सुविमलगगनाभेशसंस्थेऽप्यनीशे
मम भवतु भवेऽस्मिन् भासुरो भावबन्धः ॥१॥

निहतनिखिलमोहेऽधीशता यत्र रूढा
प्रकटितपरमप्रेम्णा महादेवसंज्ञः ।
अशिथिलपरिरम्भः प्रेमरूपस्य यस्य
हृदि प्रणयति विश्वं व्याजमात्रं विभुत्वम् ॥२॥

---

* इदं स्तोत्रं 'वीरवाणी'-ग्रन्थाद् गृहीतम् ।

वहति विपुलवातः पूर्वसंस्काररूपः
विदलति बलवृन्दं घूर्णितेवोर्मिमाला ।
प्रचलति खलु युग्मं युष्मदस्मत्प्रतीतं
ह्यतिविकलितरूपं नौमि चित्तं शिवस्थम् ॥३॥

जनकजनितभावो वृत्तयः संस्कृताश्चा–
प्यगणनबहुरूपा यत्र चैको यथार्थः ।
शमितविकृतिवाते यत्र नान्तर्बहिश्च
तमहह ! हरमीडे चित्तवृत्तेर्निरोधम् ॥४॥

गलिततिमिरमालः शुभ्रतेजःप्रकाशो
धवलकमलशोभो ज्ञानपुञ्जाट्टहासः ।
यमिजनहृदिगम्यो निष्कलो ध्यायमानः
प्रणतमवतु मां मन्मानसो राजहंसः ॥५॥

दुरितदलनदक्षं दक्षजादत्तदोषं
कलितकलिकलङ्कं कम्रकह्लारकान्तम् ।
परहितकरणाय प्राणविच्छेदसूत्कं
नतनयननियुक्तं नीलकण्ठं नमामः ॥६॥

## संन्यासिनः गीतिः *

दूरादैहिकरूपशून्यगिरितः प्रोत्थं घनारण्यतो,
शान्तं यद्धनकामकीर्तिभिरपि व्याहन्यतेऽव्यापिनो ।
सत्यं ज्ञानसुखप्रवाहसहितं, नित्यं यदुच्चस्वरै-
र्गीतं तन्ननु गीयतां स्थिरयते ! ॐतत्सदोमित्यदः ॥ १ ॥

---

* 'वीरवाणी' प्रकाशकानामनुमत्या संगृहीता ।

आतर्नाशय बन्धकं स्वनिगडं हैमं भवेद्वायसं
प्रेमेर्षासदसत्स्वरूपमखिलं द्वन्द्वं परित्यज्यताम्।
दासौ पूजितदण्डितावपि समौ यत्कांचनं बन्धनं
स्थेयो धीरयतेऽस्ति गायतु भवानोंतत्सदोमित्यदः ॥ २ ॥

या त्वज्ञानमरीचिकान्धतमसं संवर्धयन्ती भृशं
मृत्योर्मृत्युमभीक्ष्णमानयति या तामैहिकेहां त्यजेः।
'विश्वं जेतुमलं कृतात्मविजयो' जानन्निदं दुःखितो
मा भूर्धीरयतेऽद्य गायतु भवानोंतत्सदोमित्यदः ॥३॥

"भोग्यं कर्मफलं" ब्रुवन्ति नियतं कार्यं निदानात्सतः
हेतोः सत्फलमेत्यसत्तदसतो, बाधो न विध्याश्रयः।
रूपं बन्धनवत् तथापि नितरां त्वं नामरूपातिगो
मुक्तात्मा, ननु गीयतां स्थिरयते ! ॐ तत्सदोमित्यदः ॥४॥

यन्मित्रं जननी पिताथ तनयस्तत्स्वप्नतुल्यं वृथा
माता कस्य सुतोऽथ मित्रमथवाऽलिङ्गः स एकोऽस्ति चेत्।
सर्वः सर्वगतः स एव न परं किञ्चित्ततो विद्यते
सत्त्वं धीरयतेऽसि, गायतु भवानोंतत्सदोमित्यदः ॥५॥

एको लाञ्छननामरूपरहितो मुक्तस्तथा चिन्मयो
माया यं समुपाश्रितावसृजति स्वप्नेन तुल्यं जगत्।
साक्षी सत्त्रिगुणात्मकप्रकृतिवद्रूपेण संलक्ष्यते
स त्वं धीरयतेऽसि, गायतु भवानोंतत्सदोमित्यदः ॥६॥

भ्रातर्मुक्तिमिमां क्व वा मृगयसे ? नायं न लोकोऽपर-
स्तद्दाता न च लभ्यतेऽत्र भवता शास्त्रे तथा मन्दिरे।
हस्तेनाकलिता त्वयैव रशना याकर्षति त्वामिमां
त्यक्त्वा धीरयतेऽथ गायतु भवानोंतत्सदोमित्यदः ॥७॥

ब्रूयाः स्वस्तिवचः समस्तजगते मत्तो न किंचिद्भयथा
भूयात्प्राणिषु तुंगनीचसमनुस्यूतोऽस्मि नित्यं विभुः ।
आशा साध्वसनाकमृत्युनिरयावल्यामनास्थो गलद्-
बन्धो धीरयतेऽथ गायतु भवानोंतत्सदोमित्यदः ॥८॥

कीदृग्गच्छति जीवने तव तनुर्मा चिन्तितो भूः सुहृत्
कामं कर्मवशादियं विचरतु, स्यास्तुल्यनिन्दास्तुतिः ।
एकत्वे सति कोऽस्तु पूजकजनः पूज्योऽथवा निन्दकः
शान्तो धीरयतेऽद्य गायतु भवानोंतत्सदोमित्यदः ॥९॥

लोभे लाभविलासकीर्तिकलिते सत्यं कुतो लभ्यते
नारीं पश्यति यः कलत्रमिति स प्राप्नोति किं पूर्णताम् ? ।
मर्त्यः क्रोधममत्वयुग्मवशगो मुक्तो न मायाभयात्
त्यक्त्वैतन्ननु गीयतां स्थिरयते ! ॐ तत्सदोमित्यदः ॥१०॥

वर्तस्वेह निराश्रयस्तव निवासार्हं न किञ्चित्सखे !
आकाशं पटलं तृणं च शयनं भक्ष्यं तथा याचितम् ।
अन्नं पानमदूषणं किल भवेदात्मज्ञ ! यत्प्राप्यते
यान्स्वाधीनधुनीव गायतु यते ! ॐ तत्सदोमित्यदः ॥११॥

द्वित्रा एव भवन्ति तत्त्वनिरता अन्ये द्विषन्तो हस-
न्त्येतान्प्रापय भासमन्धतमसात्प्रोद्धृत्य मायावृतेः ।
देशाद्देशमवाप्य दुःखसुखयोस्तुल्यः स्वतन्त्रो भ्रमन्
गीतं धीरयतेऽद्य गायतु भवानोंतत्सदोमित्यदः ॥१२॥

कालेनोद्भवकर्मबन्धनबलादात्मा विमुक्तो भवे-
न्नोत्पत्तिर्न भवान्न चाहमथवा मर्त्यो न वापीश्वरः ।
जातः 'सर्वमहं' तथा'खिल'महं स्वानन्दसान्द्रो विभु-
र्जानन् तत्त्वमसी'ति गायतु यते ॐ तत्सदोमित्यदः ॥१३॥

## स्वामिविवेकानन्दरचिता "संन्यासिनः गीतिः"

( शराङ्कवसुचन्द्रवर्षे, जुलाई मासे, सहस्रद्वीपोद्याने विरचिता )

साहित्याचार्य-अध्यापक-एम० ए०-भण्डारकरोपाह्व-त्र्यम्बकशर्मणा संस्कृतश्लोकेषु अनूदिता ॥

## जीवन्मुक्तगीतिः *

( शराङ्कवसुचन्द्रवर्षे फेब्रुअरीमासस्य पञ्चदशदिने न्यूयार्क-नगरे रचिता )

चेत्ताडितोऽस्ति भुजगः कुरुते फणां स्वां
वह्निर्ज्वलत्यतितरां चलितेन्धनः सन् ।
व्योमान्तरं च भवति प्रतिनादयुक्तं
मर्माहताकुपितकेसरिगर्जितेन—॥१॥

विद्युद्विदारितहृदम्बुदराजिरम्भः-
पूरेण पूरिततलां जगतीं विधत्ते ।
पर्याकुलं भवति चेन्नितरां तवान्त-
स्तत्त्वं ध्रुवं प्रकटयन्ति महन्महान्तः ॥२॥

म्लानं मनो भवतु, मन्दतरा च दृष्टिः,
प्रेम प्रतारकमथाफलमस्तु सख्यम् ।
आपच्छतं क्षिपतु दैवगतिः स्वकीयं
सान्द्रं तमोऽप्यवरुणद्धु समृद्धिमार्गम्—॥३॥

कोपाहितभ्रुकुटिभङ्गपदं विहन्तुं
कुर्याद्यदि प्रकृतिरद्य न विस्मरेस्त्वम् ।
दिव्योऽसि याहि सुहृदग्रत एव नित्यं
नो वामदक्षिणदिशौ पुरतस्तु लक्ष्यम् ॥४॥

---

* 'वीरवाणी'-प्रकाशकानामनुमत्या संगृहीता ।

देवोऽपि नास्मि मनुजो न पशुस्तथाहं
नारी न चास्मि च पुमान्न मनः शरीरम् ।
शास्त्राणि विस्मयपराणि मम स्वरूपं
नालं प्रकाशयितुमद्य यतोऽस्मि सोहम् ॥५॥

पूर्वं दिवाकरनिशाकरजन्मतोऽपि
प्राग्धूमकेतुगणतारकवृन्दसूतेः ।
दिक्कालयोरपि यदा न जनिस्तदानो-
मासं तथा'ह'मधुना भविता च नित्यम् ॥६॥

भूः शोभना, किरणभास्वरभास्करोऽपि
चन्द्रः प्रकाशमधुरो वियदुज्ज्वलं च ।
हेतोरधीनमखिलं विचरत्यभीक्ष्णं
बन्धेन जीवति पुनर्विलयं प्रयाति—॥७॥

विस्तार्य कञ्चुकमिव स्वमसत्यजालं
तेषामुपर्यथ च तानि दृढं गृहीत्वा ।
भूःस्वर्गलोकनिरयान्सदसच्च चित्तं
चित्रं सदा वयति नैकविचारसूत्रैः ! ॥८॥

दिक्कालकार्यकरणादिकमेव सर्वं
जानीहि मित्र ! बहिरावरणं न सत्यम् ।
अस्मीन्द्रियादपि परो मनसो विचाराद्
द्रष्टाखिलस्य जगतः खलु साक्षिरूपः ॥९॥

द्वैतं बहुत्वमसदस्ति सदेकमेवं
मय्येव विश्वमखिलं ह्यहमेव सर्वम् ।
द्वेषो न चास्ति मयि नापि विभिन्नभावो
मत्तो यतोऽस्ति न परं प्रियतामयोऽहम् ॥१०॥

स्वप्नं त्यजेस्त्वमिह बन्धनमुक्तिहेतोः
गूढं निबोध तव नास्ति भयावकाशः ।
छाया ममैव किमु साध्वसकारणं स्यात् ?
'सोऽहं' न चान्यदिति चिन्तय नित्यमेव ॥११॥

स्वामिविवेकानन्दरचिता ( The Song of the Free ) जीवन्मुक्तगीतिः साहित्याचार्य-एम० ए०-अध्यापक-भण्डारकरोपाह्वत्र्यम्बक-शर्मणा संस्कृतश्लोकेषु अनूदिता ।

—:-०-:—

# विविधवेदगताः शान्तिपाठाः

इमे ओजोगाम्भीर्यगुण-परिपूर्णाः शान्तिपाठाः श्रीविवेकानन्द-स्वामिनः अत्यन्तप्रियाः आसन्। स्वामी एतान् पाठान् न केवलं स्वयं मधुरस्वरेण गायति स्म, अपि तु अन्यानपि भक्तगणानश्रावयत्।

## शुक्लयजुर्वेदीयः शान्तिपाठः—

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

ॐ शान्तिः शान्तिः शान्तिः।

## कृष्णयजुर्वेदीयः शान्तिपाठः—

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै। तेजस्वि-नावधीतमस्तु मा विद्विषावहै॥

ॐ शान्तिः शान्तिः शान्तिः।

ॐ शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। अवतु माम्। अवतु वक्तारम्।

ॐ शान्तिः शान्तिः शान्तिः।

## ऋग्वेदीयः शान्तिपाठः—

ॐ वाङ्‌ मे मनसि प्रतिष्ठिता। मनो मे वाचि प्रतिष्ठितम्।

आविरावीर्म एधि। वेदस्य म आणीस्थः। श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्संदधामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्। अवतु वक्तारम्।

ॐ शान्तिः शान्तिः शान्तिः।

## सामवेदीयः शान्तिपाठः—

ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथ बलमिन्द्रियाणि च सर्वाणि। सर्वं ब्रह्मोपनिषदम्। माहं ब्रह्म निराकुर्याम्। मा मा ब्रह्म निराकरोदनिराकरणमस्तु, अनिराकरणं मेऽस्तु। तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु, ते मयि सन्तु।

ॐ शान्तिः शान्तिः शान्तिः।

## अथर्ववेदीयः शान्तिपाठः—

ॐ भद्रं कर्णेभिः शृणुयाम देवाः। भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः। स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥

ॐ शान्तिः शान्तिः शान्तिः।

ॐ श्रीरामकृष्णार्पणमस्तु

हरिः ॐ तत् सत् ॐ

—:*:—

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| सम्मुके | सम्मुखे | २ | ३ |
| नैजामा | नैजीमा | ३ | २३ |
| विशेषषो | विशेषतो | ६ | २ |
| स्वगतं | स्वागतं | ६ | १० |
| निगतः | निर्गतः | १० | १५ |
| एताद्वदेव | एतावदेव | १२ | २४ |
| चक्षषः | चक्षुषः | १४ | १० |
| भाषां | भाषा | १६ | ४ |
| भाषा | भाषां | १६ | ६ |
| युष्याभिः | युष्माभिः | १७ | २४ |
| सहृद्वात्सल्यं | सुहृद्वात्सल्यं | १८ | १० |
| चतुर्विशति | चतुर्विंशति | १८ | २४ |
| निर्भत्सनेनैव | निर्भर्त्सनेनैव | १९ | ७ |
| कुटुवाक्यानि | कटुवाक्यानि | २५ | १५ |
| स्वीथां | स्वीयां | २५ | १८ |
| मसीत् | मासीत् | २५ | २३ |
| पमार्ग | पमार्गे | २५ | २५ |
| रौदर्येण | रौदार्येण | २६ | १ |
| एतन | एतेन | २८ | ४ |
| सगुणब्राह्मण | सगुणब्रह्मण | २८ | ६ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| संसारिकी | सांसारिकी | २८ | १५ |
| जागतिका | जागतिक्य | ३३ | ११ |
| अनन्तर | अनन्तरं | ४० | १४ |
| पूववत् | पूर्ववत् | ४४ | १५ |
| निबिभर्ति | निर्बिभर्ति | ४६ | १६ |
| मभूत् | मन्वभूत् | ४६ | २२ |
| कस्मिश्चित् | कस्मिंश्चित् | ५० | ४ |
| नाधिगम्यन्त | नाध्यगम्यन्त | ६० | १४ |
| कदाचिदऽसौ | कदाचिदसौ | ६९ | ३ |
| ग्रीवाग्रा हं | गीवाग्राहं | ८१ | १४ |
| प्रतीको । द्वैत | प्रतीको द्वैत | ८४ | ८ |
| नाथस्तम्भितो | नाथः स्तम्भितो | ८७ | ४ |
| प्रारभाताम् | प्रारप्साताम् | ८८ | ६ |
| व्थाकुलता | व्याकुलता | ९१ | १२ |
| संन्थासी | संन्यासी | १०१ | ६ |
| प्रम्णो | प्रेम्णो | १०१ | १२ |
| व्याप्तोऽभवेत् | व्याप्तोऽभवत् | १०२ | २४ |
| भङ्गिमत्वप्रसार | भङ्गिमप्रसार | १०४ | १५ |
| एतद् व्यतिरिक्तम् | एतद्व्यतिरिक्तम् | १०८ | २१ |
| सेवा | सेवां | ११५ | ९ |
| डुयितुं | डुयितुं | ११८ | २३ |
| ब्रह्मानन्दः | ब्रह्मानन्दः | १२१ | १८ |
| सभ्यक् | सम्यक् | १२४ | १२ |
| यीऽव्यक्त | योऽव्यक्त | १२६ | २१ |
| भ्राभ्यति | भ्राम्यति | १३० | ४ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
| --- | --- | --- | --- |
| तमवता | तद्वता | १३० | १८ |
| सम्भवेतू | सम्भवेत् | १३५ | २० |
| द्शंन | दर्शन | १३७ | ४ |
| स्म । | स्मः । | १३९ | २६ |
| प्रिथतं | प्रथितं | १४० | १२ |
| स्वामीमहोदयः | स्वामिमहोदयः | १४७ | २२ |
| तद्धहस्ते | तद्धस्ते | १४७ | २३ |
| परावर्त्यं | परावृत्य | १५० | ३ |
| मठस्येकस्मिन् | मठस्यैकस्मिन् | १५३ | १८ |
| अवस्यमेव | अवश्यमेव | १५६ | १५ |
| महाराज | महाराजो | १५८ | १३ |
| त्रिवाङ्करे | त्रिवाङ्कुरे | १६२ | २१ |
| मकार्षीत् | मक्काक्षीत् | १६३ | ४ |
| शश्राव | शुश्राव | ,, | २६ |
| परशता | परश्शता | १६४ | ७ |
| मुद्यु ंक्त | मुदयुङ्क्त | १७६ | २२ |
| पथपार्श्वं | पथिपार्श्वं | १८४ | १४ |
| वक्तर्ता | वक्तृतां | १८७ | १७ |
| मघोषयत् | मघोषयन् | १९२ | ७ |
| यत्किश्चिद् | यत्किञ्चित् | २०१ | ५ |
| सर्वे | सर्वाः | २०१ | २६ |
| सृष्टौः | सृष्टौ | २०२ | ४ |
| प्रधनि | प्रधान | २०६ | २ |
| मानमोय | माननीय | २१४ | १२ |
| विभ्रति | बिभ्रति | २१५ | १७ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| मलके | मूलके | २१७ | १५ |
| किमि | किमपि | २२१ | १२ |
| त सां | तासां | ,, | २२ |
| प्राभावः | प्रभावः | २२२ | १४ |
| चत्वाशिंत् | चत्वारिंशत् | २२३ | २३ |
| वाधक्य | वार्धक्य | २२८ | ६ |
| उष्ट्राणा | उष्ट्राणां | २३८ | ८ |
| कोऽपि | कापि | २४० | ५ |
| दरिद्रजानां | दरिद्रजनानां | २४६ | ६ |
| सवृत्तं | संवृत्तं | २५१ | २४ |
| साऽभाषत | सोऽभाषत | २६१ | ३ |
| प्रावृत्तः | प्रवृत्तः | २६२ | १४ |
| वाषिक | वार्षिक | २६४ | ११ |
| भाजनं | भोजनं | २६६ | १७ |
| बङ्गला | बङ्गला | २६८ | ४ |
| शरचन्द्र | शरच्चन्द्र | २७२ | १ |
| मनुष्य | मनुष्यः | २७२ | २६ |
| ससारं | संसारं | २७५ | ८ |
| समद्रं | समुद्रं | २७६ | ११ |
| आयोजिते | आयोजितायां | २७७ | ७ |
| परेद्यरेव | परेद्युरेव | २८१ | १ |
| माहार्यम् | महार्यम् | २८३ | ५ |
| रूपेणेव | रूपेणैव | २८४ | ७ |
| क्षद्रघण्टां | क्षुद्रघण्टां | २८४ | १३ |
| पयधापयत् | पर्यधापयत् | २८४ | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| गठना | घटना | २९१ | १७ |
| जानवारी | जनवरी | २९६ | ५ |
| भ्रमन् | भ्रमता | २९८ | १८ |
| तत्यज | तत्याज | २९८ | २५ |
| प्रष्टं | प्रष्टुं | २९९ | १० |
| यताम् | र्यताम् | ३०२ | ८ |
| समवबोध | समवबोधो | ३०२ | २५ |
| सभाधिशनं | सभाधिवेशनं | ३०५ | १५ |
| सामर्ति | समिर्ति | ३०५ | २५ |
| स्वमि | स्वामि | ३०६ | ५ |
| सज्ज्नः | सज्जनः | ३२० | २ |
| गुंरुक्तता | गुंरूक्तता | ३२३ | ६ |
| वंचनं | वचनं | ३२७ | ६ |
| त्मिकता | त्मिकतां | ३२७ | १७ |
| गन्तुामव | गन्तुमिव | ३३१ | २ |
| प्रचण्डदल | प्रचण्डानल | ३३४ | ८ |
| भक्तिनिरन्तर | भक्तिर्निरन्तर | ३३६ | २ |
| मान्दिरे | मन्दिरे | ३३६ | १३ |
| सिद्धये | सिद्ध्ये | ३३९ | १ |
| ध्रुवम् | ध्रुवम् | ३४१ | ८ |
| दिव्यषि | दिव्यर्षि | ३४२ | ८ |
| पितुवियोगात् | पितुर्वियोगात् | ३४५ | ६ |
| लवणोदनेन | लवणौदनेन | ३४८ | २० |
| पश्यन्तुहिना | पश्यंस्तुहिना | ३४९ | १७ |
| यतिर्पदाति | यतिः पदातिः | ३५० | ८ |
| सविस्मितो | सुविस्मितो | ३५४ | ३ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| सम्बोधयन्तैः | सम्बोधयंस्तैः | ३५४ | १९ |
| ब्रवन्ते | ब्रुवंस्ते | ३५५ | १८ |
| परिश्रेमेण | परिश्रमेण | ३५८ | २७ |
| शुद्धभावा | शुद्धभावां | ३६४ | ४ |
| मलिना | मलिनां | ३६४ | ५ |
| भाषिता | भासिता | ३६४ | १७ |
| तब्दुद्धे | तद्बुद्धे | ३६६ | १६ |
| मुत्तकण्ठं | मुक्तकण्ठं | ३६७ | २६ |
| भगवन्त | भगवंस्त | ३७५ | ४ |
| मभजन्त्रासं | मभजत्त्रासं | ३८० | ४ |

—:*:—

